# साङ्ख्यसूत्रम् ।

अनिरुद्धकृतवृत्तिसहितम् ।

महामहोपाध्याय-
श्रीप्रमथनाथतर्कभूषणकृतटीकासहितञ्च ।

पण्डितकुलपति बि, ए, उपाधिधारि-
श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्यात्मजाभ्यां
पण्डित-श्रीआशुबोध-विद्याभूषण-पण्डित-श्रीनित्यबोध-
विद्यारत्नाभ्यां संस्कृतं प्रकाशितञ्च ।

चतुर्थसंस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे
मुद्रितम् ।

इं १९३५ ।

 सपादराजतमुद्रार्घम् ।

प्रकाशक—पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान—२न०, रमानाथ मजुमदार ष्ट्रीट, आमहर्ष्ट
ष्ट्रीट पोष्ट-अफिस। कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।
२ न०, रमानाथ मजुमदार ष्ट्रीट, कलिकाता।

# भूमिका।

साङ्ख्यसूत्राणां महर्षिकपिलाचार्य्येण विरचितत्वेन प्रसिद्धानां व्याख्याग्रन्थेषु साम्प्रतं त्रीण्येव पुस्तकानि समुपलभ्यन्ते ; अनिरुद्ध-वृत्तिः, विज्ञानभिक्षुकृतप्रवचनभाष्यं, वेदान्तिमहादेवकृतटीका चेति। तत्रानिरुद्धवृत्तिरेव प्राचीनतमा इति प्रत्नतत्त्वविदः प्रायेण मन्यन्ते। ते किल एतस्य मतस्य व्यवस्थापनाय यानि प्रमाणानि प्रदर्शितवन्तः, प्रयत्यते चाधुना मया तेषां स्वरूपप्रदर्शनाय।—

"दृष्ट्वाऽनिरुद्धवृत्तिं बुद्ध्वा साङ्ख्यीयसिद्धान्तम्।
विरचयति वृत्तिसारं वेदान्त्यादिर्महादेवः"॥

इति वेदान्तिमहादेवस्य स्ववचसैवतावत् अनिरुद्धवृत्तेः तत्कृत-टीकाग्रन्थतः प्राचीनतरत्वं निःसन्दिग्धं प्रतिपाद्यते इति नात्रा-धिकं वक्तव्यमपेक्षितमस्ति।

यदि च प्रवचनभाष्यकारेण विज्ञानभिक्षुणा स्वकृतौ अनि-रुद्धस्य नाम नोदलेखि, तथाऽपि तेन स्वरचितभाष्ये "प्रकृति-निबन्धना चेदिति पाठे"(१।१६१) इति "असम्बन्धात् साक्षित्वम् इति पाठे" (५।८२) इति "इतरवियोगवर्ज्जित पाठे" (३।५०) इति च तत्र तत्र वदता आत्मनोऽनिरुद्धवृत्तिज्ञानपरिचयः प्रकटीकृत इति अनुमीयते ; यतस्तथाविधानामेव पाठानाम् अनिरुद्धेन वृत्तौ व्याख्यानं दृश्यते। अन्यच्च, प्रवचनभाष्ये प्रथमा-ध्यायस्य एकोनविंशसूत्रस्य, द्वितीयाध्यायस्य षट्चत्वारिंशत्तम-सूत्रस्य, तथा पञ्चमाध्यायस्य शततमसूत्रस्य च व्याख्यानावसरे 'कश्चित्' इत्यनेन यस्य सूत्रव्याख्याकृतः समुल्लेखः कृतः विज्ञान-भिक्षुणा, स खलु अनिरुद्ध एवेति तत्कृततत्तत्सूत्रव्याख्यान-

पर्य्यालोचनेन सुस्पष्टमवगम्यते एवेति। अपरञ्च—"न वाह्य-बुद्धिनियम इत्यंशस्य पृथक्-सूत्रत्वेऽपि सूत्रद्वयमेकीकृत्य इत्थमेव व्याख्येयं, सूत्रभेदस्तु दैर्घ्यभयात्" इति पञ्चमाध्यायस्य एक-विंशत्यधिकशततमसूत्रव्याख्यानावसरे वदता प्रवचनभाष्य-कृता अनिरुद्धकृतव्याख्यासूचिततत्सूत्रद्वयम् एव मनसि आरोपितमित्यपि सुधीभिर्निपुणमूहनीयमिति।

अयं चानिरुद्धः तत्त्वकौमुदीकारात् वाचस्पतिमिश्रात् सर्व-दर्शनसङ्ग्रहकृतः सायणमाधवाचार्य्याच्च अर्वाचीन इत्यपि तट्टीकाधृततत्त्वकौमुदी-सर्वदर्शनसङ्ग्रहपङ्क्तिविशेषदर्शनेन अनु-मीयते। तथा हि—"दृष्टञ्च अभिव्यक्तिः पीड़नेन तिलेषु तैलस्य" इत्यादि सन्दर्भः तत्त्वकौमुदीस्थः प्रथमाध्यायस्य विंशत्य-धिकशततमसूत्रव्याख्यानावसरे अनिरुद्धेन समुद्धृतः, एवं प्रथमा-ध्यायस्य चतुस्त्रिंशदधिकशततमसूत्रव्याख्यानावसरे तेन "न चायमसिद्धो हेतुः अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य" इति "तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तम्" इति च माधवीय-सर्वदर्शनसङ्ग्रहस्य बौद्धदर्शनलेख एव अविकलमुद्धृत इति विस्पष्टमवसीयते। इत्येवं निर्णीयते खलु अस्य अर्वाचीनत्वं वाचस्पतिमिश्रात् माधवाचार्य्याच्च। तदेवं स्थिते विज्ञानभिक्षु-माधवाचार्य्ययोरन्तरालकालवर्त्ती अयम् अनिरुद्धः सम्भाव्यते खीष्टीयपञ्चदशशताब्दीयांशविशेषे स्वजन्मना समलङ्कृतवान् भारतवर्षस्य कमपि प्रदेशमिति प्रत्नतत्त्वविदाम् अनुमानरीतिः सर्वथैव समुपैष्यति विद्वज्जनसम्मतिमिति नात्र बहु वक्तव्य-मस्ति।

अनिरुद्धः परिणामवादं विवर्त्तवादम् आरम्भवादं वा अव-लम्ब्य साङ्ख्यदर्शनस्यास्य व्याख्यां कर्त्तुं प्रवृत्त इति प्रयतमाने-नापि मया न सम्यगवधारयितुम् अपारि। परिणामवादे

चास्यासीत् श्रद्धाऽतिशय इति तु निरणाय्येव, इति तत्र तत्र आरम्भ-विवर्त्तवादपक्षपातिनीम् अपि तदुक्तिं वृत्तिव्याख्यानावसरे परिणामवादाविरोधित्वेन सङ्गमयितुं कृतो मया यथामति प्रयासः, तस्य च प्रयासस्य सार्थक्यं वैयर्थ्यं वेति परेषां दोष-भारावक्षाशीला गुणलेशग्रहणपक्षपाताः सुधियः सन्त एव विचारयन्तु, क्षाम्यन्तु च ते एतादृशदुरूहग्रन्थव्याख्यानप्रसङ्गे सम्भाव्यमानां ममानेकशः त्रुटिपरम्परां करुणयेति सविनयं विनिवेदनम् ।

श्रीप्रमथनाथतर्कभूषणशर्मणः ।



# साङ्ख्यसूत्रवृत्तिः ।

## प्रथमोऽध्यायः ।

विनायकं नमस्कृत्य विष्णुं सूर्य्यं सरस्वतीम् ।
लक्ष्मीं गङ्गां महेशानं वृत्तिं कर्त्तुं समारभे ॥

पुरुषः खलु वैराग्यात् मोक्षशास्त्रे प्रवर्त्तते । वैराग्यं च द्वेधा स्यात्, शोकादिना, जन्मान्तरीयदुरितक्षयात् वा । तथा च श्रुतिः,—"यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति [ जावाल॰

---

टीकाकृन्मङ्गलाचरणम् ।

विश्वोद्भवस्थितिलयैकनिदानभूतं
सर्वेश्वरं सकलदुःखविनाशहेतुम् ।
मायामयं विगतमायममायसेव्यं
सर्वात्मना शिवमहं शरणं प्रपद्ये ॥

शिष्टाचारपरम्पराप्राप्तं प्रारिप्सितपरिसमाप्तिप्रतिबन्धकीभूतदुरदृष्टप्रशमनाय कृतं मङ्गलं ग्रन्थादौ निबध्नाति—विनायकमित्यादि ।

शास्त्रारम्भप्रयोजनं प्रकटीकुर्वन्नाह, पुरुष इति ।—खलु—निश्चये । मोक्षशास्त्रे प्रवर्त्तते इति ।—प्रवृत्तिरत्र तत्पाठे तदर्थानुष्ठाने च ज्ञेया । वैराग्यस्य द्वैविध्यं प्रकटयन्नाह, वैराग्यञ्च द्वेधा इति ।—तत्र द्वितीयः प्रकारः प्रकृते उपयुज्यते, शोकादिजन्यस्य वैराग्यस्य कालवशेन पुनरुदीयमानभोगासक्त्यादिना च प्रायशो निवृत्तिदर्शनात् । अत्र दुरिते "जन्मान्तरीय" इति विशेषणं सञ्चितदुरितपरमिति ज्ञेयं, प्रारब्धस्य भोगमन्तरेण क्षयायोगात् । तानि च दुरितानि प्रायश्चित्तेन तीर्थदर्शनादिना भगवदाराधनेन वा नश्यन्ति इत्यवधेयम् । पुनरपि तद्वैराग्यं द्विधा विभजनीयं, परमपरञ्चेति । अपरस्य वैराग्यस्य द्वैविध्यं प्रदर्श्य तस्य प्रव्रज्याद्वारेण परवैराग्यहेतुत्वं प्रकटयितुमाह, तथा चेति ।—श्रुतिः,—जाबालश्रुतिः ; मोक्षशास्त्रे प्रवृत्तिं प्रति वैराग्यस्य उपयोगित्वम् अनया

उप० ४ मन्त्रः ]। शास्त्रे प्रवृत्तश्च परवैराग्यात् मुच्यते; तथा चाह पतञ्जलिः,—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" [ समा० पा० १५ सूत्रम् ] "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" [ समा० पा० १६ सूत्रम् ] इति। एतदेव परवैराग्यं वक्तुं परमकारुणिकः महामुनिः जगदुद्दिधीर्षुः कपिलो मोक्षशास्त्रमारभमाणः प्रथमं सूत्रं चकार,—

---

श्रुत्या प्रतिपादितं भवतीति ज्ञेयम्। शास्त्रे प्रवृत्त इति।—अपरवैराग्येण शास्त्रार्थमधिगम्य तद्दर्शन सन्न्यासाश्रमप्रविष्ट इति तात्पर्य्यम्। पुरुषः खलु अपरवैराग्येण प्रथमतः त्रिविधदुःखात्यन्तनिवृत्तिहेतुभूतं शास्त्रं साङ्ख्ययोगात्मकम् अध्येतुं प्रवर्त्तते; ततः तदर्थमधिगम्य चित्तशुद्धिमन्तरेण मोक्षसाक्षाद्धेतुभूतायाः विवेकख्यातेः उदयासम्भवं पर्य्यालोच्य तदर्थं प्रव्रज्याश्रममङ्गीकरोति। प्रव्रज्याश्रमस्य च रागद्वेषात्मिकायाः अशुद्धेः विध्वंसनद्वारा चित्तशुद्धौ उपयोगः इत्यनया रीत्या मोक्षं प्रति अपरवैराग्यस्यापि चास्ति उपयोगः, एतदेव च प्रपञ्चितं वृत्तिकृता "शास्त्रे प्रवृत्तश्च परवैराग्यात् मुच्यते" इति वदता। परवैराग्यस्य स्वरूपं प्रदर्शयितुं भगवतः पतञ्जलेः लक्षणद्वयम् उदाहरति, दृष्टेति।—दृष्टाः,—ऐहिकाः, अन्नपानादिरूपा इत्यर्थः, आनुश्रविकाः,—श्रुतिमात्रसमधिगम्याः, स्वर्गादिलक्षणाः ये विषयाः, तेभ्यः वितृष्णस्य यद्वैराग्यं भवति तस्य वशीकारसंज्ञेति नाम। तस्यैतस्य च वैराग्यस्य फलभूतं चित्तप्रसादमात्रमधिगम्य परं वैराग्यं सूत्रयामास, तत्परमिति।—तत्परं—तस्मात्, वशीकारसंज्ञाऽपरनाम्नः वैराग्यात्, परम् अनन्तरं, पुरुषख्यातेः,—पुरुषदर्शनाभ्यासादित्यर्थः, गुणवैतृष्ण्यम्—गुणेभ्यः यत् वैतृष्ण्यं तदेव फलभूतं वैराग्यमिति विज्ञेयम्। गुणपदेनात्र सर्व एव व्यक्ताव्यक्तधर्माः तदुपाधिकाश्च सत्त्वरजस्तमोनामानः साङ्ख्यमतप्रसिद्धाः गुणाः गृह्यन्ते। एतदेव परवैराग्यमिति।—वैराग्यस्य हेतुभूतं यद्विज्ञानं तस्य विषयाः ये अव्यक्तादिमहाभूतान्ताः तेषां स्वरूपप्रकटनद्वारैव परवैराग्यस्य निर्वचनं सुकरमिति मन्वानः अतिकारुणिकः महामुनिः कपिलः शास्त्रमिदं प्रणीतवान्; अथवा,—परं वैराग्यं यस्मादिति बहुव्रीहिमाश्रित्य परवैराग्यपदस्य विवेकज्ञानमेव तात्पर्य्यार्थः इति कल्पनीयम्; तथा च अस्मिन् शास्त्रे प्राधान्येन व्यक्ताव्यक्तात्मिकायाः प्रकृतेरेव स्वरूपं प्रपञ्चितम्; प्रकृतिस्वरूपज्ञानेन तद्दोषदर्शनपरः पुरुषः तां प्रति विरज्यते, विरक्तश्च तस्याः संसारहेतुभूतस्वाभाविकाविवेकनिवृत्तिद्वारेण

**अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥१॥**

अथेत्ययं मङ्गलार्थः, न तु कर्मानन्तर्य्यार्थः, "यदहरेव" इत्यादिश्रुतेरानन्तर्य्यस्य अप्रयोजनत्वात्। कर्मारम्भे च मङ्गलकरणं न्याय्यम्; अथशब्दस्य मङ्गलवाचको दृश्यते,—

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मात् माङ्गलिकावुभौ" ॥ इति ।

त्रिविधदुःखेति ।—शारीरमानसिकयोः आध्यात्मिकत्वेन सङ्ग्रहणादेकत्वम्। आधिभौतिकं—पशुपक्ष्यादिजनितम्। आधि-

पुरुषः स्वरूपमापद्यते, अनात्मभ्रमं वा साकल्येन विजहाति इत्यतो यथाऽवसरं व्यक्तीभविष्यति ।

सूत्रघटकीभूतमथशब्दं व्याकुर्वन्नाह, मङ्गलार्थ इति ।—मङ्गलप्रयोजनक इत्यर्थः। कर्मानन्तर्य्यार्थः,—कर्मानन्तर्य्यप्रतिपादक इत्यर्थः। आनन्तर्य्यस्य—कर्मानन्तर्य्यस्य, अप्रयोजनत्वात्—अनपेक्षितत्वादित्यर्थः, तथा च श्रुतौ प्रव्रज्याग्रहणे वैराग्यमेव हेतुतया उपदिष्टम्; न चास्यां श्रुतौ लेशतोऽपि कर्मानन्तर्य्यस्य प्रव्रज्यां प्रति उपयोगित्वं सूचितमिति; तथा च "मोक्षं प्रति ज्ञानकर्मणोः समुच्चित्य कारणत्वम्" इतिवादिनां मतमनेन ग्रन्थेन निराकरोति वृत्तिकार इति विज्ञेयम्। मङ्गलकरणमिति।—कर्मादौ प्रारिप्सितपरिसमाप्तिप्रतिबन्धकीभूतदुरदृष्टक्षयाय मङ्गलकरणं, न्याय्यं—शिष्टाचारपरम्परासम्प्राप्तम्। अत्र च "अथ" शब्दस्य उच्चारणेनैव विघ्नध्वंसरूपं तत् भवतीति निष्कर्षः। यद्यपि वृत्तिकृता अथशब्दस्य मङ्गलवाचकत्वं ब्रह्मकण्ठरवेणोक्तं, तथाऽपि विघ्नध्वंसं प्रति अथशब्दोच्चारणस्यैव प्रयोजकत्वेन अयं वृत्तिकृत्सम्मतः वाच्यवाचकभावः प्रकृते नापेक्षितः इति द्रष्टव्यम्; वाचकपदं वा अत्र प्रयोजकपरमित्यवधारणीयम् ।

तस्मात्—ब्रह्मकण्ठदेशविनिर्गमनादित्यर्थः, उभौ—'ओङ्कारः' 'अथशब्दः' इत्येतौ, माङ्गलिकौ—उच्चारणमात्रेणैव अशुभपरिहार-शुभोत्पत्तिरूपमङ्गलप्रयोजनकौ इति निष्कर्षः ।

शारीरमानसिकयोः,—शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं, मानसिकं कामक्रोधादिजनितम्। दुःखनिवृत्तेः स्वतो भाविन्याः ज्ञाननाश्यत्वाभावं शङ्कते,

दैविकं—ग्रहभूतादिजनितम्। नन्वेवं तेषां निवृत्तिः स्वत एव भविष्यति, सुखदुःखानां द्विक्षणावस्थायित्वात्; अत आह, अत्यन्तेति। न दुःखविशेषाणां निवृत्तिरभिमता, किन्तु दुःखजातीयानाम्। भविष्यतामपि हि निवृत्तिरत्यन्तशब्दार्थः। धर्मार्थकाममोक्षाणां पुरुषार्थत्वं, न तु त्रयाणामत्यन्तत्वं, क्षयित्वात् विषयजसुखत्वाद्वा। मोक्षस्य तु न तथा, नित्यत्वात् प्रकाशरूपत्वाच्च। अत उक्तम् "अत्यन्तपुरुषार्थः" इति ॥ १ ॥

---

नन्विति।—"द्विक्षणावस्थायित्वात्" इत्यत्र "त्रिक्षणावस्थायित्वात्" इत्ययमेव पाठः साधीयान्; वेति सम्पातायातम्। परिहरति, अत आहेति।—अत्र दुःखनिवृत्तौ आत्यन्तिकत्व स्वसमानाधिकरणदुःखप्रागभावाकालीनत्वम्; तच्च चरमदुःखध्वंसे प्रसिद्धम्। यद्यपि साङ्ख्यनये प्रागभावादेः तत्त्वमध्ये अपरिगणनेन अधिकरणात्मकत्वमेव इति केषाञ्चित् मतं, तथाऽपि तत्त्वपदेन भावत्वाभिमतानामेव च वस्तूनाम् आचार्य्येण निर्दिष्टत्वात्, सिद्धान्ते अभावस्वीकारेऽपि नास्ति काऽप्यनुपपत्तिरिति नवीनाः वदन्ति। साङ्ख्यैरभावः नाङ्गीक्रियते इति मतरक्षणाय आग्रह-वतान्तु निवृत्तिपदेन अतीतावस्था एव ग्राह्या; तस्याः खलु अतीतावस्थायाः आत्यन्तिकत्वं न खलु स्वसमानाधिकरणदुःखप्रागभावाकालीनत्वं, किन्तु मुक्तात्मनि यावत्यः दुःखव्यक्तयः जाताः तासां सर्वासामेव व्यक्तीनां या खलु नाम अतीतावस्था तद्वैशिष्ट्यं वेदितव्यमिति। दुःखजातीयानामिति—दुःखसामान्यस्येत्यर्थः। भविष्यता-मिति।—अत्र निवृत्तिपदेन अनुत्पत्तिर्ग्राह्या, तस्याः स्वतः सिद्धत्वेऽपि तत्प्रति-योगिजातीयस्वरूपयोग्यकारणस्य संस्कारादेः विघटकं यत् तत्त्वज्ञानं तत्र तादृशा-नुत्पत्तिजनकत्वं योगक्षेमसाधारणं कथञ्चित् ग्राह्यम्। तथा च भविष्यतामित्यस्य उत्पत्तियोग्यानामित्यर्थः, योग्यता च दुःखत्वरूपसामान्यधर्माश्रयत्वमित्यन्यदेतत्। चतुर्वर्गेषु मोक्षस्य परमपुरुषार्थत्वं स्थापयितुमाह, धर्मार्थेति।—पुरुषार्थत्वम्—ईप्सित-त्वम्, इष्टत्वमित्यर्थः। त्रयाणां—धर्मार्थकामानाम्। अत्यन्तत्वं—परमपुरुषार्थत्वम्। क्षयित्वादिति धर्मार्थकामेषु त्रिष्वेवान्वेति। विषयजसुखत्वाद्वेति।—अत्र "वा" शब्दः समुच्चयद्योतकः। न तथा—न क्षयित्वमित्यर्थः। नित्यत्वात्—स्वतः सिद्धत्वात्। प्रकाशरूपत्वादिति।—तथा च साङ्ख्यनये दुःखनिवृत्त्युपलक्षितचित्स्वभावत्वमेव मोक्षस्य इति फलितार्थः ॥ १ ॥

भवतु दुःखनिवृत्तिः पुरुषार्थः, तथाऽपि दृष्टादेव सुकरोपायात् तत्सिद्धेः शास्त्रसाध्ये दुष्करोपाये अनेकजन्मपरम्पराऽऽयाससम्पाद्ये चित्तनिरोधादौ कः स्वस्थात्मा प्रवर्त्तेत ? तथा च,—

"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ?" ॥

तथा हि, शारीरदुःखनिवृत्तये औषधादयः सन्ति, मानसदुःखनिवृत्तये प्रवरस्त्रीमिष्टान्नादयः सन्ति, आधिभौतिकदुःखनिवृत्तये च नीतिशास्त्रार्थवादिभिः प्रोक्ताः नानाप्रकाराः उपायाः सन्ति, आधिदैविकदुःखनिवृत्तये च शान्तिमणिमन्त्रादयः सन्तीति । अत्रोत्तरसूत्रम्,—

**न दृष्टात् तत्सिद्धिः, निवृत्तेरप्यनुवृत्तिदर्शनात् ॥२॥**

न वयं निवृत्तिमात्रं पुरुषार्थ इति ब्रूमः, किन्तूत्पत्तिनिवृत्तिः । औषधादिना च नावश्यं दुःखं निवर्त्तते ; यदि वा कथञ्चिन्निवर्त्तेत, पुनरन्येन न भवितव्यमिति नास्ति नियमः ॥ २ ॥

---

दुःखनिवृत्तेः परमपुरुषार्थत्वेऽपि तदर्थं मोक्षशास्त्रीयोपायानुष्ठानस्य अनुपयोगित्वं शङ्कते—भवत्विति । चित्तनिरोधादौ इति ।—अत्र आदिपदेन परवैराग्यादेर्ग्रहणम् । पूर्वपक्षं प्रपञ्चयन्नाह, तथा चेति ।

अत्र श्लोके केचित् "अर्के" इत्यत्र "अक्के" इति पाठं कल्पयित्वा "गृहकोणे" इति तदर्थमाहुः, वस्तुतस्तु "अर्के" इत्येव पाठः समीचीनः, मीमांसाभाष्ये भाष्यकृता शबरस्वामिना तथैव लिखितत्वात् ।

शङ्कामिमां निराकर्त्तुमुत्तरसूत्रमवतारयति, अत्रोत्तरसूत्रमिति ।

निवृत्तिमात्रं—यथाकथञ्चित् निवृत्तिमित्यर्थः । उत्पत्तिनिवृत्तिरिति—आत्यन्तिकानागतावस्थाप्रतिपालनमिति भावः ; प्रतिपालने च आत्यन्तिकत्वं सजातीयदुःखवर्त्तमानावस्थयाऽसमानकालीनत्वम् ॥ २ ॥

भवतु दुःखनिवृत्तिस्तथाऽपि न तथा पुरुषार्थः, पुनःपुनस्तथाविधप्रतीकारकरणादित्यत आह,—

**प्रात्यहिकक्षुत्प्रतीकारवत् तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम् ॥ ३ ॥**

यथा प्रत्यहं क्षुत्प्रतीकाराय वरान्नभक्षणादिना तृप्तस्य पुरुषार्थता, तथा दुःखनिवृत्तये औषधादिना पुनःपुनः प्रतीकारात् पुरुषार्थतेति ॥ ३ ॥

सिद्धान्तमाह,—

**सर्वासम्भवात् सम्भवेऽपि सत्त्वासम्भवाद्धेयः प्रमाणकुशलैः ॥ ४ ॥**

न हि सर्वदेशे सर्वकाले वा वैद्यादयः सम्भवन्ति। सम्भवेऽपि वा नात्यन्तत्रिविधदुःखनिवृत्तिः स्यात्। अवश्यं हि देहनिबन्धनात् रागादीनां सम्भवः, देही सुखीति न

तथाविधप्रतीकारकरणादिति—तत्तज्जातीयदुःखान्तरनिवृत्तौ उपायानुष्ठानादित्यर्थः।

तथा च तादृशोपायानुष्ठानेनैव भाविदुःखव्यक्तीनामपि निवृत्तिः सुकरा इति शास्त्रीयोपायानुष्ठानानैरर्थक्यं शङ्कते, प्रात्यहिकक्षुत्प्रतीकारवदिति।—अयञ्च पूर्वपक्षः चार्वाकमतानुसारेण कृतः इति ज्ञेयम्। ते हि दृष्टोपायसाध्यायाः दुःखनिवृत्तेरेव परमपुरुषार्थत्वं मन्यन्ते ॥ ३ ॥

अथ सिद्धान्तसूत्रमुत्थापयति, सिद्धान्तमाहेति।—सर्वासम्भवात्—दृष्टेनैवोपायेन सर्वेषां दुःखानां निवृत्तेरसम्भवादित्यर्थः। सम्भवेऽपि—कदाचित् कस्यचित् भाग्यवशेन सकृत् वारद्वयं वारत्रयं वा दृष्टोपायबलेन सकलजातीयदुःखनिवृत्तिसम्भवेऽपि इत्यर्थः। सत्त्वासम्भवात्—आत्यन्तिकत्वासम्भवात्, नियमेन पुनरनुत्पादासम्भवादित्यर्थः। हेयः,—उपेक्ष्यः, दृष्टोपायः इति शेषः।

सूत्रं विवृणोति, न हीति।—हि—यतः, तथा च यतः सर्वदेशे सर्वकाले वैद्यादयः न सम्भवन्ति, अतः आत्यन्तिकदुःखनिवृत्तौ न तेषामुपयोगित्वमिति फलितार्थः। प्रागुक्तसर्वासम्भवे सत्त्वासम्भवे च हेतुं विवृणोति, अवश्यं हि इति।—

दृष्टमिति। तस्मादेव पुरुषार्थः प्रामाणिकैः हेयः, शास्त्रगम्यश्चोपादेयः ॥ ४ ॥

युक्त्यन्तरमाह,—

**उत्कर्षादपि, मोक्षस्य सर्वोत्कर्षश्रुतेः ॥ ५ ॥**

अथवा,—दुःखत्रयनिवृत्तेरन्योऽन्यमुत्कर्षो दृष्टः, मोक्षस्य सर्वोत्कृष्टः, नित्यत्वादेकत्वात् सर्वदुःखोच्छेदरूपत्वाच्च ॥ ५ ॥

ननु नास्त्येव तद्दर्शनं, यत्र मोक्षो न पुरुषार्थः ; न चौषधादिना दुःखनिवृत्तिमात्रं मोक्षः। तस्मात् यस्तव सिद्धान्तः सोऽस्माकं भविष्यतीत्यत आह,—

**अविशेषश्चोभयोः ॥ ६ ॥**

---

तथा चाविविधदुःखकारणीभूतदेहात्माभिमानस्य यावत् सम्भवः, तावत् रागद्वेषादिवशेन दुःखोत्पत्तेरवश्यम्भाविततया दृष्टोपायजन्याया: दुःखनिवृत्तेः आत्यन्तिकत्वमसम्भवदुक्तिकमिति भावः। फलितमाह, तस्मादिति।—एषः पुरुषार्थः,—दृष्टोपायजन्यदुःखनिवृत्तिरूपपुरुषार्थ इति यावत् ॥ ४ ॥

सिद्धान्तदाढर्याय युक्त्यन्तरमवतारयन्नाह, युक्त्यन्तरमिति।—न ब्रूमो वयं दृष्टोपायजन्याया: दुःखनिवृत्तेः नास्त्येवोत्कर्ष इति। सन्ति च बहवः दृष्टोपायाः येषु उत्कर्षाधिया विवेकिनोऽपि क्वचित् प्रवर्त्तन्ते इति दृष्टं, तथाऽपि परमसमुत्कर्षस्य तु शास्त्रीयोपायसाध्यायां परमपुरुषार्थभूतायां दुःखनिवृत्तावेव सम्भव इति विवेकिभिः तदर्थमेव प्रयतनीयमिति निर्गलितार्थः। मोक्षस्य सर्वोत्कर्षश्रुतेरिति।—"न च पुनरावर्त्तते" [ छान्दो० उप० ८ अध्या० १५ खण्ड० १ मन्त्रः ] इत्यादिश्रुतेः इत्यर्थः ॥ ५ ॥

दृष्टोपायसाध्यायाः दुःखनिवृत्तेः परमपुरुषार्थत्वं निराकृत्य साङ्ख्यशास्त्रवत् न्यायवैशेषिकादिशास्त्रान्तराणां परमपुरुषार्थसाधनहेतुप्रतिपादनद्वारा अस्त्येव मोक्षं प्रति महानुपयोगः इति तेष्वेव मुमुक्षूणां प्रवृत्तिसम्भवेन साङ्ख्यशास्त्रस्य प्रारम्भकमप्रामाण्यं पुनरापतितमिति शङ्कते, नन्विति।

उभयोः,—साङ्ख्य-तदितरमतयोरित्यर्थः। अविशेषः,—मोक्षसाधनप्रतिपादकत्वेन प्रामाण्यस्य तुल्यता इत्यर्थः। तथा च सन्तु नाम न्यायवैशेषिकादिदर्शनानि, साम्प्रतं

स्वपक्षसिद्धया परपक्ष उपालभ्यते, न त्वन्यथा। उक्तञ्च,—

"यत्रोभयोः समो दोषः परिहारोऽपि तादृशः।
नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे" ॥ ६ ॥

किं स्वभावतो बद्धस्य मोक्षसाधनोपदेशोऽन्यथा वा? इत्यत्राह,—

**न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥७॥**

स्वभावनाशात् स्वरूपनाशप्रसङ्गात्। उक्तञ्च,—

"वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता
विकल्पघटितावेतावुभावपि न किञ्चन" ॥ ७

न तेषां प्रामाण्यनिराकरणे वयं प्रयतामहे, स्वपक्षसिद्धेरनन्तरमेव परपक्षनिराकरणं कर्त्तव्यमिति हि तार्किकाणां शैली; यथाऽस्माभिरधुना स्वपक्षस्थापनमेव न सम्यक्तया कृतं, तथा न्यायवैशेषिकादिमतानुयायिभिरपि न प्रकटितः सम्यक्तया स्वपक्षः; आत्यन्तिकदुःखनिवृत्तौ दृष्टोपायासाध्यत्वन्तु अस्माकमिव तेषामपि सिद्धान्तः इत्यस्त्येव तुल्यता तैः सह अस्माकमेतस्मिन् विषये; यथाऽवसरन्तु स्वपक्षस्थापनानन्तरं तन्मतानि निराकरिष्यन्ते इति साम्प्रतमेव तन्मतनिराकरणे नास्त्यस्माकमाग्रह इति तात्पर्य्यम ॥ ६ ॥

मोक्षस्वरूपं निरूपयितुं तत्प्रतियोगिभूतस्य बन्धस्य स्वरूपनिर्णयप्रकारमुत्थापयति, किमित्यादि।—स्वभावतो बद्धस्य—वैशेषिकादिमतसिद्धात्मवत् वास्तवदुःखाद्याश्रयस्य। अन्यथा वेति।—औपाधिकदुःखाश्रयस्य वेत्यर्थः।

सूत्रे स्वभावतः पदस्य स्वरूपतः इत्यर्थो ग्राह्यः, वृत्तौ तथैव व्याख्यानात्। मोक्षसाधनोपदेशविधिरिति।—मोक्षस्य साधनोपदेशः मोक्षसाधनोपदेशः, तेन विधिः अनुष्ठानं, प्रवृत्तिरिति यावत्, तथा च आत्मनः वास्तवबन्धधर्मयोगित्वे तन्निराकरणाय मोक्षशास्त्रवशेन मुमुक्षूणां प्रवृत्तिः न स्यात् इति भावः; एवञ्च तत्प्रवृत्त्यन्यथाऽनुपपत्त्या बन्धस्य औपाधिकत्वमेव इति सिद्धान्तः इति सूचितम्। वस्तुस्थित्या—स्वरूपतः। तदभावात्—वास्तवबन्धाभावात्। न मुक्तता—न मोक्षस्य जन्यत्वं, स्वतः सिद्धत्वादिति भावः। एतौ उभौ—बन्धमोक्षावित्यर्थः। विकल्पघटितौ—अविवेकोपाधिकौ। न किञ्चन—न वास्तवौ इत्यर्थः ॥ ७ ॥

एतदेव द्रढ़यति,—

**स्वभावस्यानपायित्वात् अननुष्ठानलक्षणम-प्रामाण्यम् ॥ ८ ॥**

नित्यस्वभावस्य बन्धस्य अप्रच्यवात् तन्नाशार्थमनुष्ठानम् अशक्यमिति ॥ ८ ॥

कश्चिद्विप्रलम्भायाशक्यमपि उपदिशेत्, यथा "अङ्कुल्यग्रे करियूथशतम्" इति, अत आह,—

**नाशक्योपदेशविधिः, उपदिष्टेऽप्यनुपदेशः ॥ ९ ॥**

अशक्यकार्य्याय उपदेशः न सम्भवति। उपदिष्टेऽपि न उपदेशः, निष्फलोभवति इत्यर्थः ॥ ९ ॥

अत शङ्कते,—

**शुक्लपटवद्वीजवच्चेत् ॥ १० ॥**

स्वभावस्यापि नाशो दृश्यते, यथा पटे शुक्लत्वस्य रागादिभिः, वीजस्य चाङ्कुरजननात् ॥ १० ॥

---

बन्धस्य स्वतः सिद्धत्वे सूचितं दोषं विवृण्वन् आह भगवान् सूत्रकारः, स्वभावस्येति।
—अनपायित्वात—शाश्वतत्वात। अननुष्ठानलक्षणं—मोक्षसाधनोपायशास्त्रार्थस्य अननुष्ठानलक्षणमेव तच्छास्त्रस्याप्रामाण्यं, प्रसक्तमिति शेषः।

अप्रच्यवात—अविनाशात। तन्नाशार्थं—बन्धनाशार्थम। अनुष्ठानं—मोक्षसाधनीभूतज्ञानहेतूनां शमदमादीनाम् इत्यर्थः। अशक्यमिति, इष्टसाधनत्वज्ञानाभावात इति शेषः ॥ ८ ॥

मोक्षसाधनोपदेशशास्त्रस्य केनचित् विप्रलम्भकेन प्रणीतत्वमाशङ्क्य तन्निराकरणाय सूत्रमुत्थापयति, कश्चिदिति ॥ ९ ॥

बन्धस्य स्वाभाविकत्वं प्रकारान्तरेण समर्थयितुं सूत्रकारः शङ्कते इति योजना।

अत्र सूत्रे बीजपदं बीजगताङ्कुरजननशक्तिपरं, तथा च बीजे या या अङ्कुरजनिका शक्ति. तस्याः अङ्कुरजननादनन्तरं यथा नाशो दृश्यते, तथा स्वाभाविकस्यापि आत्मनः बन्धस्य तत्त्वज्ञानानन्तरं नाशो भविष्यति इति पूर्वपक्षाशयः ॥१० ॥

सिद्धान्तमाह,—

**शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥ ११ ॥**

सत्कार्य्यसिद्धेर्न पटस्य शौक्ल्यं नष्टं, किन्तु रागादिना अभिभूतं, क्षालनात् पुनरुद्भूतम् । अङ्कुराजननादपि बीजं न नष्टं, किन्त्वभिभूतं, तस्य च पुनरुद्भवो दृश्यते, वस्तुवैचित्र्यात् ; अथवा योगिसङ्कल्पादिभिः तच्छक्त्याविर्भावात् ॥ ११ ॥

नन्वात्मा स्वभावतो न बद्धः, किन्तु कालवशाद्बद्धो भविष्यतीत्यत आह,—

**न कालयोगतः, व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥ १२ ॥**

भवतु भयं, यदि तस्य कदाऽपि कालयोगः स्यात्, न स्याद्वा नित्यस्य व्यापिनः सर्वकालसम्बन्धोपाधित्वात् । नित्यस्येत्यनेन सर्वकालसम्बन्धे प्राप्ते "व्यापिनः" इत्युत्तरसूत्रपर्य्यालोचनया सम्यगायातम् ॥ १२ ॥

अथ सिद्धान्तसूत्रमवतारयति, सिद्धान्तमाहेति ।—शक्त्युद्भवानुद्भवाभ्यामिति,—शक्तेराविर्भावतिरोभावाभ्यामित्यर्थः ; तथा च यावत् पटो बीजं वा अवतिष्ठते, तावत् तद्गता शुक्लता अङ्कुरजननशक्तिश्च अवतिष्ठते एव ; परन्तु पटे रक्तादिसमवधानेन शुक्लतायाः तिरोभावेऽपि पुनः प्रक्षालनादिना तस्याः आविर्भावः सम्भवी । एवं बीजेऽपि अङ्कुरजनिकायाः शक्तेः तिरोभावे कालरूपोद्बोधकसाधनस्य अतीतत्वात् आविर्भावासम्भवेऽपि या शक्तिः सा यावद्बीजम् अवतिष्ठते एव इत्यङ्गीकरणीयम् । अतो बीजमिति पदं तद्गताङ्कुरजननशक्तिपरम् । अभिभूतं—तिरोभूतम् । वस्तुवैचित्र्यात—साधनवैचित्र्यात् इति ; तथा च अङ्कुरजननशक्तौ सहकारीभूतस्य कालरूपसाधनस्य वैचित्र्यात साधनान्तरवैलक्षण्यात् बीजगतायाः अङ्कुरजनिकायाः शक्तेः तिरोभावानन्तरं न पुनराविर्भाव इति भावः ॥ ११ ॥

कालवशात आत्मनः बद्धत्वमस्ति इति शङ्कायां तन्निराकरणसूत्रमवतारयति, नन्विति ।—वृत्तिकारमतेन "व्यापिनः" इति पदम् उत्तरसूत्रस्थम्, अस्मिन् सूत्रे तु सम्पातायातम् । सुगममन्यत् ॥ १२ ॥

देशवशाद्बद्धो भविष्यतीत्यत आह,—

**न देशयोगतोऽप्यस्मात् ॥ १३ ॥**

व्यापिनो नित्यस्य सर्वदेशसम्बन्धादिति ॥ १३ ॥

अथावस्थातो बद्धो भविष्यतीत्यत आह,—

**नावस्थातः, देहधर्मत्वात् तस्याः ॥ १४ ॥**

तस्याः,—अवस्थायाः । देहधर्मत्वादित्युपलक्षणम्, अपरिणामित्वादिति परमार्थः ॥ १४ ॥

आत्मनोऽप्यवस्था भविष्यतीत्यत आह,—

**असङ्गोऽयं पुरुष इति ॥ १५ ॥**

"असङ्गो ह्ययं पुरुषः" [ बृह० उप० ४ अध्या० ३ ब्रा० १५ मन्त्रः ] इति श्रुतिरस्ति, सा बाधिता स्यात् ॥ १५ ॥

कर्मवशाद्बद्धो भविष्यतीत्येतत् दूषयति,—

**न कर्मणा, अन्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥**

---

देशविशेषयोगात् आत्मनः बन्ध इति मतं निराकर्तुं सूत्रान्तरमवतारयति, देशवशादिति।—पूर्वसूत्रे "नित्यस्य" इति "व्यापिनः" इति च पदद्वयमस्मिन् सूत्रे समाकर्षणीयम्, एकेन पदेन प्रकृतनिर्वाहायोगात्, व्यापिनोऽनित्यत्वे समानकालिक-सर्वदेशसम्बन्धसम्भवेऽपि भूतभविष्यतोः देशयोः असम्बन्धात्। नित्यस्य अणुत्वपक्षे परिच्छिन्नतया सर्वदेशसम्बन्धाभावात् इत्यतः पदद्वयमेव द्वादशसूत्रात् त्रयोदशसूत्रे उत्कर्षयन्नाह, व्यापिनो नित्यस्येति ॥ १३ ॥

बन्धस्वाभाविकत्वमतं प्रकारान्तरेण समर्थयमानानां मतं निराकर्तुं सूत्रान्तरमुत्थापयति, अथेति ।—सूत्रे अवस्थापदं बाल्य-यौवन-जरादिरूपदेहधर्मपरं परिणामपरं वा ॥ १४ ॥

आत्मनोऽवस्थावत्त्वे दोषं पृच्छन् सूत्रमवतारयति, आत्मन इति ।—तथा च श्रुतौ आत्मनः अन्यधर्मानाश्रयत्वरूपासङ्गत्वस्य निर्विवादं प्रतिपादनात् आत्मनः बाल्य-यौवनादिरूपपरिणामः न कदाऽपि सम्भवतीति भावः ॥ १५ ॥

अदृष्टवशादात्मनः बन्ध इतिवादिनां मतं दूषयितुं सूत्रमवतारयति, कर्मवशादिति ।—कर्मणा—कर्मजन्यपापपुण्याभ्यामिति भावः । अन्यधर्मत्वात्—सहचरस्य-,

निर्गुणत्वादात्मनः कर्म्मणोऽनात्मधर्म्मत्वम्। ननु अन्यधर्म्मेणापि कर्म्मणा बद्धो भविष्यति; तदयुक्तं, न ह्यन्यधर्म्मेण अन्यत्र किञ्चिदाधीयते, विश्वस्य वैचित्र्यानुपपत्तेः, अतिप्रसक्तेश्चेति। मुक्तात्मनामपि बन्धप्रसङ्गोऽन्यत्वाविशेषादिति ॥ १६ ॥

दूषणान्तरमाह,—

**विचित्रभोगानुपपत्तिरन्यधर्म्मत्वे ॥ १७ ॥**

दृश्यते केचित् सुखिनः केचित् दुःखिनः। न चानादौ संसारे केनापि सुखहेतु कर्म्म दुःखहेतु कर्म्म वा न कृतम्, अन्यधर्म्मेणान्यत्र कार्य्यजनने सर्व्वे सुखिनो दुःखिनो वा स्युः ॥ १७ ॥

अन्यधर्म्मेण अन्यत्र कार्य्यजनने प्रकृतिरेव नियामिका भविष्यति। यं पुरुषं प्रति सा प्रवर्त्तते तस्य बन्धो भविष्यतीत्यत आह,—

**प्रकृतिनिबन्धनाच्चेत्, न; तस्या अपि पारतन्त्र्यम् ॥ १८ ॥**

प्रकृतेरपि व्यापित्वात् सर्व्वपुरुषसम्बन्धाविशेषात् कर्म्मणा

---

रूपबुद्धिधर्म्मत्वात्। अतिप्रसक्तिं विशदयन्नाह, मुक्तात्मनामिति।—अन्यधर्म्मेण अन्यत्र फलयोगाङ्गीकारे विश्वं विचित्रं न स्यात् स्याच्च मुक्तात्मनामपि पुनर्बन्धः इति तात्पर्य्यम् ॥ १६ ॥

अन्यधर्म्मेण अन्यत्र फलयोगाङ्गीकारे भोगवैचित्र्यमप्यनुपपन्नमिति प्रतिपादयितुं सूत्रमवतारयन्नाह, दूषणान्तरमिति ॥ १७ ॥

विचित्रजगन्निर्माणदक्षायाः प्रकृतेः स्वभावादेव कस्यचिदात्मनः मुक्तत्वमिति व्यवस्था भविष्यति इति मतमपि न विचारसहमित्येतत् प्रदर्शयितुं सूत्रान्तरमुत्थापयति, अन्यधर्म्मेणेति।—प्रकृतिनिबन्धनात्—प्रकृतिरूपकारणवशात्, आत्मनो बन्धः इति शेषः। अत्र प्रकृतिनिबन्धनेति पाठे—बन्धनेति विशेष्यपदमूह्यम्। प्रकृतेः सहकारिविरहिताया आत्मबन्धहेतुत्वे दोषमाविष्कुर्वन्नाह, प्रकृतेरपीति।—व्यापित्वात्—विभुत्वात्। व्यापित्वे किमायातमित्यत आह, सर्व्वपुरुषेति।

विना न नियम इति तस्या अपि कर्मपारतन्त्र्याम् । तत्र चोक्तो दोषः ॥ १८ ॥

यदि प्रकृत्यादिनिबन्धन आत्मनो बन्धो नास्ति, स्वभावेनापि नास्ति, तर्हि मोक्षशास्त्रोपदेशो व्यर्थः स्यात् ? इत्यत आह,—

**न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ॥ १९ ॥**

शुद्धेति—गुणासङ्गो । बुद्धेति—स्वच्छः । तद्योगः,—बन्धयोगः । तद्योगादृते—प्रकृतियोगादृते । अविवेकं विना नात्मनः कदाऽपि बन्धः, किन्त्वविवेकाद्बन्ध इत्यभिप्रायः । स च शास्त्रोपदेशात् नाम वेदितव्यः ॥ १९ ॥

अथाविद्यया तस्य बन्धो भविष्यति ? इत्यत आह,—

**नाविद्यातोऽपि, अवस्तुना बन्धायोगात् ॥ २० ॥**

अविद्या हि विद्याप्रागभावः प्रध्वंसाभावो वा । उभयथा-

कर्मपारतन्त्र्य—कर्माधीनत्वम् । तत्र—कर्मपारतन्त्र्ये । उक्तो दोष इति—भोगवैचित्र्यानुपपत्तिरेव दोषो ज्ञेयः ॥ १८ ॥

बन्धस्य स्वाभाविकत्वपक्षं निराकृत्य औपाधिकत्वपक्षं व्यवस्थापयितुं सूत्रमुत्थापयति, नेति ।—तद्योगः,—बन्धयोगः । तद्योगात्—अविवेकसम्बन्धात् । इत्थं अविवेकपदं न विवेकाभावपरम्, अपि तु स्वस्वामिभावापरपर्य्यायम् अनादिसंस्कारात्मकमित्यवसेयम् ; स च संस्कारः बुद्धिधर्मोऽपि चैतन्ये प्रतिबिम्बात्मना स्वच्छे स्फटिके सन्निहितजवालौहित्यप्रतिबिम्बवत् औपाधिकतया स्थितः आत्मनः औपाधिकबन्धाय प्रभवति इति निष्कर्षः । साङ्ख्यनये कौटस्थ्यस्यापि आत्मनः प्रतिबिम्बधारित्वं प्रामाणिकैः साङ्ख्याचार्य्यैरभ्युपेतम् ; यथाऽऽहुराचार्य्याः,—"तस्मिन् चिद्दर्पणे स्फारे इमास्ता वस्तुदृष्टयः । समस्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥" इति ॥ १९ ॥

अद्वैतवादिसिद्धान्तानुसारेण अविद्यायाः बन्धहेतुत्वं निराकुर्वन् सूत्रमवतारयति, अथेति ।—अविद्यायाः प्रागभावरूपत्वे प्रध्वंसाभावरूपत्वे वा उभयथाऽपि अभावरूपता आयाता । अभावस्य च प्रतियोग्यारोपाधिकरणविशेषधर्मिप्रतीतिरूपविकल्प-

ऽप्यवस्तु। न चावस्तुना वस्तुनः आत्मनः सम्भवति बन्धः; तस्मादविद्यया बन्ध इति व्यपदेशमात्रं, न तत्त्वम् ॥ २० ॥

विद्यातोऽन्याऽविद्या वस्तुभूता भविष्यति? इत्यत आह,—

**वस्तुत्वे सिद्धान्तहानिः ॥ २१ ॥**

अस्माकं तावदविद्यायाः सद्रूपत्वे नाशाभावादनिर्मोक्षः। अद्वैतिनान्तु अविद्या न तात्त्विकी। द्वैतवादिनान्तु अनादेर्वस्तुभूतस्य तस्य नाशाभावादुपदेशानर्थक्यम् ॥ २१ ॥

दूषणान्तरमाह,—

**विजातीयद्वैतापत्तिश्च ॥ २२ ॥**

यद्यविद्या वस्तुभूताऽनादिस्तदा नित्यात्मतुल्या। अनात्मत्वे विजातीयद्वैतत्वम् ॥ २२ ॥

वेद्यतया वस्तुतः स्वातन्त्र्येण व्यवहारानर्हतया अवस्तुता, स्वयमेव यद्वस्तु स्वरूपेण न सिद्धं तस्य बन्धं प्रति कारणत्वं न सम्भवदुक्तिकमिति सूत्रार्थः। व्यपदेशमात्रम्—उक्तिमात्रम्। तत्त्वं—वास्तवम् ॥ २० ॥

अविद्याग्रस्तस्य अभाववादिमते तदग्रात् बन्धानुपपत्तिं प्रदर्श्य तस्याः विद्याविरोधिभावरूपत्वमित्यङ्गीकृत्य ये तथाभूतया अविद्यया आत्मनः बन्धमङ्गीकुर्वन्ति, तान् निराकर्तुं सूत्रमवतारयति, विद्यात इति।—वस्तुत्वे—सद्रूपत्वे। सिद्धान्तहानिः,—अद्वैतवादिसिद्धान्तहानिः। माऽस्तु अद्वैतवादिपक्षे अविद्यया बन्धः, स्वमते अविद्यया बन्धः कथं नाङ्गीक्रियते? इत्यत आह, अस्माकमिति।—तथा च सिद्धान्ते अविद्यायाः सद्रूपत्वे "नासतो विद्यते भावः" इति नयेन नित्यत्वेन तया बन्धस्वीकारे मोक्षस्य नास्ति सम्भावना; अद्वैतिनान्तु अविद्यायास्तात्त्विकत्वाभावात् नितरां न तया बन्धः सम्भवति। न केवलं साङ्ख्यानां सर्वेषामेव द्वैतवादिनां मते भावरूपया अविद्यया आत्मनः बन्धकल्पना न सम्भवति इत्येतत् प्रदर्शयितुमाह,—द्वैतवादिनामिति ॥ २१ ॥

अविद्यया बन्धवादिनां मते दूषणान्तरं दर्शयितुं सूत्रान्तरमुत्थापयति, दूषणान्तरमिति।—अत्र सूत्रे विजातीयपदं विलक्षणपरं, तच्च वैलक्षण्यमात्मभिन्नत्वे सति प्रागभावाप्रतियोगिसद्रूपत्वम्; तथा च, वेदान्तिमते ब्रह्मभिन्नस्य प्रपञ्चस्य यत् सत्त्वमङ्गीकृतं, तत् प्रागभावप्रतियोगिसद्रूपतया, न तु प्रागभावाप्रतियोगितया; अविद्याः

अथान्यपदार्थानामीदृशी गतिः । अविद्या तु वस्तुभूता-ऽनादिरपि विनङ्क्ष्यति ? इत्याह,—

**विरुद्धोभयरूपा चेत् ॥ २३ ॥**

अन्योऽन्यविरुद्धरूपा अनादिरपि नाशप्रागभावरूपा ॥ २३ ॥

उत्तरमाह,—

**न तादृक्पदार्थाप्रतीतेः ॥ २४ ॥**

न कुत्रापि केनापि तादृक् पदार्थः प्रतीतः ॥ २४ ॥

यद्येवं, प्रकृत्यादीनां षट्पदार्थवैधर्म्यात् कुत्र प्रवेशः ? इत्यत्राह,—

वास्तु सद्रूपत्वे अनादित्वे ब्रह्मभिन्नत्वे च अङ्गीक्रियमाणे विजातीयं द्वैतं सुतरा-मापद्यतेति सूत्राशयः । तथा च, अद्वैतवादिमते ब्रह्मणःवत् पारमार्थिकं सत्त्वं प्रपञ्चस्य व्यावहारिकं सत्त्वं, तच्च प्रागभावप्रतियोगित्वरूपम्, अविद्याया-अनादित्वं चेदङ्गीकृतं, तदा तस्य व्यावहारिकसत्त्वं न सम्भवति अनादित्वादेव, तथा च, पारमार्थिक-व्यावहारिकरूप-द्विविधसद्वैलक्षण्यरूपं विजातीयद्वैतत्वमविद्यायामापतति इति सूत्रस्य निष्कृष्टार्थः बोध्यः ॥ २२ ॥

अविद्याया एतादृशवैलक्षण्याङ्गीकारे का क्षतिः ? इत्याशङ्कासूत्रमवतारयति, अथान्यपदार्थानामिति ।—अन्यपदार्थानाम्—अविद्याभिन्नप्रागभावप्रतियोगिवस्तूनाम् । ईदृशी गतिः,—ध्वंसप्रतियोगित्वम् । वस्तुभूता—भावरूपा । अनादिः,—प्रागभावा-प्रतियोगिनी । विनङ्क्ष्यति—ध्वंसप्रतियोगिनी भवति ; तथा च, प्रागभावाप्रतियोगित्व-विशिष्टसत्त्वस्य ध्वंसाप्रतियोगित्वव्याप्यत्वम् इति लोकसिद्धम् । व्याप्यव्यापकभावो नास्माभिरङ्गीक्रियते, किन्तु अविद्याभिन्नत्वविशिष्टप्रागभावाप्रतियोगित्वसहितसत्त्वस्यैव ध्वंसाप्रतियोगित्वव्याप्तिः इत्येवं व्याप्यव्यापकभावाङ्गीकारेणैव अनादेरपि अविद्यायाः विनाशः सम्भवति इति आशङ्कासूत्रतात्पर्यम् ॥ २३ ॥

उत्तरसूत्रमवतारयति, उत्तरमाहेति ।—तथा च, भावरूपस्य प्रागभावाप्रतियोगिनः वस्तुनः क्वचिदपि विनाशादर्शनात् तादृक्पदार्थस्वीकारः अप्रामाणिक इति भावः ॥ २४ ॥

प्रकृते [illegible] ऽपि प्रकृत्यादीनां नास्ति क्वाऽपि

**न वयं षट्पदार्थवादिनो वैशेषिकादिवत् ॥२५॥**

स्पष्टम् ॥ २५ ॥

यद्यनियताः पदार्थाः, कथं पञ्चविंशतितत्त्वम् ? इत्यत्राह,—

**अनियतत्वेऽपि नायौक्तिकस्य सङ्ग्रहः, अन्यथा बालोन्मत्तादिसमत्वम् ॥ २६ ॥**

षड़ेव पदार्था इति न ब्रूमः, न तु युक्तिसिद्धमपि साङ्ख्यैः ; अन्यथा बालोन्मत्ततुल्यत्वम । तथा च—

न ह्याप्तवादान्नभसो निपतन्ति महासुराः ।
युक्तिमद्वचनं ग्राह्यं मयाऽन्यैश्च भवद्विधैः ॥ २६ ॥

बौद्धपक्षं निरस्यति,—

**नानादिविषयोपरागनिमित्तोऽप्यस्य ॥२७॥**

अस्यात्मनोऽनादिविषयवासनानिमित्तो बन्धो भविष्यतीति न । अस्माकं तावद्वासनया सहात्मनः सम्बन्धाभावाद्बन्धाभावः ।

[illegible] प्रतिपादयितुं सूत्रमवतारयति, यद्येवमिति ।—वयं—साङ्ख्याः, षट्पदार्थवादिनः,—षडादिपदार्थवादिनः, उत्तरोत्तरमादिपदर्शनात् । सूत्रस्थाऽऽदिपदेन नैयायिकादेर्ग्रहणम् । ते च षोडशादिपदार्थवादिनः ॥ २५ ॥

अनियतपदार्थस्वीकारे सिद्धान्तविरोधमाशङ्कमानस्तन्निराकरणाय सूत्रमवतारयति, यद्यनियताः पदार्था इति ।—इमौ "न ह्याप्तवादात्" इति श्लोके "न ह्यप्रवादात्" इति पाठान्तरं दृश्यते । तत्र "अप्रवाद" पदं निर्युक्तिकवचनपरं, तथा च, निर्युक्तिकात् अप्रमाणात् वचनमात्रात् नभसो महासुरा न निपतन्ति इत्यन्वयो द्रष्टव्यः । आप्तवादादिति पाठे तु—"आप्तवाद" पदं प्रमाणत्वेनाभिमतवचनपरं, न तु वास्तवप्रमाणवचनपरम् ; तथात्वे उत्तरचरणस्यासङ्गतिः द्रष्टव्या ॥ २६ ॥

बाह्यविषयाणां क्षणिकत्वमङ्गीकुर्वतां तद्वासनया जीवस्य बन्ध इति वदतां बौद्धप्रभेदानां मतं निराकर्तुं सूत्रमुत्थापयति, बौद्धपक्षमिति ।—सूत्रे उपरागपदं वासनापरम् । अस्य आत्मनः प्रवाहरूपेण अनादिर्या विषयवासना तन्निमित्तो बन्धो नेत्यन्वयः । अस्माकं—साङ्ख्यानाम् । वासनया—बुद्धिधर्मभूतया । आत्मनः,—

बौद्धनये स्थिरस्यात्मनोऽसत्त्वाद्वासनाया अपि तावत्कालं स्थित्यभावात् को बन्धः ? इति ॥ २७ ॥

बाह्यवस्तूपरागाद्वासनासन्तानेनात्मसन्तानस्य बन्धो भविष्यति ? इत्यत आह,—

**न, बाह्याभ्यन्तरयोरुपरञ्ज्योपरञ्जकभावोऽपि देशभेदात् स्रुघ्नस्थपाटलिपुत्त्रस्थयोरिव ॥ २८ ॥**

यद्युच्येत रवि-जलभाजनयोरपि दृष्ट उपरञ्ज्योपरञ्जकभावः, तत्र रश्मिसम्बन्धादुपरागः, अत्र तत्सम्बन्धो नास्ति । वासनाद्वारेण चेत् ? न, तावत्कालासत्त्वात् कथं सम्बन्धः ?

निर्धर्मकस्य इति भावः । बौद्धमतेऽपि तादृशवासनया नात्मनो बन्धो भवितुमर्हति इति दर्शयितुमाह,—बौद्धनये इति ॥ २७ ॥

स्थिरस्यात्मनः अभावेऽपि विज्ञानसन्तानरूपस्य आत्मनः बाह्यविषयैः सह वासनाद्वारेण यः सम्बन्धः स एव बन्धहेतुरस्तु ? इति वदतां बौद्धानां मतं निराकर्त्तुं सूत्रम् अवतारयति, बाह्यवस्तु इति ।—बाह्यैर्वस्तुभिर्यः उपरागः,—सम्बन्धः, सन्निकर्ष इति यावत्, तस्मात् जनितेन वासनाख्यसंस्कारसमूहात्मकेन वासनासन्तानेन आत्मसन्तानस्य—क्षणिकविज्ञानप्रवाहस्य, बन्धः,—दुःखयोगित्वम् । सूत्रे बाह्यपदं क्षणिकविषयसन्तानपरम्, आभ्यन्तरपदं क्षणिकविज्ञानसन्तानरूपात्मपरम् । उपरञ्ज्योपरञ्जकभावः,—ज्ञेयज्ञातृभावः इत्यर्थः । तथा च, बाह्यैः विषयैः सह आभ्यन्तरस्य क्षणिकविज्ञानप्रवाहरूपस्यात्मनः बन्धप्रयोजकः ज्ञेयज्ञातृभावोऽपि तयोः देशभेदात् न सम्भवति । तत्र दृष्टान्तमाह सूत्रे, स्रुघ्नस्थेति ।—स्रुघ्नः,—पाटलिपुत्त्रात् व्यवहितः देशविशेषः ।

प्रकृते, यद्युच्येत इति ।—अत्र उपरञ्ज्योपरञ्जकभावः,—प्रकाश्यप्रकाशकभावः । तत्र जले उपरागः प्रकाश्यत्वम् ; अत्र प्रकृते बाह्यविषयात्मनोः तत्सम्बन्धः यथोक्तज्ञेयज्ञातृभावप्रयोजकसन्निकर्षं इति शेषः । ननु वासनैव द्वारमित्याशङ्कते—वासनाद्वारेणेति । परिहरमाह, नेति ।—तावत्कालासत्त्वात्—दुःखयोगरूपबन्धकालपर्य्यन्तासत्त्वात् ; पत्रासत्त्वं विषयस्य वासनायाः आत्मनश्च इति त्रितयस्यैवेति ज्ञेयम् ।

सन्तानस्य चेत्? यदि सन्तानो व्यतिरिक्तः, सिद्धान्तहानिः। अथाव्यतिरिक्तस्तथाऽपि तेन तत्र किञ्चिदाधेयम्। आधानन्त्व-शक्यं क्षणिकत्वात्। अनाधाने किं तेनासत्कल्पेन? इति॥ २८॥

मा भूद्वामनया बाह्यान्तरोपरागः, आत्मनो व्यापित्वाद्बाह्यैक-देशेनात्मसम्बन्धादुपरागो भविष्यति? इत्यत आह,—

## द्वयोरेकदेशलब्धोपरागान्न व्यवस्था॥ २९॥

एकात्मवादिनां सर्वदा लब्धविषयोपरागादनिर्मोक्ष इति नास्ति व्यवस्था। नानाऽऽत्मवादिनान्तु सर्वेषां सर्वार्थैः सम्बन्धात् एकदा तुल्यज्ञानोत्पादान्न व्यवस्था॥ २९॥

माऽस्तु सन्तानिनां स्थायित्वं, सन्तानस्य तु स्थायित्वाभ्युपगमेन तादृक्सम्बन्धः सुकरः? इति प्रश्नं,—सन्तानस्येति। दूषयितुमाह, यदीति।—सन्तानो—सन्तानान्तःपाती, व्यतिरिक्तः,—सन्तानात व्यतिरिक्तः, सिद्धान्तहानिः,—सर्वेषामेव भावानां क्षणिकत्वम् इति सिद्धान्तहानिः, सन्तानस्य स्थायित्वाभ्युपगमादिति भावः। सन्तानस्य सन्तानिभ्यः अव्यतिरिक्तत्वे दोषमुद्भावयन्नाह, अथेति।—तथा च, सन्तानो यदि सन्तानादव्यतिरिक्त स्यात्, तथाऽपि न मोक्षनये बन्धोपपत्तिः। अनुपपत्तौ हेतुमाह, तथाऽपीति।—तेन—विषयोपरागेण, किञ्चित—अतिशयाख्यं बन्धप्रयोजकं, बन्ध-मोक्षव्यवस्थोपपत्तये इति शेषः, आधेयं—जननीयम, आत्मनि इति तात्पर्य्यम। आधानस्य अशक्यत्वे हेतुमाह, क्षणिकत्वादिति।—तथा च क्षणिकैः भावैः बाह्यैः क्षणिकेषु सन्तानान्तःपातिविज्ञानेषु आत्माऽपरपर्य्यायेषु न कश्चित् अतिशयः जनयितुं शक्यः। माऽस्तु आधानं, किं तेन? इत्याशङ्क्याह, अनाधाने इति।—तेन—बाह्य-विषयोपरागेण, असत्कल्पेन अतिशयाजनकत्वात्, अथवा—बाह्याप्यतिशयस्य अजननेन असत्कल्पेन—अकिञ्चित्करेण॥ २८॥

आत्मनः अव्यापित्वपक्षे बाह्यमोपरागं निराकृत्य व्यापित्वपक्षेऽपि दोषमुद्भावयत् सूत्रमवतारयति, मा भूदिति।—द्वयोः,—एकात्मवादि·नानाऽऽत्मवादिनोः। एकस्मिन्नेव देशे सर्वैरेव विषयैः लब्धोपरागात् प्राप्तसम्बन्धात् न बन्धमोक्षयोर्व्यवस्था भवितुमर्हति इति सूत्रतात्पर्य्यम्॥ २९॥

प्रकुरुते,—

**अदृष्टवशाच्चेत् ? ॥ ३० ॥**

यद्यपि सर्वदा सम्बन्धात् सर्वत्र स्नानं प्रसज्येत, तथाऽपि यथाऽदृष्टेन यत् स्नानं जन्यते तदेव तस्य कारणमिति न सर्वत्र स्नानम् ॥ ३० ॥

दूषणमाह,—

**न द्वयोरेककालायोगादुपकार्य्योपकारक-भावः ॥ ३१ ॥**

द्वयोः,—कर्त्तृ-भोक्त्रोः, एककालायोगात्—एककालिकाऽसत्त्वेन, न उपकार्य्योपकारकभावः सम्भवति ॥ ३१ ॥

प्रकुरुते,—

**पुत्रकर्मवदिति चेत् ? ॥ ३२ ॥**

यथा पुत्रेष्ट्यादिनाऽविद्यमानस्य पुत्रस्य संस्कारद्वारोपकारः क्रियते, तथाऽत्रापि भविष्यति ? ॥ ३२ ॥

सिद्धान्तमाह,—

---

प्रश्नसूत्रमवतारयति, प्रकुरुते इति ।—अदृष्टमेव बन्धमुक्तिव्यवस्थापकं भविष्यति इति प्रश्नसूत्रतात्पर्य्यम् । तदेव वृत्तिकारः प्रपञ्चयति,—यद्यपीति ॥ ३० ॥

दूषणसूत्रमुत्थापयति, दूषणमिति ।—द्वयोः,—कर्त्तृ-भोक्त्रोः, एककालायोगात्—एककालानवस्थानात्, क्षणिकत्वादिति भावः, उपकार्य्योपकारकभावः,—पूर्वक्षण-वर्त्तिकर्त्तृव्यापारेण परक्षणवर्त्तिनो भोक्तुः फलभोगहेतुभूतः सम्बन्धः एवात्र उप-कार्य्योपकारकभावपदार्थः ॥ ३१ ॥

एकस्मिन् काले अनवस्थायिनोरपि कर्त्तृ-भोक्त्रात्मनोः यथोक्तोपकार्य्योपकारक-भावे दृष्टान्तमुद्भावयन् पूर्वपक्षी प्रकुरुते इति योजना । सूत्रं विवृणोति,—यथेति ॥ ३२ ॥

क्षणिकवादपक्षे दृष्टान्तासिद्धिरेवात्र दूषणं भविष्यति इति दर्शयन् सिद्धान्त-

**नास्ति हि तत्र स्थिर एक आत्मा यो गर्भाधानादिकर्मणा संस्क्रियते ॥ ३३ ॥**

स्वमते तु आत्मा अनादिर्नित्यशुद्धबुद्धः, तदुद्देशेन हविस्त्यागादयो युज्यन्ते इति ॥ ३३ ॥

आत्माऽस्थिरबोध इत्याह,—

**स्थिरकार्य्यासिद्धेः क्षणिकत्वम् ॥ ३४ ॥**

सत्त्वमर्थक्रियाकारित्वं, तच्च क्रमाक्रमाभ्यां व्याप्तं, तौ चाक्षणिके न सम्भवतः । अतस्तौ क्षणिकत्वमापादयतः ॥ ३४ ॥

सूत्रमवतारयति, सिद्धान्तमाहेति ।—सूत्रे 'तत्र'-पदं बौद्धमते इति परम् ; तथा च, पुत्रधर्मवदिति दृष्टान्तः बौद्धपक्षे नोपकारायालम् । तन्मते स्थिरस्य कस्यचिदात्मनः अभावेन गर्भाधानादिकर्मणा संस्काराद्यसम्भवात् । संस्कारो हि नाम स्थायिनो वस्तुनोऽवस्थान्तरप्राप्तिः, सा च क्षणिकतया अभ्युपगम्यमानासु विज्ञानव्यक्तिषु कथं नाम सम्भवेत् ?

आत्मनः स्थायित्ववादिनां मते तु सम्भवति पित्रा जनितेन गर्भाधानादिकर्मणा पुत्रात्मनि संस्काराधानम् इति दर्शयन्नाह, आत्माऽनादिरिति ।—तदुद्देशेन—स्थिरे आत्मनि संस्काराधानोद्देशेन इत्यर्थः ॥ ३३ ॥

सर्वेषां भावानां स्थायित्वे सत्त्वम् असम्भवदुक्तिकं मन्यमानः क्षणभङ्गवादी बौद्धः शङ्कते, स्थिरेति ।—स्थिराद्वस्तुनः कार्य्यस्यासिद्धेः क्षणिकत्वम् इत्यन्वयः ।

कथं नाम स्थिरात् वस्तुनः कार्य्यं न सिध्यति ? इति प्रतिपादयन्नाह वृत्तिकारः, सत्त्वमिति ।—अयमाशयः,—जगति ये तावत् भावाः सत्तया समुपलभ्यन्ते, तेषां सत्त्वं प्रति विवादे यैः तेषां सत्त्वमभ्युपगम्यते, तैः अयं भावो यदि न स्यात्, तदा एतत्कार्य्यम् उभयवादिसिद्धमपि न स्यात् इत्येवमेव उत्तरं दीयते । तथा च, सर्वेषामेव भावानां तत्तत्कार्य्यजनकत्वमेव सत्त्वम् इति फलितं भवति । एतदतिरिक्तस्य सत्त्वस्य कस्यचित् अदर्शनेन अनभ्युपगमात् । तच्च कार्य्यं क्रमिकं युगपत् भवति वा, उभयथाऽपि स्थिरात् कारणात् तत् न सम्भवति ; यथा हि, यत्र क्रमेण कारणेन बहूनां क्रमिकाणाम् अक्रमिकाणां वा कार्य्याणाम् उत्पाद इति स्थिरवादी मन्यते, तत्र क्षणभङ्गवादिभिः बौद्धैः विकल्पानुत्थाप्य तन्मतं

परिहरति,—

**न, प्रत्यभिज्ञाबाधात् ॥ २५ ॥**

यद्यपि सहकारिसद्भावासद्भावाभ्यां करणाकरणन्यायैः

---

खण्ड्यते ; ते च विकल्पा यथा क्रमिकाणि कार्य्याणि यस्मात् कारणात् स्थिरत्वेन सम्मतात् वादिभिः जन्यत्वेनाङ्गीक्रियन्ते, तत् वस्तु क्रमिककार्य्येषु प्रथमकार्य्योत्पत्ते-रनन्तरमपि वर्त्तते न वा ? आद्ये द्वितीयकार्य्योत्पत्तिक्षणे प्रथमस्य तृतीयचतुर्थादेश्च कार्य्यस्य उत्पादप्रसङ्गः, अर्थात् उत्पन्नस्यापि कार्य्यस्य द्वितीयक्षणे कारणसद्भावेन पुनरुत्पादप्रसङ्गः ; एवम् अनुत्पन्नानामपि तृतीयादिक्षणवर्त्तिनामपि कार्य्याणां कारणसद्भावादेव प्रथमक्षणे द्वितीयक्षणे च उत्पादप्रसङ्गः । अन्त्ये वस्तुनः कारणत्वेनाभिमतस्य द्वितीयादिक्षणावर्त्तितया सिध्यत्येव सुतरां क्षणिकत्वम् इति उभयथाऽपि वस्तूनां स्थिरत्वे दत्तजलाञ्जलिप्रसङ्गः । एवम् एकस्मात् कारणात् स्थायित्वेनाभिमतात् प्रथमक्षणे यत्र युगपदेव बहूनि कार्य्याणि समुत्पद्यन्ते, तत् कारणं तादृग्बहुकार्य्योत्पत्तेरनन्तरं द्वितीयतृतीयादिक्षणे वर्त्तते न वा ? वर्त्तते चेत् कारणसद्भावादेव तेषां कार्य्यत्वेन सम्मतानां बहूनां वस्तूनां द्वितीयतृतीयादि-क्षणे पुनरुत्पादप्रसङ्गः, कारणस्य विद्यमानत्वात् ; न वर्त्तते चेत् तदा गतं स्थिरत्व-वादेन इत्युभयतः पाशारज्जुरेव भावानां स्थिरत्ववादं प्रति इति सुधीभिरवधारणीयम् । इतो अर्थक्रियाकारित्वमित्यस्य कार्य्यजनकत्वमर्थः, तच्च अर्थक्रियाकारित्वरूपं सत्त्वं क्रमाक्रमाभ्यां क्रमिकाक्रमिककार्य्योत्पादाभ्यां व्याप्तं, तौ क्रमाक्रमौ अक्षणिके स्थिरतया अङ्गीक्रियमाणे भावे न सम्भवतः, क्रमिकाणाम् अक्रमिकाणाञ्च कार्य्याणां पुनरुत्पाद-प्रसङ्गादिति शेषः ॥ २४ ॥

तदेतत् क्षणभङ्गवादिनां मतं परिहर्त्तुं सूत्रमुत्थापयति, परिहरतीति ।—न, क्षणिकत्वं भावानामिति शेषः । तत्र हेतुमाह, प्रत्यभिज्ञाबाधादिति ।—प्रत्यभिज्ञा नाम पूर्व्वक्षणवर्त्तितया प्रमितस्य वस्तुनः पश्चात्क्षणवर्त्तितया प्रमितवस्तुना सह अभिन्नत्वेन साक्षात्कारविशेषः, वस्तूनां क्षणिकत्वे तस्याः प्रत्यभिज्ञायाः सर्व्वैरेव बौद्धेतरैः दार्शनिकैः प्राकृतैश्च प्रमाणत्वेन अभ्युपगतायाः अप्रामाण्यप्रसङ्गात् न सर्व्वेषां भावानां क्षणिकत्वं सम्भवदुक्तिकमिति सूत्राशयः ।

प्रत्यभिज्ञाबाधं विनाऽपि अन्यैः प्रमाणैः क्षणभङ्गपक्षो निराकर्त्तुं शक्यते इति दर्शयति, यद्यपीति ।—न खलु एकस्मात् एव कारणात् क्रमिकाणि अक्रमिकाणि वा

स्थिरसिद्धिः समाधेया, तथाऽपि सर्वशास्त्राविवादसिद्धत्वात् "स एवायम्" इत्यबाधितप्रत्यभिज्ञाबाध उक्तः। एतदन्यत्र प्रपञ्चितमिति नेह प्रतन्यते ॥ ३५ ॥

दूषणान्तरमाह,—

श्रुतिन्यायविरोधाच्च ॥ ३६ ॥

श्रुतिराह, "अस्ति जन्मान्तरोपभोग्यभोक्ता पुरुषः"। न्यायश्च,—"को नामानुपभोग्ये कर्मणि तत्साधने वा प्रवर्त्तते?"। यद्युच्येत

कार्याणि समुत्पद्यन्ते; अपि तु बहुभिरेव कारणैः मिलितैः कार्य्यस्योत्पत्तिः प्रामाणिकी; एवञ्च द्वितीयादिक्षणे प्रथमक्षणोत्पन्नकार्य्यस्य पुनरुत्पादप्रसङ्गः क्षणभङ्गवादिभिः प्रदर्शितः न युक्तिसहः, प्रथमक्षणोत्पन्नं कार्य्यं प्रति यानि कारणानि तस्य कार्य्यस्योत्पत्तेः प्राक्क्षणे मिलितानि, तेषां कस्यचित् प्रागभावादेः विनाशात् परस्परमिलनाभावाद्वा द्वितीयादिक्षणेषु प्रथमक्षणिकस्य कार्य्यस्य नास्ति पुनरुत्पादप्रसङ्ग इति कारणतया अङ्गीक्रियमाणे भावे सत्यपि स्थिरत्वे नास्ति काचित् आपत्तिरनुपपत्तिर्वा इति यद्यपीत्यादिग्रन्थतात्पर्य्यम्; तथा च, एतादृशप्रमाणप्रयोगादेव भावानां स्थिरत्वप्रत्यापनसम्भवेऽपि किम्? इति सूत्रकृता केवलायाः प्रत्यभिज्ञाया एव प्रमाणत्वेन स्वीकारः कृत इति ग्रन्थतात्पर्य्यम्।

ग्रन्थं परिष्कर्त्तुमाह, तथाऽपीति।—सहकारिसत्त्वासत्त्ववशात् कारणविशेषात् कार्य्यविशेषः सिध्यति इति भवत्येव कारणाकारणव्यवस्था इति न्यायवैशेषिकमतानुसारिभिः दार्शनिकैरङ्गीक्रियमाणेऽपि न सर्ववादिभिः बौद्धादिभिः विरुद्धनानाविधतर्कोत्थापनेन प्रमाणतया अङ्गीक्रियते इति तथाविधो न्यायः विवादग्रस्त एव; प्रत्यभिज्ञायान्तु नास्त्येव कस्यापि वादिनः अप्रामाण्यशङ्का इति सर्ववादिसिद्धत्वात् तत्प्रामाण्यस्यैव शरणी कृता सूत्रकृता इति टिप्पणिकारलेखस्वरसः। एतत्—क्षणभङ्गवाददूषणम्, अन्यत्र—"दृष्टान्तासिद्धेः" इत्यादि अग्रिमसूत्रव्याख्यानावसरे ॥ ३५ ॥

"स एव यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" "अविनाशी वा अरे आत्मा अनुच्छित्तिधर्मा" इत्यादिश्रुतेः निर्गलितार्थं प्रतिपादयन्नाह, श्रुतीति।—अत्र पुरुषपदेन देहेन्द्रियादिव्यतिरिक्ताविवेकेन तदभिन्नतया आत्मानं मन्यमानः शुद्धबुद्धमुक्तस्वभावः जीवः ग्राह्यः, तस्यैव जन्मान्तरोपभोग्यभोक्तृत्वसम्भवात्। सूत्रोक्तं न्यायं विवृण्वन्नाह, न्यायश्चेति।—तथा च, देहादिव्यतिरिक्तस्य स्थायिनः आत्मनः अभावे कृत-

कारुणिकानां विरागात् प्रवृत्तिर्दृश्यते, तन्न, तत्रापि तदुपकारेण स्वधर्मलाभात्, धर्मानभिसन्धानेऽपि मोक्षसाधनत्वात् ॥ ३६ ॥

दूषणान्तरमाह,—

दृष्टान्तासिद्धेश्च ॥ ३७ ॥

सर्वस्यैव हि पक्षप्रवेशान्नास्ति दृष्टान्तः। अप्रवेशे स एव स्थिरः। अथ तस्यापि क्षणिकत्वमन्यहेतुना प्रसाध्यताम्? तत्रापि दृष्टान्तासिद्धिरिति ॥ ३७ ॥

क्षणिकपक्षे एवार्थक्रिया न सम्भवतीत्याह,—

---

नाशाकृताभ्युपगमप्रसङ्ग एवात्र न्यायपदार्थो द्रष्टव्यः। आत्मभोगे विरक्तस्यापि पर-दुःखहानाय प्रवृत्तिं प्रतिबन्धित्वेन समुद्भावयति, कारुणिकानामिति।—एषणात्रयविनिर्मुक्तानामपि सन्न्यासिनां या लोकदुःखप्रहाणाय प्रवृत्तिः सा न तेषां भोगफलिका, एतेनैव भोगपर्यन्तस्थायिनः कर्तुः अभावेऽपि प्रवृत्तिरुपपद्यताम्? इति हि पूर्वपक्षिणां तात्पर्यं, तदेतत् निराकुर्वन्नाह, तन्नेति।—तत्रापि—कारुणिकानां विरागात् प्रवृत्तावपि, तदुपकारेण—दुःखिनां दुःखप्रहाणरूपोपकारेणेत्यर्थः, स्वधर्मलाभात्—विरक्तानामपि कारुणिकानां पुण्योदयादित्यर्थः। ननु न ते रागिपुरुषवत् फलमभिसन्धाय तेषु परोपकारादिषु प्रवर्तन्ते इति कामनाविरहेण कुतस्तेषां धर्मलाभः? इत्याशङ्कायाम् उत्तरमाह, धर्मानभिसन्धानेऽपीति।—तथा च, तेषां कामनाविरहेण भोगमात्रफलकधर्मानुदयेऽपि चित्तशुद्धिज्ञानोत्पत्तिद्वारा मोक्षफलकधर्मोदयस्य सम्भवात् मोक्षापत्तिः सम्भवतीति भावः ॥ ३६ ॥

प्रकारान्तरेण क्षणभङ्गवादं निराकर्तुं सूत्रमवतारयति, दूषणेति।—सर्वेषामेव भावानां क्षणिकत्वमभ्युपगच्छतां बौद्धानां मते दृष्टान्तः न सम्भवति, पक्षताऽवच्छेदकधर्माश्रयस्यैव वस्तुनः दृष्टान्तत्वम् इति मतेनायं दोषो द्रष्टव्यः। माऽस्तु सर्वेषां भावानां पक्षे प्रवेश इति चेत्? तत्राह, अप्रवेशे इति।—पक्षताऽवच्छेदकधर्मानाक्रान्तत्वे इति तदर्थः; प्रथमानुमाने दृष्टान्तसिद्ध्यर्थं पक्षताऽवच्छेदकानाक्रान्तत्वेन दृष्टं वस्तु, द्वितीयानुमाने पक्षीकृत्य तत्र हेत्वन्तरेण क्षणिकत्वरूपसाध्यस्य सिद्धिर्भविष्यति इति अथेत्यादिवाक्यतात्पर्यम्; तदेतत् द्वितीयानुमानपर्यन्तानुधावनमपि दृष्टान्तासिद्ध्या अकिञ्चित्करमिति दर्शयन्नाह,—तत्रापीति ॥ ३७ ॥

ननु प्रथमानुमानेन पक्षीकृततया सिद्धस्य वस्तुन एव दृष्टान्तत्वमस्तु? इत्याशङ्कायां

**युगपज्जायमानयोर्न कार्य्यकारणभावः ॥३८॥**

सव्येतरविषाणयोरिव युगपज्जायमानयोः क्षणक्षणार्थक्रिययोः । एतच्चासकृदुक्तम् ॥ ३८ ॥

पूर्व्वापरकालभावितामात्रात् कार्य्यकारणभावो भविष्यति ? इत्यत आह,—

**पूर्व्वापाये उत्तरायोगात् ॥ ३९ ॥**

---

प्रकारान्तरेण क्षणभङ्गवादं निराकुर्व्वन् सूत्रान्तरमवतारयति, क्षणिकपक्षे चेति ।— अयमिदं तात्पर्य्यं,—कार्य्यद्रव्यं हि स्वसमवायिकारणेनानुगतं सर्व्वत्र दृश्यते, यत् येनानुगतं न भवति न तत् तत्समवायिकारणकं लोके दृष्टचरम् ; एवञ्च कारणकार्य्ययोः उपादानोपादेयभावेन मिलितयोः आद्यस्य पूर्व्वापरक्षणद्वयवर्त्तित्वम् अवश्यमभ्युपेयम् ; तथा च, कार्य्योत्पादक्षणे कारणस्य सत्त्वम् अवश्यमभ्युपेयम्; अन्यथा युगपज्जायमानयोः सव्येतरविषाणयोः यथा कार्य्यकारणभावः न कस्याप्यभिमतः, तथा युगपज्जायमानयोः मृद्घटयोरुपादानोपादेयभावः सुतरां दुर्व्वचः स्यात् । क्षणक्षणार्थक्रिययोः,—उपादानकारण-तत्समवेतकार्य्ययोरित्यर्थः॥ ३८ ॥

ननु कार्य्योत्पादकाले उपादानकारणस्य सत्त्वं नापेक्षणीयं पूर्व्ववर्त्तितयैव तस्य कारणत्वम् अस्तु ? इत्याशङ्कते,—पूर्व्वापरेति । तामिमामाशङ्कां निराकर्त्तुं सूत्रमुत्थापयति, अत आहेति ।—यद्यतिशयाधायकत्वमिति कारणं कार्य्यद्रव्येण सम्बद्धम् असम्बद्धं वा कार्य्यमुत्पादयति इति पृष्टेन क्षणभङ्गवादिना किं नामोत्तरं देयम् ? यदि नाम सम्बद्धमेव कारणं कार्य्यमुत्पादयति इति उत्तरं स्यात्, तदा निरूपणीयः कोऽसौ सम्बन्धो नाम ? संयोगः, समवायः, स्वरूपं वा ? इति ; सर्व्वथैव कार्य्योत्पत्तिक्षणे असत्तयाऽभिमतस्य कारणस्य कार्य्यद्रव्येण सम्बन्धोऽस्तीति वदन् क्षणभङ्गवादी कथं नामोन्मत्तवत् उपहसनीयः न स्यात् ? असम्बन्धेऽपि पूर्व्ववर्त्तितामात्रेण कारणस्य कार्य्यकारणभावः सम्पद्यताम् ? इति चेत् क्षणभङ्गवादिनामभिमतं स्यात्, तदा घटोत्पत्तेः प्राक् सतः दण्डपाषाणादेरपि विद्यमानतया मृद इव घटकारणत्वं, न दण्डपाषाणादिषु इतीयं व्यवस्था दत्तजलाञ्जलिः स्यात् ; पूर्व्ववर्त्तितायाः अविशेषेण दण्डपाषाणादावपि वर्त्तमानत्वात् । ननु कार्य्योत्पत्तिक्षणे असदपि कारणं कार्य्ये कमप्यतिशयं जनयदेव उदासीनवस्त्वन्तरात् व्यावृत्तं कारणत्वभाक् भविष्यति ? उदासीनानां यदि तत्रापि पूर्व्ववर्त्तित्वे तत्कार्य्यं प्रति

भवेदेवं, यद्यतिशयाधायकत्वं स्यात्। तदेव त्वशक्यं, क्षणिकत्वादिति ॥ ३९ ॥

एतत् स्पष्टयति,—

**तद्भावे तदयोगादुभयव्यभिचारादपि न ॥४०॥**

हेतुकाले कार्य्याभावादुभयव्यभिचारादपि न कार्य्य-कारणभावः। आस्तां तावदर्थक्रियाकारित्वम्, अयं हेतुरिदं कार्य्यमिति व्यवहारोऽपि न स्यात् ॥ ४० ॥

अथ हेतोः कार्य्यकाले सत्त्वमप्रयोजकं, पूर्वकालभाविता-मात्रेण भविष्यति ? इत्यत आह,—

---

तादृशातिशयानाधायकतया न कारणपदवाच्यत्वम् ? इति चेत्, नैवम् ; एकक्षणिकस्य वस्तुनः क्षणान्तरवर्त्तिवस्तुगतातिशयाधायकत्वं न सम्भवदुक्तिकं, तथाविधे चार्थे दृष्टान्तासिद्धेः बुद्ध्यनवतारात् इति निर्गलितार्थः। क्वचित "उत्तरयोगात्" इत्यपि पाठः। पूर्वस्य क्षणिकतया अभ्युपगतस्य कारणस्याभावे उत्तरस्य—कार्य्यत्वेनाभ्युपगतस्य वस्तुनः, योगात्—सम्बन्धात, काले इति शेषः। तथा च, कारणनाशाधिकरणक्षणे एव कार्य्यस्य वर्त्तमानत्वात् न तयोरुपादानोपादेयभावः अतिशयाधानद्वारेण सम्भवतीति भावः ॥ ३९ ॥

सूत्रमिदं सूत्रान्तरेण व्याकुर्वाणस्य सूत्रकृतः अभिप्रायं विशदयन्नाह, एतदिति।—एतत्—"पूर्वापाये उत्तरायोगात्" इति सूत्रं, स्पष्टयति—विवृणोति, सूत्रकार इति शेषः। तद्भावे इत्यस्य अर्थमाह, हेतुकाले इति।—अत्र "हेतुहेतुमद्भावकाले" इति क्वाचित्कः पाठः, स न साधीयान्। तदयोगात् इत्यस्यार्थमाह—कार्य्याभावादिति। उभय-व्यभिचारात्—अन्वयव्यतिरेकव्यभिचारादित्यर्थः ; तथा हि, कारणासत्त्वे कार्य्यस्य अभावात् कार्य्यकाले च कारणस्याभावात उभयव्यभिचारः फलित इति भावः। फलतः क्षणिकतया अर्थक्रियाकारित्वाभावेऽपि व्यावहारिकोऽयं कार्य्यकारणभावः न तात्त्विक इति वादिनां मतं निरसितुमाह, आस्तामिति।—तथा हि, पूर्वापरक्षण-वर्त्तितामात्रेण यदि कार्य्यकारणव्यपदेशः, तदा कार्य्याव्यवहितप्राक्क्षणे स्थितानां सर्वेषामेव भावानां कारणत्वप्रसङ्गः ; एवं कार्य्यक्षणे समुत्पन्नानाम् उदासीनानामपि तत्कार्य्यत्वेन व्यवहारप्रसङ्गः दुर्निवारः क्षणभङ्गवादिमते स्यात इति तात्पर्य्यम् ॥ ४० ॥

"कार्य्यकाले कारणसत्त्वमप्रयोजकम्" इति मतं प्रकारान्तरेण दूषयितुं तन्मतम्

पूर्वभाविमात्रे न नियमः ॥ ४१ ॥

किं भिन्नसन्तानस्य ? एकसन्तानस्य वा ? भिन्नसन्तानस्य चेत्—अतिप्रसक्तिः । एकसन्तानस्य चेत्—निरन्वयध्वंसः । तस्य हि भिन्नसन्तानेन तुल्यत्वान्न नियमः । अन्वयश्च नास्ति इत्युक्तम् । अथाविद्यमानस्यापि हेतुता दृश्यते, यथेषुक्षेपकस्य

उत्थापयति—अथ हेतोरिति । एतद्दूषणसूत्रमवतारयति, अत आहेति ।—पूर्वभाविमात्रे न नियमः,—पूर्वक्षणमात्रवर्त्तितया अङ्गीक्रियमाणे वस्तुनि कारणत्वम् इति नियमव्यवस्था न सम्भवति इति भावः । सूत्रार्थं विवृण्वन् विकल्पयति, किमित्यादि ।—भिन्नसन्तानस्य—भिन्नसन्तानान्तःपातितया अङ्गीक्रियमाणस्य पूर्वभाविनः क्षणिकस्य इत्यर्थः ; एवम् एकसन्तानस्येति—एकसन्तानान्तःपातितया अङ्गीक्रियमाणस्य पूर्वभाविनः क्षणिकस्य, कारणत्वमङ्गीक्रियते ? इति शेषः । तत्र आद्ये दूषणमाह, भिन्नसन्तानस्येति ।—अतिप्रसक्तिः,—असम्बन्धत्वाविशेषात् सर्वेषामेव भिन्नसन्तानानाम् अन्तःपातिषु पूर्वभाविषु यावत्स्वेव क्षणिकेषु तत्तत्कार्य्यं प्रति अकारणतया सर्वैरेव वादिभिः अङ्गीकृतेषु कारणत्वप्रसक्तिरिति भावः । द्वितीये विकल्पदूषणमाह, एकसन्तानस्येति ।—निरन्वयध्वंस इति कारणे रूपान्तरेण वर्त्तमानत्वम् अत्र अन्वयपदार्थो बोध्यः ; तथा च, व्यक्ततया अव्यक्ततया च भावानां सत्त्वं द्विविधं परिणामवादिभिरङ्गीक्रियते ; अत्राव्यक्ततया यत् सत्त्वं तदेव ध्वंस-प्रागभावपदाभ्यां व्यपदिश्यते, येषां बौद्धानां सर्वे एव भावाः क्षणमवस्थाय विनश्यन्ति, न रूपान्तरेण कारणे अवस्थाय अव्यक्तभावं व्रजन्ति, तेषामेव मते ध्वंसस्य निरन्वयत्वं सिध्यति । स चैव निरन्वयो ध्वंसः पूर्वापरभाविनोः क्षणिकयोर्वस्तुनोः कार्य्यकारणभावं विघटयति इति तात्पर्य्यम् । निरन्वयध्वंसे कथं कार्य्यकारणभावो नाङ्गीक्रियते ? इत्याशङ्कायामाह, तस्य हीति ।—भिन्नसन्तानेन—विभिन्नसन्तानान्तःपातिक्षणिकभावेन, तुल्यत्वात्—कार्य्योत्पत्तिकाले निरन्वयध्वंसप्रतियोगित्वेन अत्यन्तासद्रूपतया समानत्वादिति भावः, समानसन्तानान्तःपातिनः कारणतया अभ्युपगतस्य क्षणिकस्य भावस्य इति शेषः । न नियमः,—न कारणमिति व्यवस्था, सम्भवतीति शेषः । तत्र हेतुमाह, अन्वयश्चेति ।—तयोः पूर्वापरभाविनोः युगपदसतोः वस्तुनोः कार्य्यकारणभावनियामकः कश्चिदन्वयः,—सम्बन्धः नास्ति यतो भवन्मते, अतः न तयोः कार्य्यकारणव्यवस्था । अथभङ्गवादी पुनः शङ्कते, अथेति ।—अविद्यमानस्य—इषुक्षेपानन्तरं मृतस्य, महिष्यादिमरण-

इषुक्षेपानन्तरं महिष्यादिमरणं, पश्चादिषुविद्धस्य मरणकर्तृत्वम्? तन्न, तत्रापि मरणे व्यापारद्वारेणान्वयात् ॥ ४१ ॥

बाह्यवस्तूपरागात् बन्ध इत्युक्तम्। ननु बाह्यस्य वस्तु नास्ति, विज्ञानात्मकत्वाज्जगत इति विज्ञानवादिमतं निराकरोति,—

## न विज्ञानमात्रं, बाह्यप्रतीतेः ॥ ४२ ॥

न विज्ञानमात्रं जगत्; तथा सति "अहं घटः" इति प्रत्ययः स्यात्, न तु "अयं घटः" इति। वासनाविशेषात्? इति चेन्न, बाह्या-

---

र्थे असत इति भावः; तथा हि, महिष्यादिमरणक्षणे इषुक्षेपकारिणः अविद्यमानत्वेऽपि यथा महिष्यादिमरणं प्रति तस्य कारणत्वं सर्वैरङ्गीक्रियते, तद्वेव उपादेयोत्पत्तिक्षणे उपादानस्य असत्त्वेऽपि अस्तु तयोरुपादानोपादेयभाव इति। तदेतन्मतं दूषयति, तन्नेति।—व्यापारद्वारेण—इषुक्षेपादिरूपव्यापारद्वारेण। तथा च, परिणामवादिनामस्माकं यथोक्तस्थलेऽपि अव्यक्तरूपेण व्यापारवतः कारणस्य विद्यमानत्वादेव नोक्तापत्तिः सम्भवति इति हृदयम् ॥ ४१ ॥

अतैव विज्ञानवादिमतं दूषयितुं सूत्रमुत्थापयति, बाह्येति।—बाह्यवस्तूपरागादिति—अत्र बाह्यवस्तुपदेन प्रकृतिर्विज्ञेया। इत्युक्तं, "न नित्यशुद्धबुद्धमुक्तस्वभाव" इत्यादि सूत्रे इति शेषः। अत्र बाह्यार्थसद्भावम् असहमानः विज्ञानवादी बौद्धः शङ्कते, नन्विति।—विज्ञानातिरिक्ततया न कस्यापि सत्त्वम् इति विज्ञानवादिमतम्; तथा च, वस्तु बाह्यं नास्ति—विज्ञानातिरिक्ततया न वर्तते इत्यन्वयो वाच्यः। अत्र वस्त्वेव उद्देश्यं, न बाह्यमिति; तथात्वे विज्ञानवादिमते बाह्यस्य सत्त्वे असत्त्वे च उभयथाऽपि वाक्यस्य अप्रामाण्यप्रसक्तिः, अलीकप्रतियोगिकाभावाङ्गीकारप्रसक्तिर्वा दोषः स्यात् इति ध्येयम्। तथा च, घटादिज्ञानं न स्वव्यतिरिक्तवस्तुप्रकाशकं, ज्ञानत्वात् स्वाप्नविज्ञानवत् इति तेषामनुमानरीतिः। तदेतन्मतं दूषयति, नेति।—जगत् विज्ञानातिरिक्ततया असदिति मतं न विचारसहम् इति तदर्थः। तथा सति—जगतो विज्ञानमात्रत्वे, "अहं घटः" इति प्रत्ययः स्यात्—अहमाकारेण प्रतिभासमानात् विज्ञानात् अभिन्नत्वे घटादेः तथैव प्रत्ययो भवितुं युक्त इत्यर्थः, अहमिति विज्ञानात् भिन्नतया प्रतीयमानस्य बाह्यस्य तादात्म्यावगाहिघटादिविषयकः प्रत्ययः सर्वानुभवविरुद्ध इति भावः। वासनाविशेषादिति।—विज्ञानवादिमते विज्ञानेषु आकारार्पणक्षमाणां बाह्यविषयाणामसत्त्वेऽपि विज्ञानवैचित्र्योपपत्तये संस्कारापरपर्यायवासनावैचित्र्यमेव विज्ञान-

भावे घटवासनाया एवासत्त्वात् कथं विशेषः? किञ्च, वासनाया अपि कारणं वासनैव? उत बाह्यवासनाऽपि? वासनाऽपीति पक्षे अन्यस्यापि सत्त्वात् स एव बाह्योऽर्थः। ननु नास्त्येव बाह्योऽर्थः, अवयवातिरिक्तस्यावयविनोऽभावात्? तथा हि, अवयवावयविनो-रेकत्वादेकत्वप्रतीतेः; चलति अवयवेऽवयवी चलति, अल्पावयवे चलति अवयवी न चलतीति विरुद्धधर्माध्यासेन भेदान्नैकत्वम्। एवं रक्तारक्तावृतानावृतदेशातद्देशत्वादिदोषा उदाहार्य्याः।

वैचित्र्यप्रयोजकम् इत्यभ्युपगम्यते; एवं सति विज्ञानवैचित्र्योपपत्त्यर्थं बाह्यविषयाणां सन्निकर्षस्य च स्वीकारेण बाह्यार्थवादिमते सम्भावितं गौरवं नाङ्गीकार्य्यम् इति हि विज्ञानवादिनामाशयः। तदेतन्मतं दूषयितुमाह, बाह्याभावे इति।—इदमाकूतं—या घटादिवासना तत्तज्ज्ञानवैचित्र्यप्रयोजकतया अङ्गीक्रियते भवद्भिः, सा हि स्वरूपतो ज्ञानाद्भिद्यते न वा? भेदपक्षे—आयातं बाह्यार्थेन, ज्ञानभिन्नस्यैव बाह्यत्वात्; अभेदपक्षे—तद्वैचित्र्यस्य किं नाम प्रयोजकं भवेत्? स्वभाव इति चेत्, कोऽयं स्वभावः? ज्ञानाद्भिन्नः? अभिन्नो वा? इति। उभयथाऽपि पूर्ववदेव दोषो द्रष्टव्यः। एतदेव विशदयन्नाह, किञ्चेति।—वासनायाः,—ज्ञानवैचित्र्यप्रयोजकसंस्कारस्य, वासनैव—बाह्यार्थनिरपेक्षसंस्कार एव। बाह्यवासनाऽपीति—बाह्यार्थविषयकज्ञानजन्या वासना इति तदर्थः। तदेतन्मतं वासनाजनकज्ञानस्य विषयतया बाह्यार्थस्य अवश्यमङ्गीकरणीयतया न सिध्यति इति न जगतो विज्ञानमात्रत्वमित्यवसेयम्। विज्ञानवादी प्रकारान्तरेणावतिष्ठते, नन्विति।—योऽयं बाह्योऽर्थः बाह्यार्थवादिभिः प्रत्यक्षसिद्धतया अङ्गीक्रियते सः अवयवी वा स्यात्? अवयवो वा स्यात्? द्वितीये अवयवातिरिक्ततया अवयविनः अनुपलब्धेः नावयविरूपता तस्य सम्भवति; तदेतदाह, अवयवातिरिक्तस्येति।—एकत्वात्—अभिन्नत्वात्, एकत्वप्रतीतेः,—अभेदप्रतीतेः। अव-यवावयविनोः अभेदवादम् आरम्भवादमवलम्ब्य दूषयन्नाह, चलतीति।—तथा च, समग्रे अवयवे चलति अवयविन्यपि चलति इति व्यवहारात् अल्पावयवे चलति अवयविनि न चलति इति व्यवहारात् अवयवविरुद्धधर्माध्यासो अवयविनि प्रायेण हि दृश्यते लोके, तस्मात् नावयवेभ्यः अवयविनः अभेदः सिध्यति इति ज्ञेयम्। अन्येषामपि विरुद्धधर्माणाम् अध्यासं दर्शयन् अवयवावयविनोर्भेदं साधयति—एवमित्यादिना। अवयविनः असत्त्वेऽपि अवयवमात्रेणैव बाह्यार्थसद्भावः सिध्यति इति-वादिनां

मा भूदवयवी, तथाऽपि न बाह्यार्थापलापः, परमाणुपुञ्जस्यैव स्थूलत्वेन ग्रहणात् । न, अवयविना हि कार्य्येण परमाणुः अनुमातव्यः, तदभावे केनानुमातव्यः ? परमाणूनामतीन्द्रियत्वात् पुञ्जेऽपि किञ्चिदतिशयानाधानात् "स्थूलोऽयम्" इति प्रत्ययो भ्रान्त इति विज्ञानमात्रं जगत् इति । अत्रोच्यते—अवयवावयविनोर्भेदात् । अपि च द्वयोरन्यत्वात् न अवयवकम्पेऽवयवी कम्पते, यत्र तु बहुतरावयवकम्पस्तत्रावयवी कम्पत एव । एवं रक्तारक्तादिविरोधेऽपि सिद्धान्ता वक्तव्याः । तस्मात् सिद्धो बाह्योऽर्थः । वासनैवेति पक्षे सर्वदा ज्ञानोत्पत्तिरिति ॥ ४२ ॥

---

बौद्धविशेषाणां मतं दूषयितुं तन्मतमादौ उपन्यस्यति—मा भूदिति । परमाणुपुञ्जस्यैवेति ।—तथा च, विजातीयसंयोग एव परमाणुपुञ्जस्य स्थूलत्वेन ग्रहणं प्रति हेतुर्वक्तव्यः; स्थूलत्वेनेत्युपलक्षणम्, एकत्वेनेत्यपि ग्राह्यं, स्थूलत्वं महत्त्वं, तच्च सांवृतिकं, न तु वास्तवम् । बौद्धमते स्थूलताया अवस्तुधर्मत्वात् । तदेतन्मतं दूषयति, नेत्यादिना ।—अवयवी यदि न सिध्येत् तदा केन हेतुना परमावयवरूपपरमाणूनाम् अनुमानं भविष्यति ? न खलु परमाणवः प्रत्यक्षत्वेनाभ्युपगम्यन्ते, अवयविरूपकार्य्यलिङ्गकानुमानेनैव तेषां सिद्धेः ; तथा च, परमाणुपुञ्जमादाय बाह्यार्थसद्भावोपपत्तिः बौद्धानां न कथमपि प्रमाणपदवीमारोढुमीष्टे । बाह्यार्थे स्थूलताप्रत्ययो भ्रान्तिरेव इति वादिनां मतमपि दूषयन्नाह, परमाणूनामिति ।—अतीन्द्रियत्वादिति—तथा च, परस्परविजातीयसंयोगजनितातिशयविशेषविरहितानामेव परमाणूनाम् अतीन्द्रियत्वम् इत्यन्यथाऽनुपपत्त्या अङ्गीकरणीयमिति बौद्धमतनिष्कर्षः । दूषयति, अत्रोच्यते इति ।—भेदादिति—अत्र भेदपदं न आत्यन्तिकभेदपरम्, अपि तु अभेदघटितभेदपरम् ; अन्यथा परिणामवादिनां साङ्ख्यानाम् आरम्भवादिताऽऽपत्तेः द्वयोरवयवावयविनोः अन्यत्वात् अभेदघटितभेदवत्त्वात् ; तथा च, अवयविनोः कपालघटयोः मृत्त्वेन रूपेण अभेदो वर्त्तते, कपालत्वेन घटत्वेन च भेदोऽपि वर्त्तते इति अभेदघटितभेदसिद्धिः । कदाचित् अवयवकम्पे अवयवी न कम्पते कदाचित् तु कम्पते इत्यनयोः कम्पाकम्पयोः अवयविगतयोः कारणव्यवस्थायाम् उपपत्तिं दर्शयन्नाह—अपि चेति । बाह्यार्थसिद्धिं बौद्धमतदूषणपुरःसरं समुपसंहरन्नाह—तस्मादिति । वासनैव ज्ञानं प्रति कारणम् इति वादिनां मतं दूषणान्तरेण निराकुर्वन्नाह, वासनैवेति ।—अत्रार्थं

निर्विषयस्य ज्ञानस्यादर्शनात् विषयाभावात् ज्ञानमपि नास्तीति शून्यवादी आह,—

**तदभावे तदभावाच्छून्यं तर्हि ॥ ४३ ॥**

विषयाभावे ज्ञानाभावाच्छून्यम्। स्वविषयत्वे कर्त्तृकर्म-विरोध इति ॥ ४३ ॥

**शून्यं तत्त्वं, भावो विनश्यति, वस्तुधर्मत्वात् विनाशस्य ॥ ४४ ॥**

भावः,—वासना हि संस्काररूपतया ज्ञानजन्यत्वात् प्रतिविज्ञानव्यक्तेरनन्तरं समुत्पद्यते इति बौद्धैरवश्यमङ्गीकार्य्यम ; तथा च, प्रतिक्षणमेव ज्ञानजन्यायाः वासनायाः समुत्पादेन तस्याश्च कारणान्तरनैरपेक्ष्येण समानविषयकज्ञानोत्पत्तिं प्रति फलोपधायकता-रूपहेतुताया अङ्गीकर्त्तव्यतया प्रतिक्षणं समानविषयकज्ञानोत्पादस्य आपत्तिः अप्रत्य-परीक्षावेवेति सूक्तं "सर्वदा ज्ञानोत्पत्तिः" इति ॥ ४२ ॥

स्वाप्नप्रतीतिदृष्टान्तेन बाह्यार्थसद्भावेऽपि विचित्राकाराणां ज्ञानानां सम्भवेन न काऽपि प्रागुक्तानुपपत्तिरिति विज्ञानवादिनां मतं निराकुर्वन् शून्यवादी स्वमतं प्रतिपादयितुमाह, निर्विषयस्येत्यादि।—इदमत्राकूतं—न खलु ज्ञानं नाम विषयं विना सम्भवति ; प्रत्यक्षसिद्धानामपि विषयाणां यदि विषयतयैव अस्तित्वापलापः, तदा स्वप्रकाशस्यापि ज्ञानस्य स्वं प्रति विषयतया बाह्यार्थवदेव अपलापः किं न स्यात् ? तथा च, बाह्यार्थवत् विषयत्वात् ज्ञानमपि नास्ति इति ; सुतरां सर्वशून्यत्वमेव फल-बलादायातम् इति शून्यवादिमतनिष्कर्षः। ज्ञानात् भिन्नस्य ज्ञानविषयस्य अस्तु नाम असत्त्वं, स्वविषयत्वे तु ज्ञानस्य मिथ्यात्वं न सिध्यति ? इति शङ्कायामाह, स्वविषय-त्वे इति।—अयं भावः,—यद्येतत् ज्ञानस्य स्वप्रकाशत्वमतं, तदपि शून्यवादिभिः परमार्थतः नाभ्युपेतव्यं, तथात्वे कर्मकर्त्तृविरोधः दुष्परिहरणीयः स्यात् ; एवञ्च भट्टमतवत् शून्यवादिमतेऽपि ज्ञानमात्रस्यापि परतः प्रकाश्यत्वं फलत आयातम् ॥ ४२ ॥

अत एवोक्तं विज्ञानभिक्षुभिः शून्यवादिमतनिष्कर्षप्रदर्शनावसरे "नन्वनुभवे कस्यापि विवादाभावेन नास्ति तत्र प्रमाणापेक्षा ? इति चेत्, न, शून्यवादिनामेव तत्र विवादात्" इत्यादिना ग्रन्थेन। एतदेव शून्यवादिमतं प्रपञ्चयितुं सूत्रान्तरमवतारयति। वस्तुतस्तु पूर्वसूत्रे विषयाभावेन विज्ञानवादिनं प्रति ज्ञानस्यापि अभावप्रसङ्गेन शून्य-

यदि भावरूपं तत्त्वं स्यात् भावस्य नाशात् तत्त्वनाशेऽनिर्मोक्षः, वस्तुधर्मत्वात् विनाशस्य वस्तुनोऽवश्यं विनाशात्? ॥४४॥

समाधानमाह,—

## अपवादमात्रमबुद्धानाम् ॥ ४५ ॥

अभावो न नश्यतीति वाङ्मात्रं, न तु तत्त्वम्। अबुद्धानाम् अज्ञातशास्त्राणाम्। प्रागभावस्य विनाशदर्शनात्, सत्कार्य्यसिद्धौ भावस्याविनाशात्। तिरोभावे नाशशब्दप्रयोगेऽपि प्रकृतिपुरुषयोरनाशात्। नन्वभाव एव नास्ति, कुतस्तस्य

---

ताया एव प्रसङ्गो दर्शितः सिद्धान्तिना, तमेव प्रसङ्गम् इष्टतया अङ्गीकुर्वन् शून्यवादी बौद्धः पुनः प्रत्यवतिष्ठते, शून्यं तत्त्वम् इत्यादिना।—अयमाशयः,—निरन्वयश्चेत् भावानां विनाशः प्रमाणबलेन व्यवस्थाप्यते, तदा विनाशस्य वस्तुधर्मत्वादेव सर्वेषाम् एव भावानां विनाशावश्यम्भावात् दुःखविनाशरूपः मोक्षोऽपि अयत्नादेव सिध्यति इति व्यर्थो मोक्षोपायान्वेषणप्रयासः ॥ ४४ ॥

तदेतत् शून्यवादिमतं दूषयितुं सिद्धान्तसूत्रमवतारयन्नाह, समाधानमाहेति।—अभावो नेति—अधिकरणस्वरूपातिरिक्तोऽभावः न प्रमाणेन व्यवस्थापयितुं शक्यते इति भावः। नन्वेवं घटो ध्वस्तः घटो नश्यति इति व्यवहाराणां का गतिः? इति चेत्, तत्राह, नश्यतीति।—वाङ्मात्रं—व्यवहारमात्रं, न तु तत्त्वमिति; तथा च धर्मिव्यतिरेकेण अभावाख्यस्य कस्यचित् वस्तुनः न वास्तवत्वमिति भावः। अबुद्धानामिति बौद्धानां विशेषणं, तदर्थमाह— अज्ञातेति। प्रागभावस्य—अनागतावस्थायाः, विनाशदर्शनात्—वर्त्तमानावस्थारूपेण परिणतिदर्शनात्, सत्कार्य्यसिद्धौ, सत्यामिति शेषः। भावस्याविनाशादिति—वस्तुनः निरन्वयध्वंसायोगादित्यर्थः। नन्वेवं नश्यतीत्यादिशब्दानां का गतिः? इति चेत्, तत्राह, तिरोभावे इति।—प्रकृतिपुरुषयोरिति—कार्य्यकारणात्मकप्रधानस्य पुरुषस्य च इति भावः। तथा च, प्राधान्येन द्वावेव पदार्थौ साङ्ख्यस्वीकृतौ, प्रकृतिः पुरुषश्चेति। वस्तुतस्तु साङ्ख्यैः अभावः अङ्गीकर्त्तव्यः। सत्कार्य्यवादिनां तेषां मते नास्ति कस्यचित् भावस्य विनाश इत्यङ्गीकारेणैव सर्वेषामसत्त्वसम्भवे प्रागभावान्योऽन्याभाव-प्रागभावप्रतियोगिकध्वंसप्रभृतीनाम् अभावानां धर्मिव्यतिरिक्ततया सत्त्वस्वीकारेऽपि नास्ति क्षतिरिति नवीनैरभ्युपगतम्। साङ्ख्यसिद्धान्तं व्यवस्थापयितुं प्रवृत्ते, नन्विति।—एवञ्च पूर्वं प्रागभावस्येति पदस्य अनागतावस्थेति योऽर्थः प्रदर्शितः, सः

नाशानाशचिन्ता ? कथं तर्ह्यघटं भूतलमिति ज्ञानम् ? भूतलालम्बनं चेत्, घटवत्यपि भूतले तदभावज्ञानप्रसङ्गः, भूतलस्य तादवस्थ्यात्। केवलभूतलालम्बनमभावज्ञानं, घटे सति कैवल्यं नास्तीति चेत्, किं भूतलस्वरूपमात्रं कैवल्यम् ? तदतिरिक्तं वा ? यदि स्वरूपमात्रं, घटे सत्यपि तस्य सद्भावादभावज्ञानं स्यात् ? अतिरिक्तपक्षे स एवाभावः। अथ भूतलस्यैकाकित्वेऽभावव्यवहारः, घटे सत्यैकाकित्वं नास्तीति क्व अभावव्यवहारहेतुः ? तन्न; एकाकित्वमिकत्वसङ्ख्या वा ? अन्यद्वा ? एकत्वसङ्ख्या च घटवत्यपि भूतलेऽस्ति ; अन्यदिति पक्षे स एवाभावः। विषयावैलक्षण्ये विज्ञानवैलक्षण्याभावात्। ननु भावाभावयोः सम्बन्धाभावात् कथमभावज्ञानम् ? इति। यथा घटोऽयमिति इन्द्रियान्वयव्यतिरेकाज्ज्ञानं, तथाऽभावज्ञानमपि सकारणम्। कार्य्यदर्शनाद्धि कारणं परिकल्प्यते, न तु दृष्टकार्य्यापलापः

---

प्राचां सिद्धान्तानुसारेण ; नवीनमते तु प्रागभावपदस्य यथाश्रुत एव अर्थः ग्राह्यः इति सुधीभिरवधेयम्। सिद्धान्ती शङ्कते, कथं तर्हि इति।—अभावस्य प्रत्याख्याने "अघटं भूतलम्" इति ज्ञानं किमालम्बनं स्यात् ? इति प्रश्नतात्पर्य्यम्। पूर्वपक्षिमतेन तज्ज्ञानस्यालम्बनं दर्शयन्नाह—भूतलालम्बनमिति। सिद्धान्ती दूषयति, घटवत्यपीति।—तथा च, अधिकरणातिरिक्ताभावानङ्गीकारे भूतले घटवत्त्वदशायां "भूतलमघटम्" इति ज्ञानस्य प्रसङ्गः। पूर्वपक्षिदर्शितापत्तिनिराकरणायाह—केवलेति। विकल्पासहत्वात् अयमपि पक्षो न विचारसहः इति दर्शयन् सिद्धान्ती आह—किमिति। आद्ये दूषणमाह—यदीति। द्वितीये दूषणमाह—अतिरिक्तेति। प्रकारान्तरेण कैवल्यं व्यवस्थापयितुं पूर्वपक्षी शङ्कते—अथेति। सिद्धान्ती दूषयति, तन्नेति।—अभावस्य वास्तवत्वे भावरूपिणानाप्रतियोगिषु सम्बन्ध एव न सिध्येत्, तदसिद्धौ च कथं प्रतियोगिघटितम् अभावज्ञानं प्रमाणपदवीमारोढुं प्रभवेत् ? इति। शङ्कते—नन्विति। तामिमां शङ्कां परिहरन्नाह, यथेति।—प्रतियोगिघटितस्याभावज्ञानस्य सर्वव्यवहारसिद्धस्य लोकसिद्धप्रामाण्यान्यथाऽनुपपत्त्यैव भावाभावयोः कोऽपि सम्बन्धः अवश्यमभ्युपेय इति नीता

शक्यते वक्तुम् । किञ्च, अनियतपदार्थवादित्वादस्माकं यथोपपन्नः सम्बन्धोऽपि कश्चिद्भविष्यतीति का नो हानिः ? तस्मात् सिद्धोऽभाव इति ॥ ४५ ॥

समाधानान्तरमाह,—

**उभयपक्षसमानक्षेमत्वादयमपि ॥ ४६ ॥**

अयमपि शून्यवादः क्षणिकपक्ष-विज्ञानपक्षतुल्यक्षेमत्वान्निराकार्य्यः । यथा प्रत्यक्षप्रत्यभिज्ञया क्षणिकनिराकरणं, बाह्यवस्तुप्रत्यक्षात् विज्ञाननिराकरणं, तथाऽयमपि प्रत्यक्षेणैव समस्तविश्वदर्शनाच्छून्यवादो निराकार्य्यः ॥ ४६ ॥

दूषणान्तरमाह,—

**अपुरुषार्थत्वमुभयथा ॥ ४७ ॥**

यदि शून्यमभावः, को हि स्वस्यात्माऽभावाय यतेत ? मोक्षः पुरुषार्थ इति भावशब्दप्रयोगश्चानर्थकः ? अथ भावाभावव्यतिरिक्तं शून्यम् ? एवम्भूतस्य वस्तुनोऽदर्शनादप्यपुरुषार्थत्वम् ॥ ४७ ॥

---

शङ्का अवतरतीति भावः । अभावस्य धर्मिस्वरूपव्यतिरिक्तत्ववादिनां नवीनसाङ्ख्यानां मतमुपसंहरति—तस्मादिति ॥ ४५ ॥

शून्यवादे दोषान्तरमवतारयन्नाह—समाधानान्तरमिति । उभयेति ।—उभयपक्षौ—क्षणिकपक्ष-विज्ञानपक्षौ, तयोः समानं क्षेमं यस्य तद्भावः तस्मादित्यर्थः । अयमित्यनेन शून्यवादः परामृश्यते । तदेतत् प्रपञ्चयति वृत्तिकारः, अयमित्यादिना । क्षणिकनिराकरणं—सर्वेषां भावानां क्षणिकत्वखण्डनं, विज्ञाननिराकरणं—विज्ञानानां स्वव्यतिरिक्तवस्तुविषयकत्वाभावखण्डनम् ; तथा च, प्रत्यक्षविरोधेनैव तत् उभयवादवत् शून्यवादो निराक्रियते इति तत्त्वम् ॥ ४६ ॥

शून्यवादे दूषणान्तरमवतारयन्नाह—दूषणेति । उभयथा—शून्यस्य भावत्वे अभावत्वे वा इत्यर्थः । भावशब्दप्रयोगश्चेति—तथा च, मोक्षे पुरुषार्थत्वरक्षणाय तस्य भावरूपत्वम् अवश्यमेष्टव्यं, स च मोक्षः साङ्ख्यनये दुःखात्यन्तनिवृत्त्युपलक्षितचिदात्मस्वरूप एव फलतः अवसीयते इत्यवधेयम् ॥ ४७ ॥

शून्यवादिनं निराकर्त्तुं देहपरिमाण आत्मेति क्षपणक-मतमाह,—

**न, गतिविशेषात् ॥ ४८ ॥**

न शून्यं तत्त्वं, शून्यस्य गत्यभावात् । दृश्यते च गतिः ; तथा च श्रुतिः,—"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलात् यमः" "पापेन नरकं याति, पुण्येन स्वर्याति, ज्ञानेन ब्रह्मलोकं याति" इति ॥ ४८ ॥

---

प्रसङ्गेन शून्यवादिमतनिराकरणपरक्षपणकमतम् अवतारयति,—शून्येति । सूत्रं योजयन्नाह—नेति । आत्मनः शून्यरूपत्वे तत्र गतिश्रुतिर्नोपपद्यते इत्याह—गत्यभावादिति । आत्मनः गतिमत्त्वे प्रमाणभूतां श्रुतिम् उदाहरति—अङ्गुष्ठेति । श्रुत्यन्तरमाह, पापेनेति ।—प्रथमश्रुतौ आकर्षणक्रियाकर्मत्वेन, द्वितीयश्रुतौ यातीति क्रियाकर्तृत्वेन आत्मनः गतिसिद्धौ तस्य मध्यमपरिमाणवत्त्वम् अङ्गीकार्य्यम् इति क्षपणकानामाशयः । ननु मध्यमपरिमाणाभावेऽपि परमाणूनां गत्यवगतेः अस्त्वात्मनामपि गतिमताम् अणुपरिमाणत्वम् ? इति चेत्, न; तथात्वे सर्वशरीराव-च्छेदेन युगपच्चैतन्योपलब्धेः अनुपपत्तिः प्रसज्येत, अतः शरीरपरिमाणत्वमेव आत्मनाम् इति क्षपणकानामाशयः । अथ क्षपणकमतनिष्कर्षः । एतेषां नये सप्त पदार्थाः अङ्गीकृताः ; ते च—जीवः, अजीवः, आस्रवः, संवरः, निर्जरः, बन्धः, मोक्षश्चेति । तत्र जीवो नाम—भोक्ता, तस्य च प्रतिदेहं भेदः । अजीवस्तु—भोग्यवर्ग एव । आस्रवो नाम—मिथ्याप्रवृत्तिः । शमदमादिरूपा या प्रवृत्तिः सैव संवर इत्युच्यते ; सा हि आस्रव-स्रोतसो द्वारं संवृणोतीति संवरशब्देन व्यपदिश्यते । निर्जरशब्देन तप्तशिलारोहणादि गृह्यते ; स च अनादिकालप्रवृत्तिकषायपरूषपुण्यापुण्यप्रहाणहेतुः सुखदुःखोपभोगेन निःशेषं पुण्यापुण्यं जरयतीति निर्जरशब्देन व्यपदिश्यते । बन्धो नाम अष्टविधं कर्म, तत्र चतुर्विधं घातिकर्म ; तद्यथा—ज्ञानावरणीयं, दर्शनावरणीयं, मोहनीयम्, अन्तरायमिति । तत्र न खलु ज्ञानात् वस्तुसिद्धिः व्यभिचारदर्शनादित्यादिरूपो विपर्य्ययः ज्ञानावरणीयं कर्म उच्यते । क्षपणकदर्शनानुशीलनात् नापवर्गः इत्यादिरूपं यद्विपर्य्ययज्ञानं तत् दर्शनावरणीयं कर्म उच्यते । बहुषु मिथो विप्रतिषिद्धेषु शास्त्र-कारैरुपदिष्टेषु अपवर्गमार्गेषु यद्विशेषानवधारणं तदेव मोहनीयं कर्म उच्यते ।

तत् दूषयति,—

## निष्क्रियस्य तदसम्भवात् ॥ ४९ ॥

**क्रियाशून्यस्य पुरुषस्य गमनासम्भवात् ॥ ४९ ॥**

---

अपवर्गमार्गप्रवृत्तानां तद्विघ्नकरं यद्विज्ञानं, तदेव अन्तरायं कर्म इत्युच्यते। तान्येतानि कर्माणि श्रेयोहन्तृत्वात् घातिकर्माणि इति उच्यन्ते। अघातीनि कर्माण्यपि चतुर्विधानि ; यथा—वेदनीयं, नामिकं, गोत्रिकम्, आयुष्कञ्चेति। तत्र शुक्लपुद्गल-विपाकहेतु कर्म वेदनीयम् इत्युच्यते ; तद्धि बन्धप्रत्ययत्वेऽपि तत्त्वज्ञानाविघातकतया न निःश्रेयसं घातिकर्मवत् प्रतिबध्नाति इति अघातिकर्मत्वेन व्यपदिश्यते। एव-मुत्तरत्र त्रिष्वेव कर्मसु विज्ञेयमघातित्वम्। शुक्लपुद्गलारम्भकस्य वेदनीयस्य कर्मणः अनुगुणं यत् कर्म तदेव नामिकमित्युच्यते ; तद्धि आरभ्यमाणस्य शुक्लपुद्गलस्य कलल-बुद्बुदादिरूपामाद्यामवस्थामारभते। ततोऽपि आद्यं शक्तिरूपेणावस्थितं यदव्याकृतं कर्म तदेव गोत्रिकमित्युच्यते ; आयुः कायति—उत्पादनद्वारेण कथयति इति व्युत्पत्ति-योगात् आयुरारम्भकमेव कर्म आयुष्कमित्युच्यते। तान्येतानि अपि त्रीणि कर्माणि अपवर्गलाभानुकूलशुक्लपुद्गलाद्याश्रयत्वात् अघातीनि इत्युच्यन्ते। तदेतत् कर्माष्टकं जीवं बध्नातीति बन्ध इत्युच्यते। विगलितसमस्तक्लेश-तद्वासनस्य निरावरणाप्रतिहत-ज्ञानस्य सुखैकतानस्य आत्मनः उपरिदेशावस्थानं मोक्ष इत्येके। अन्ये तु ऊर्द्ध्व-गमनशीलो हि जीवः धर्माधर्मास्तिकायेन बद्धः, तद्विमोक्षात् यदूर्द्ध्वं गच्छत्येव स मोक्ष इति मन्यन्ते। प्रकारान्तरेण एतेषां मते जीवाजीवौ द्वावेव पदार्थौ, यथायोगं तयोरेव इतरान्तर्भावात्। तत्रापि एष प्रपञ्चः। तत्र पञ्चास्तिकायाः सन्ति—जीवास्तिकायः, पुद्गलास्तिकायः, धर्मास्तिकायः, अधर्मास्तिकायः, आकाशास्तिकाय-श्चेति। अस्तीति कायते—शब्द्यते इति व्युत्पत्तियोगात् अस्तिकायशब्दः पारिभाषिकः पदार्थवाची। जीवश्चासौ अस्तिकायश्चेति कर्मधारयाश्रयणेन जीवास्तिकाय इति पदं सिद्धम्। पूर्य्यन्ते गलन्ति च इति व्युत्पत्तियोगात् पुद्गलाः परमाणवः। सम्यक्प्रवृत्त्यनुमेयापूर्वाख्यो धर्मः धर्मास्तिकायपदेन उच्यते। अधर्मास्तिकायो नाम स्थित्यनुमेयः, ऊर्द्ध्वगमनशीलस्य जीवस्य देहे अवस्थानेन स्थितिहेतुभूतः योऽधर्मः अनुमीयते, स एव अधर्मास्तिकाय इति व्यपदिश्यते। आवरणाभाव एव आकाशास्तिकाय इति ॥ ४८ ॥

तदेतत् क्षपणकमतं दूषयितुं सूत्रमवतारयति, तदिति।—सूत्रे तदसम्भवात् इत्यत्र गत्यसम्भवादित्यर्थः ग्राह्यः ॥ ४९ ॥

निष्क्रियत्वमेवाह,—

**मूर्त्तत्वाद्घटादिवत्समानधर्मापत्तावपसिद्धान्तः ॥५०॥**

मूर्त्ता घटादयः क्रियावन्तः, तत्तुल्यधर्मत्वे विनाशादयमपसिद्धान्तः । किञ्च, जन्मान्तरसञ्चारे हस्तिकृमिदेहपरिमाणत्वात् सङ्कोचविकासित्वेन सावयवत्वादनित्यत्वमिति ॥ ५० ॥

एवं चाङ्गुष्ठमात्रमित्यादिश्रुतिविरोधः ? इत्यत आह,—

**गतिश्रुतिरप्युपाधियोगात्, आकाशवत् ॥५१॥**

यथा घटाद्युपाधिभेदात् घटे गच्छति घटाकाशं गच्छतीति ज्ञानं, तथा शरीराद्यवच्छेदादात्मा गच्छतीति प्रतीतिः ॥ ५१ ॥

किमुपाधिना ? कर्मवैचित्र्यात् विशेषो भविष्यति ? इत्यत आह,—

**न कर्मणाऽपि, एतद्धर्मत्वात् ॥ ५२ ॥**

भवेदेवं, यदि कर्मात्मधर्मः स्यात् । न त्वात्मनः कश्चिद्धर्मोऽस्ति, निर्गुणत्वात् ॥ ५२ ॥

पुरुषस्य क्रियाशून्यत्वे उपपत्तिपरं सूत्रमवतारयन्नाह, निष्क्रियत्वमिति ।—सूत्रे समानधर्मापत्तौ इत्यस्य घटादिमूर्त्तद्रव्यसमानधर्मजरामरणाद्यापत्तौ इत्यर्थो ज्ञेयः । मूर्त्ताः परिच्छिन्नपरिमाणवन्तः, मूर्त्तत्वं हि सक्रियत्वव्याप्यं, क्रियावतो द्रव्यस्य परमाणुभिन्नस्य विनाशध्रौव्येण मध्यमपरिमाणतया सङ्कोचक्रियमाणस्य आत्मनः विनाशः अशक्यपरीहारः । इष्टापत्तौ च सिद्धान्तव्याघातः, कृतनाशाकृताभ्यागमप्रसङ्गश्च इत्यपि द्रष्टव्यम् । अपरपक्षमते आत्मनः मध्यमपरिमाणस्य अनित्यत्वापत्तिः दुष्परिहरणीयेति दर्शयन्नाह—किञ्चेति ॥ ५० ॥

आत्मनः मध्यमपरिमाणत्वानभ्युपगमे प्रदर्शितश्रुतिविरोधाशङ्कापरिहाराय सूत्रमवतारयन्नाह, एवञ्चेति ।—तथा च, अक्रियस्य विभोः आकाशादेः घटाद्युपाधिगतिवशेन गतिमत्त्वव्यवहारवत् लिङ्गशरीरोपाधिकस्यात्मनः बद्धगतिमत्त्वादेव गतिमत्त्वव्यपदेशः यथोक्तश्रुतौ न तात्त्विकगतिपरः इति भावः ॥ ५१ ॥

अत्रैव प्रसङ्गेन कर्मवैचित्र्यादेव आत्मनो गतिमत्त्वमिति मतं दूषयितुं सूत्रमवतारयन्नाह—किमुपाधिनेत्यादि । कर्मणामात्मधर्मत्वे कदाचिदपि सम्भवेदेतत्,

तद्धर्म एव कर्म भविष्यति, को विरोधः ? इत्यत आह,—

**निर्गुणादिश्रुतिविरोधश्चेति ॥ ५३ ॥**

"असङ्गो ह्ययं पुरुषः" [ बृह० उप० ४ अध्या० ३ ब्रा० १५ मन्त्रः ] इति श्रुतिविरुद्धा स्यात् ॥ ५३ ॥

मा भूत् आत्मधर्मः, अन्यधर्मेणापि क्रियाविशेषो भविष्यति, आत्मनो व्यापित्वेन सर्वसम्बन्धात् ? इत्यत आह,—

**अतिप्रसक्तिरन्यधर्मत्वे ॥ ५४ ॥**

सर्वसम्बन्धाविशेषान्मुक्तात्मनामपि बन्धप्रसक्तिः ॥ ५४ ॥

ननु तवापि धर्माधर्मव्यवस्था अस्ति, बद्धस्य मुक्त्यर्थं प्रवृत्तिर्दृश्यते। तत्र यस्तव सिद्धान्तः, सोऽस्माकं भविष्यतीति समानमित्यत आह,—

**तद्योगेऽप्यविवेकान्न समानत्वम् ॥ ५५ ॥**

धर्माधर्मयोगेऽपि न समानधर्मत्वम्, अविवेकात्। यदि तात्त्विको धर्माधर्मयोग आत्मनः स्यात्तदा तुल्यत्वम्। किन्त्वविवेकादात्मनो धर्माधर्मयोगाभिमान इति क्व समानत्वम् ?॥ ५५॥

---

न त्वेतदस्ति, तेषां बुद्धिधर्मत्वमेव सिद्धान्तः इत्याह—भवदर्थमिति। आत्मनः धर्माधर्मराहित्ये प्रमाणमाह —निर्गुणत्वादिति ॥ ५२ ॥

अस्तु आत्मनः धर्माधर्मादिगुणवत्त्वं, का क्षतिः ? इत्येवमाशङ्कां निराकर्तुं सूत्रमवतारयन्नाह, तद्धर्म एवेति।—तथा च, श्रुतिविरोधादेव श्रुतिप्रामाण्यवादिभिः आस्तिकदार्शनिकैः आत्मनः क्रियादिधर्मकत्वं नाभ्युपगन्तुं शक्यम इति भावः ॥ ५३ ॥

अन्यधर्मेण आत्मनः क्रियादि उपपद्यतां, का क्षतिः ? इत्याशङ्कामपनेतुं सूत्रमवतारयति, मा भूदिति।—तथा च, अन्यधर्मेण आत्मनः कर्माङ्गीकारे मुक्तात्मनामपि जीववत् तादृशधर्माधिष्ठितवस्त्वन्तरसम्बन्धाविशेषात पुनः संसारप्रसङ्गः दुष्परिहरणीयतामापद्येत इति नैतत् मतं युक्तिसहमित्यर्थः ॥ ५४ ॥

स्वमते बन्धमोक्षव्यवस्थाम उपपादयितुं सूत्रमवतारयन्नाह, नन्विति।—तथा च, सिद्धान्ते धर्माधर्मयोगरूपस्य बन्धस्य आत्मनि अतात्त्विकत्वादेव न कापि दुरुपपत्तिः॥ ५५॥

भवत्वविवेकात् बन्धः, तथाऽपि अविवेकनाशार्थं धर्माङ्गीकरणात् तुल्यत्वम्; अन्यथा सर्वदा बन्धः स्यात्? इत्यत आह,—

**नियतकारणात् तदुच्छित्तिः, ध्वान्तवत् ॥५६॥**

अन्वयव्यतिरेकाभ्यां यस्य यत्कारणमवगतं तदव्यभिचारे सर्वतोऽनाश्वासः। यथा ध्वान्तनाशाय प्रकाशः, तथाऽत्रापि विवेकादविवेकनाशः। विवेकार्थञ्च धर्मस्वीकारे का क्षतिः? प्राकृतेनापि धर्मेणोपपत्तेः। किमिदं ध्वान्तं नाम? अभावस्तम इति केचित्; तन्न, विधिमुखप्रतीतेः। अभावत्वे किमा-

---

नन्वस्तु अविवेकादात्मनो बन्धः अतात्त्विकः, अविवेकनाशार्थन्तु कश्चन धर्मविशेषः आत्मनि अवश्यमङ्गीकार्यः, तदनङ्गीकारे च आत्मनो बन्धच्छेदः दुष्कर एव इति सिद्धान्तेऽपि समानैवानुपपत्तिः इतीमामाशङ्कां निराकर्त्तुं सूत्रमवतारयन्नाह, भवत्वित्यादि।—इदमत्राकूतं—विपरीतज्ञानजनितसंस्काराभिभावापरपर्य्यायसंस्कारविशेषरूपाविवेक एव आत्मनो बन्धकारणम् इति साङ्ख्यसिद्धान्तः। स चाविवेकः विरोधितया आत्मानात्मविवेकज्ञानेन स्वजन्यसंस्कारप्रचयजननद्वारा निराकरणीय इति सिद्धमेव। वस्तुतस्तु अविवेकस्य बुद्धिधर्मत्वादेव बुद्धावेव विवेकज्ञानस्योदयः स्वीकार्य्यः, तेन च समानाधिकरणतया उत्पद्यमानेन स्वजन्यदृढतरसंस्कारप्रचयसहकृतेन अविवेकाख्यं बन्धमूलं विनाश्यते इति; तन्नाशादेव अतात्त्विकस्य आत्मनि औपाधिकस्य बन्धस्य निवृत्तिर्भविष्यति इत्यन्वयव्यतिरेकाभ्यामेव सिद्ध भवति इति नास्मिन् मते काऽप्यनुपपत्तिर्दृश्यते इति सुधीभिर्भाव्यम्। तदेतत् प्रपञ्चयन्नाह—अन्वयव्यतिरेकाभ्यामित्यादि। सूत्रे ध्वान्तस्य दृष्टान्तविधया उदाहृतस्य प्रसङ्गेन कस्मिन् पदार्थे अन्तर्भाव इति निरूपयन्नाह, किमिदमिति।—यदिदं ध्वान्तं नाम, तत् किं भावः? अभावो वा? इति शेषः। अत्र ध्वान्तस्य अभावत्ववादिनां नैयायिकानां मतमुपन्यस्यति, अभावस्तम इति।—केचित्—नैयायिकाः वैशेषिकाश्च। अभावः,—आलोकाभावः। तथा च, एतन्मते अवश्यक्लृप्तालोकाभावेनैव उपपत्तौ तमसोऽतिरिक्तद्रव्यत्वं नोचितमिति। तत् एतन्मतं दूषयति, तन्नेति।—विधिमुखप्रतीतेरिति—भावत्वेन प्रतिपत्तेः; तथा हि, "नीलं तमो धावति" इत्यादिभावावगाहिन्या प्रतीत्या विषयीकरणात् तमसो नाभावत्वसिद्धिः इति भावः। नन्वस्तु भावप्रतीतिः भ्रमरूपैव? इति चेत्, तस्य अभावत्वसिद्धौ भावत्वेन

लोकप्रागभावः ? प्रध्वंसाभावो वा ? यदि प्रागभावः, तर्हि यथा घटे उत्पन्ने घटप्रागभावो नष्टः, तथा आलोके सति आलोक-प्रागभावो नष्ट इति प्रत्ययः स्यात्। भविष्यदालोकप्रागभावसत्त्वे वर्त्तमानालोके सति अन्धकारोऽविनष्टः स्यात्। अथ प्रध्वंसा-भावः ? तथाऽप्यनश्वरत्वादालोकान्तरे सति अन्धकारप्रतीति-प्रसङ्गः ; यथा घटान्तरे उत्पन्ने नष्टघटप्रध्वंसोऽस्त्येव। अन्यो-ऽन्याभावस्तु वस्तुनोरप्यस्ति। अत्यन्ताभावस्तु दुष्टत्वान्नाशङ्क-नीयः। तदुक्तं—

प्रतीतेर्भ्रमरूपत्वमङ्गीकार्य्यम् ; तदेव तु न सिद्धं, प्रत्युत विकल्पासहत्वेन प्रमाणविरुद्ध-मपि इत्याह, अभावत्वे इति।—अभावत्वे—तमसः आलोकाभावरूपत्वे, अङ्गीकर्त्तव्ये इति शेषः, स चायमभावः किम् आलोकस्य प्रागभावः ? प्रध्वंसाभावो वा ? तत्राद्ये दूषणमाह, तर्हीति।—अयमभिप्रायः,—जगति यावत्यः आलोकव्यक्तयः तासां सकलानां ये प्रागभावाः, ते मिलिताः तमोव्यवहारहेतवः ? व्यस्ताः वा ? मिलितानां तथात्वे यत्र यत्किञ्चिदालोकव्यक्तिरुत्पन्ना तस्याः आलोकव्यक्तेः प्रागभावस्य तदानीं नष्ट-तया सकलालोकव्यक्तिप्रागभावकूटस्य तदानीमविद्यमानत्वेन तत्र तदालोकव्यक्तिनाशे-ऽपि तमःप्रतीतिर्न स्यात्, यत्किञ्चिदालोकव्यक्तिप्रागभावमादाय तत्र तमोव्यवहारोप-पत्तौ सत्यपि आलोके तमःप्रतीतेर्दुर्वारतापातः, भविष्यन्त्याः कस्याश्चिदालोकव्यक्तेः प्रागभावस्य तत्र सुलभत्वात् इत्युभयथाऽपि तमसः आलोकप्रागभावरूपत्वम् असिद्ध-मेवेति द्रष्टव्यम्। तमसः आलोकध्वंसरूपत्वम् अस्तु इति शङ्कते—अथेति। दूष-यति, तथाऽपीति।—ध्वंसस्य अविनाशितया यत्र कामपि आलोकध्वंसव्यक्तिमुपादाय तमोव्यवहारप्रसङ्ग इति भावः। तत्र आनीतेऽपि आलोके तस्या व्यक्तेः विद्यमानत्वा-देव पूर्ववत् तमःप्रतीतिः दुर्वारैव इत्याह—अनश्वरत्वादिति। अन्योऽन्याभावपक्षं दूषयन्नाह, अन्योऽन्येति।—वस्तुनोरिति, सतोरिति शेषः। तथा च, आलोके सत्यपि तमःप्रत्ययापत्तिरेव दूषणं मन्तव्यम्। उपलक्षणञ्चैतत् ; अन्योऽन्याभावग्रहं प्रति अनु-योगि-प्रतियोगिभूतयोः वस्तुनोः ज्ञानं नियतमावश्यकम् ; न च तमःप्रत्यये अनुयोगि-प्रतियोगिविषयया वस्तुनोर्ज्ञानं नियतमस्ति; तथा च, अप्रत्यक्षत्वापातात् अन्योऽन्याभाव-रूपत्वं न तमसः सम्भवतीत्यपि द्रष्टव्यम्। अत्यन्ताभावत्वपक्षे दूषणमाह, अत्यन्ताभाव इति।—दुष्टत्वादिति—भावत्वेन प्रतीतिरेवात्र दोषः, स च प्रागभिहित एव इति भावः।

"न च भासामभावस्य तमस्त्वं वृद्धसम्मतम्।
छायायाः कार्ष्ण्यमित्येवं पुराणेषु गुणश्रुतेः॥
दूरासन्नप्रदीपादि महदल्पा चलाऽचला।
देहानुवर्त्तिनी छाया न वस्तुत्वाद्विना भवेत्॥" इति।

अभावस्तम इति तु व्यपदेशोऽभावे सति प्रतीयमानत्वादिति। आलोके सति वस्तुग्रहणं, तदभावे सति कथं ग्रहणमिति वैधर्म्यमात्रम्। यथा कौशिकी भानिरपेक्ष एव गृह्णाति, तथा आलोकानपेक्षमेव तमोग्रहणं वैचित्र्यात् पदार्थस्य। तस्मात् रूपविशेषोऽयं, यत्राऽऽवरकमस्ति तत्राऽऽरोप्यं गृह्यते। द्रव्यान्तरमिति केचित्। तदुक्तं—

तमसः भावत्ववादिनां वृद्धानाम् एतस्मिन्नर्थे सम्मतिश्लोकौ उदाहरति, तदुक्तमिति।—वृद्धाः,—अत्र वेदान्तिनः साङ्ख्याचार्य्याश्च इति ध्येयाः। भासाम्—आलोकानाम्। तमस्त्वं—तमःपदार्थत्वम्। छायायाः,—आवरकसन्निधाने सति समुत्पन्नस्य तमसः इत्यर्थः। दूरासन्नेति।—दूरे प्रदीपे तमो महदिति व्यपदिश्यते, आसन्ने च तस्मिन् अल्पमिति व्यपदिश्यते। एवं प्रदीपे चलति छाया चलति, अचले च प्रदीपे न चलति इति। इत्येवम्प्रकारेण परिमाणवत्त्व-क्रियावत्त्वरूपद्रव्यसाधर्म्यप्रतीतेः तस्य द्रव्यत्वं फलतः सिध्यति इति वृद्धानामाशयः। नन्वेवम् अभावत्वेनापि तमसो व्यपदेशः कादाचित्कः कथमुपपद्यते? इत्यत आह, अभावस्तम इति।—अभावे सतीति—आलोकाभावे तमःप्रतीतिदर्शनात् तदन्वयव्यतिरेकनिबन्धनः एव तमसि अभावत्वव्यपदेश इति भावः। नन्वेवं चाक्षुषप्रत्यक्षे आलोकस्य कारणत्वात् कथमालोकाभावे तमःप्रत्यक्षम्? इति शङ्कते—आलोके इति। शङ्कापरीहारार्थमाह, वैधर्म्यमात्रमिति।—तथा च, तमोभिन्नवस्तुविषयकचाक्षुषे आलोकस्य कारणत्वेऽपि तमश्चाक्षुषं प्रति आलोकाभावस्य कारणत्वं वस्तुबलादायातमित्यवगन्तव्यम्। दृष्टान्तेनेममर्थमुपपादयन्नाह, यथेति।—पदार्थस्येति—कार्य्यकारणभावात्मकपदार्थस्येत्यर्थः। तमसो भावत्वपक्षमुपसंहरन्नाह, तस्मादिति।—आवरकम्—आलोकावरकम्। आरोप्य—छायारूपं तम इत्यर्थः। तमसो रूपविशेषत्वपक्षमसहमानाः वेदान्तिनः तस्य द्रव्यान्तरत्वमेवाङ्गीकुर्वन्ति, तन्मतमुपन्यस्यति—द्रव्यान्तरमिति।

"तमः खलु चलन्नीलं परापरविभागवत्।
प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥" इति।

अथ भवतु गुणो वा द्रव्यं वा, नास्माकं सिद्धान्तक्षतिः, अनियतपदार्थवादित्वात्। अभावस्तु न भवतीति ब्रूमः॥५६॥

विवेकान्मुक्तिरित्युक्तम्। घटपटादीनां विवेकोऽस्मदादीनामप्यस्तीति सर्वमुक्तिप्रसङ्गः? इत्यत आह,—

**प्रधानाविवेकादन्याविवेकस्य, तद्धाने हानम्॥५७॥**

सर्वेषां मूलं प्रधानं, तस्याविवेकादन्याविवेकस्य सम्भवः। पदार्थानामन्योऽन्यं भवत्वविवेको विवेको वा, न तेन बन्धमोक्षौ; किन्तु प्रधानविवेकाविवेकाभ्याम्; अतस्तद्धाने प्रधानाविवेकहाने सर्वाविवेकहानम्॥५७॥

भवतु विवेकात् मुक्तिः, स किमात्मसम्बन्धी? न वा? आत्मसम्बन्धी चेत्, आत्मनः कूटस्थत्वव्याघातः? असम्बन्धी चेत्, अतिप्रसक्तिः? इत्यत आह,—

---

तस्य द्रव्यान्तरत्वे साधिकां कारिकामवतारयति, तदुक्तमिति।—प्रसिद्धधर्मवैधर्म्यादिति—क्षित्यादीनि यानि नव द्रव्याणि प्रसिद्धानि तेषां ये धर्माः ते यतः तमसो वैधर्म्यं, तस्मात् तमः तेभ्यः नवभ्यः द्रव्येभ्यः विलक्षणं भवितुमर्हति; तथा हि, रूपवत्त्वेऽपि गन्धाभावात् तमो न पृथिवी, रसाभावात् न जलम्, उष्णस्पर्शाभावात् न तेजः, चाक्षुषप्रत्यक्षविषयत्वात् न वायुः; अत एव न नभ आदि। तमसो गुणत्वे द्रव्यत्वे वा नास्माकं विमतिः, यथा तथा वा भवतु, तस्य भावरूपत्वमस्माभिः सम्मतमेवेति सूचयन्नाह—अथेति॥५६॥

अपवर्गोपयोगिविवेकस्य स्वरूपं निरूपयितुं सूत्रमवतारयन्नाह, विवेकान्मुक्तिरिति।—तथा च, समानविषयकावेव विवेकाविवेकौ मोक्षबन्धयोर्हेतू, यद्विषयकाविवेकेन बन्धः तद्विषयकविवेक एव मोक्षहेतुर्भविष्यति इत्यभिप्रायः; तथा च, प्रधानपुरुषयोरविवेकस्य बन्धहेतुत्वमित्यङ्गीकर्तॄणां साङ्ख्याचार्य्याणां मते तयोरेव विवेकः साक्षान्मोक्षहेतुरित्यङ्गीकर्त्तव्यमिति॥५७॥

विवेकस्य आत्मनिष्ठत्वम् अस्ति न वा? इति निरूपयितुं सूत्रमवतारयन्नाह, भवतु

**वाङ्मात्रं तु न तत्त्वं, चित्तस्थितेः ॥ ५८ ॥**

आत्मसम्बन्धीति वाङ्मात्रं, न तु तात्त्विकः सम्बन्धः। असम्बन्धेऽपि चित्तस्थितेः चित्ते विवेकस्थितेः, चित्तसन्निधानादात्मनि विवेकाभिमान इति निवेदयिष्यामः॥ ५८॥

भवतु श्रवणादेव विवेकज्ञानम्, अनेकजन्मायाससाध्येन अपरोक्षज्ञानेन किम्? इत्यत आह,—

**युक्तितोऽपि न बाध्यते, दिङ्मूढवदपरोक्षात् ऋते ॥ ५९ ॥**

व्यक्तम्॥ ५९॥

प्रकृत्यादयः सन्ति, ते च महदादिक्रमेण परिणमन्ते इति न दृष्टम्? इत्यत आह,—

---

इति।—स—विवेकः। कूटस्थत्वम्—अपरिणामित्वम्। अतिप्रसक्तिः—बद्धस्यापि मोक्षापत्तिरिति भावः। सूत्रं व्याचष्टे—आत्मसम्बन्धी इति। नन्वेवं विवेकस्य चित्तधर्मत्वे आत्मधर्मत्वव्यवहारः कथमुपपद्यताम्? इत्यत आह, चित्तसन्निधानादिति।—तथा च, आत्मनि विवेकः इत्यादिको व्यवहारः अभिमानमूलकः अन्तःकरणविषयको वा इति विज्ञेयम्॥ ५८॥

कीदृशं विवेकज्ञानं मोक्षकारणम्? इति निरूपयितुं सूत्रमवतारयन्नाह, भवत्विति।—अपरोक्षज्ञानेन—साक्षात्कारात्मकविवेकज्ञानेन। सूत्रे अपिशब्देन श्रवणं परामृश्यते, युक्तिपदेन मननं ग्राह्यम्; तथा च, श्रवणेन मननेन वाऽपि असाक्षात्काराविवेकज्ञानस्य न वै बाधसम्भवः इति तन्निवृत्तये साक्षात्कारात्मकविवेकज्ञानस्य अपेक्षणीयत्वमिति भावः॥ ५९॥

तथाविधस्य च विवेकज्ञानस्य विषयाः ये प्रकृत्यादयः तेषां प्रामाणिकत्वव्यवस्थापनाय सूत्रमवतारयन्नाह, प्रकृत्यादय इति।—परिणमन्ते—आविर्भवन्ति। न दृष्टमिति।—तथा च, प्रत्यक्षानुपलब्ध्या तेषां प्रकृत्यादीनां शशविषाणोपमत्वं कथं न स्यात्? इति शङ्काशयतात्पर्यकम्। तामेतामाशङ्कां निराकर्तुं सूत्रमुत्थापयन्नाह—अत आहेति।

**अचाक्षुषाणामनुमानेन बोधः, धूमादिभिरिव वह्नेः ॥ ६० ॥**

भवेदेवं, यदि प्रत्यक्षमेव प्रमाणं, नानुमानादिकमिति। प्रकृत्यादीनामदर्शनेऽपि सामान्यतो दृष्टानुमानात् सिद्धेः ॥ ६० ॥

प्रकृत्यादीनां सृष्टिक्रममाह,—

**सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात् पञ्च तन्मात्राणि, उभयमिन्द्रियं, तन्मात्रेभ्यः स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गणः ॥ ६१ ॥**

यद्यपि त्रयाणां साम्यावस्था प्रकृतिस्तथाऽप्येकैकस्मिन्नपि प्रकृतिशब्दप्रयोगः साङ्केतिकः। महानिति बुद्धितत्त्वम्। अहङ्कार इत्यभिमानः। पञ्च तन्मात्राणीति शब्दस्पर्शरूपरसगन्धाः। उभयमिन्द्रियं—बाह्यानि पञ्च कर्मेन्द्रियाणि, वाक्पाणि-

---

अचाक्षुषाणामित्यत्र चक्षुःपदं बहिरिन्द्रियमात्रोपलक्षणम्; तेन स्पर्शादेरचाक्षुषत्वेऽपि न नित्यानुमेयत्वापत्तिः इति द्रष्टव्यम्। सूत्रतात्पर्यमाह—भवेदेवमिति। प्रकृत्यादीनां प्रत्यक्षाविषयत्वेऽपि केन प्रमाणेन सिद्धिर्भवेत्? इत्यपेक्षायामाह—सामान्यतो दृष्टेति ॥ ६० ॥

एवं प्रमाणे निरूपिते तत्प्रमेयादीनां प्रकृत्यादीनां सृष्टिक्रमनिरूपणाय सूत्रमवतारयन्नाह, प्रकृत्यादीनामिति।—एकैकस्मिन्नपि—पुरुषभोगापवर्गानुकूले गुणपदाभिधेये सत्त्वे, रजसि, तमसि वा इत्यर्थः। साङ्केतिकः,—शास्त्रकारीयपरिभाषासिद्धः। अत्र सत्त्वरजस्तमसां वक्ष्यमाणलघुत्वादिगुणयोगात् द्रव्यत्वमेव शास्त्रसिद्धान्तः; तत्र पुरुषोपकरणत्वेन गुणशब्दप्रयोगः भाक्तः इति ज्ञेयम्। तान्येव द्रव्याणि प्रकृतिपदाभिधेयानि, न तु तदाधारभूतं वस्त्वन्तरं किञ्चित् प्रकृतिपदाभिधेयमस्तीति ध्येयम्। अभिमान इति—अभिमानवृत्तिकम् अन्तःकरणमित्यर्थः। पञ्चतन्मात्राणां स्वरूपं दर्शयन्नाह, शब्देति।—एते शब्दस्पर्शरूपरसगन्धाः पञ्चतन्मात्रपदाभिधेयाः सूक्ष्माः

पादपायूपस्थाख्यानि, पञ्च च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षु-र्जिह्वाघ्राणाख्यानि, आन्तरं मनः। स्थूलभूतानि आकाशवायु-तेजोजलभूमयः, तेषाञ्च पञ्चतन्मात्रेभ्य उत्पत्तिरिति बोद्धव्यम्। स्थूल इत्युपलक्षणं, सूक्ष्मभूतानामपि ग्रहणम्। पुरुष इति सङ्ख्यापूरणार्थं, न तु सृष्टिक्रमार्थं, नित्यत्वादात्मनः ॥ ६१ ॥

कार्य्यात्कारणानुमानार्थं प्रातिलोम्यमाह,—

**स्थूलात् पञ्चतन्मात्रस्य ॥ ६२ ॥**

स्थूलात् पञ्चभूतात् कार्य्यात् सत्त्वरजस्तमोभेदेन शान्त-घोरमूढरूपात् पञ्चतन्मात्रस्य ज्ञानम् ॥ ६२ ॥

**बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य ॥ ६३ ॥**

बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च कार्य्यैरह-ङ्कारस्य ज्ञानम् ॥ ६३ ॥

**तेनान्तःकरणस्य ॥ ६४ ॥**

तेनाहङ्कारेण कार्य्येणान्तःकरणस्य बुद्धेर्ज्ञानम् ॥ ६४ ॥

**ततः प्रकृतेः ॥ ६५ ॥**

---

बहिरिन्द्रियजन्यप्रत्यक्षाविषया एव बाह्याः। इन्द्रियं विभजते, उभयमिति।—तत्र ज्ञानकर्मेन्द्रियभेदेन बहिरिन्द्रियाणां द्वैविध्यं ज्ञेयम्। तेषां—स्थूलभूतानाम्। सूक्ष्मेति।—सूक्ष्मपदमत्र लौकिकप्रत्यक्षाविषयेषु भूतेषु वर्त्तते। नन्वत्र सृष्टिक्रमे उदासीनस्य पुरुषस्य उपादानं कथं सङ्गच्छते? इत्यत आह, पुरुष इति।—सङ्ख्या—पञ्चविंशतिः। नित्यत्वात्—अपरिणामित्वात् ॥ ६१ ॥

कार्य्यलिङ्गकानुमानेन सूक्ष्मतन्मात्रादिप्रकृत्यन्तकारणानां सिद्धये सूत्रमवतारय-त्याह, कार्य्यादिति।—शान्तघोरमूढरूपादिति—प्रत्यक्षविषयसुखदुःखमोहात्मकधर्म-वतः इत्यर्थः ॥ ६२ ॥

तैः पञ्चतन्मात्रैः बाह्यान्तराभ्यामिन्द्रियाभ्याञ्च कारणस्याहङ्कारस्य अनुमानप्रकार-प्रदर्शनपरं सूत्र व्याचष्टे, बाह्येति।—ज्ञानमत्रानुमानरूपं ग्राह्यम् ॥६३॥

ततो महत्तत्त्वात् कार्य्यात् प्रकृतेः मूलकारणस्य प्रधानस्य ज्ञानम् ॥ ६५ ॥

**संहतपरार्थत्वात् पुरुषस्य ॥ ६६ ॥**

न प्रकृतेः कार्य्यत्वात् पुरुषस्य ज्ञानं, प्रकृतेर्नित्यत्वात् पुरुषस्य अकारणत्वात्। किन्तु प्रकृतेः संहतत्वात् त्रिगुणात्मकत्वात् परार्थत्वम्। परश्च पुरुषः। अतः तस्य ज्ञानम्। स च असंहतो वक्तव्यः, अनवस्थाभयात् ॥ ६६ ॥

अथ किं प्रकृतेरपि कारणं भविष्यति ? इत्यत आह,—

**मूले मूलाभावादमूलं मूलम् ॥ ६७ ॥**

मूलप्रकृतेर्मूलाभावात् कारणाभावात् अमूलं यत् कारणं तन्मूलम् ; सैव प्रकृतिः ॥ ६७ ॥

अत्र युक्तिमाह,—

**पारम्पर्य्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ॥ ६८ ॥**

प्रकृतेः अन्यत् कारणं, तस्यापि अन्यत् कारणमिति अनवस्थादोषादन्ततोऽकारणं मूलं वक्तव्यम् ; सैव प्रकृतिरिति। पञ्चविंशतितत्त्वात् अधिकाङ्गीकारे च गौरवं स्यात् ॥ ६८ ॥

सुगमम् ॥ ६४ । ६५ ॥

पुरुषानुमानसूत्रं व्याचष्टे। कुतः प्रकृतेः कार्य्यत्वं नाङ्गीक्रियते ? इत्यत आह—प्रकृतेः नित्यत्वादिति। पुरुषस्यापि न किञ्चित्कार्य्यं प्रति कारणत्वम् इत्याह—पुरुषस्येति। संहतशब्दार्थमाह—त्रिगुणेति। पुरुषस्याऽसंहतत्वे हेतुमाह—अनवस्थेति ॥ ६६ ॥

प्रकृतेः कार्य्यत्वस्वीकारे का क्षतिः ? इति शङ्कायां परिहारसूत्रमवतारयन्नाह, अथेति।—मूले—प्रकृतौ, मूलाभावात्—प्रकृत्यन्तराभावात्। अमूलमिति पदं—नास्ति मूलं यस्या इति व्युत्पत्त्या कारणरहितपरम् ॥ ६७ ॥

मूले मूलाभावे युक्तिप्रदर्शनपरं सूत्रमवतारयन्नाह, अत्रेति।—तथा च, अनवस्था-

प्रकृतेरप्रत्यक्षत्वात् कथं कारणत्वावगमः ? इत्यत आह,—

**समानः प्रकृतेर्द्वयोः ॥ ६९ ॥**

द्वयोर्वादिप्रतिवादिनोः समानः तुल्यत्वम् । यथा परमाणोः अप्रत्यक्षत्वेऽपि घटादौ तद्गुणदर्शनात् परमाण्वनुमानं, तथा अत्रापि जगतस्त्रैगुण्यदर्शनात् कारणं प्रकृतिस्त्रिगुणात्मिकेति अनुमीयते । तथा हि, कामिनी भर्तुः सुखदा इति सात्त्विकी, अविनयात् दुःखदेति राजसी, विरहात् मोहदा इति तामसी । एवं सर्वे भावा द्रष्टव्याः ॥ ६९ ॥

यदि हि विवेकेन पुरुषदर्शनात् मुक्तिः, तदा शास्त्रश्रवणादेव मुक्तिः स्यात् ? न चैवं, कस्यापि क्षिप्रं कस्यापि चिरेणेति दर्शनादित्यत आह,—

**अधिकारित्रैविध्यान्न नियमः ॥ ७० ॥**

अधिकारिणः त्रिविधा भवन्ति, उत्तममध्यमाधमभेदात् । तद्भेदः सहकारिणोऽविद्यादेर्भेदात् । तद्भेदश्च अदृष्टभेदात् । तेन श्रवणमात्रादिति न नियमः ॥ ७० ॥

---

दोषपरिहाराय यत्किञ्चित् कारणं नित्यमित्यवगन्तव्यं, तदेव कारणमस्माभिः प्रकृतिरित्यभिधीयते इति भावः ॥ ६८ ॥

अप्रत्यक्षायाः प्रकृतेः केन प्रमाणेन कारणत्वम् अवगम्यते ? इति निरूपयिष्यन् सूत्रमवतारयति, प्रकृतेरिति ।—वादिप्रतिवादिनोः,—साङ्ख्यनैयायिकयोः । एकस्य वस्तुनः त्रिगुणात्मकत्वे साधिकां युक्तिमवतारयति, तथा हीति ।—एवम्—अनया रीत्या, सर्वे भावाः,—पुरुषव्यतिरिक्ताः यावन्तः पदार्थाः, त्रिगुणात्मकतया इति शेषः, द्रष्टव्याः,—प्रतिपत्तव्याः ॥ ६९ ॥

"विवेकदर्शनान्मुक्तिः" इति यदुक्तं, तदुपपादयितुं सूत्रमवतारयन्नाह, यदीति ।—शास्त्रश्रवणादेव इति एवकारेण मनननिदिध्यासनयोः व्यावृत्तिरभिमता । एवं —शास्त्रश्रवणात एव मुक्तिः, न च भवतीत्यन्वयः । कथम् ? इत्याह—कस्यापीति । सूत्र उक्तमधिकारित्रैविध्यं व्याचष्टे—उत्तमेति । फलितमुपसंहरति—तेनेति ॥७०॥

पूर्वं 'प्रकृतेर्महान्' (६१ सू०) इति सूत्रे कार्य्यकारणभावः प्रतिपादितः, न तु क्रमः इति भ्रमं निराकरोति,—

**महदाख्यमाद्यं कार्य्यं, तन्मनः ॥ ७१ ॥**

यत् प्रकृतेः आद्यं कार्य्यं, तत् महत्—महत्तत्त्वं बुद्धिः, तदेव मननात् मन इति ॥ ७१ ॥

**चरमोऽहङ्कारः ॥ ७२ ॥**

अनन्तरं बुद्धेः कार्य्यम् अहङ्कारः ॥ ७२ ॥

**तत्कार्य्यत्वमुत्तरेषाम् ॥ ७३ ॥**

तत्कार्य्यत्वम्—अहङ्कारकार्य्यत्वम्, उत्तरेषाम्—एकादशेन्द्रियाणां पञ्चतन्मात्राणाञ्च। पारम्पर्य्येण तन्मात्रकार्य्याणामपि भूतानां तत्कार्य्यत्वमित्युक्तम् ॥ ७३ ॥

ननु यद्येवं, प्रधानकार्य्यं जगदिति सिद्धान्तहानिः ? इत्यत आह,—

**आद्यहेतुता तद्द्वारा पारम्पर्य्येऽप्यणुवत् ॥ ७४ ॥**

यथा मृत्पिण्डकार्य्यस्य घटस्य पारम्पर्य्येऽपि परमाणुकारणता, तथा प्रकृतेरपि मूलकारणता ॥ ७४ ॥

---

कार्य्यकारणभावप्रतिपादकसूत्रस्यैव क्रमप्रतिपादकत्वम् इति प्रतिपादनाय सूत्रमवतारयति, पूर्वमिति।—आद्यमिति—साक्षादित्यर्थः। या खलु बुद्धिः महत्तत्त्वत्वेन प्रसिद्धा, तदेव मननरूपवृत्तिमत्त्वेन मन इति व्यपदिश्यते इत्याह—तदिति ॥ ७१ ॥

अहङ्कारसूत्रस्थो अनन्तरपदं साक्षादित्यर्थः ; तथा च बुद्धेः साक्षात्कार्य्यमहङ्कार इति भावः। सूत्रे चरमपदं महत्तत्त्वादनन्तरकार्य्यबोधकम् ॥ ७२ ॥

सूत्रे उत्तरेषामिति पदव्याख्यानमाह—एकादशेति। अत्र स्थूलभूतानां साक्षात् अहङ्कारकार्य्यत्वाभावेऽपि तन्मात्रद्वारा तत्कार्य्यत्वमस्तीत्याह—पारम्पर्य्येणेति ॥ ७३ ॥

नन्वेवं तन्मात्रादीनां महाभूतानाञ्च अहङ्कारकार्य्यत्वे साङ्ख्याचार्य्याणां जगतः प्रधानकार्य्यत्वोक्तिः कथं सङ्गच्छते ? इत्याशङ्क्य समाधानसूत्रमवतारयन्नाह, नन्विति।—मूलकारणतेति—कार्य्यत्वाभावे सति कारणत्वं मूलकारणत्वम् ॥ ७४ ॥

प्रकृतिपुरुषयोर्नित्यत्वात् सृष्ट्यादौ कस्य कारणत्वम्? इत्यत्र आह,—

पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ॥ ७५ ॥

न पूर्वभावित्वमात्रेण कारणत्वं, किन्तु अन्वयव्यतिरेकाभ्याम्। द्वयोर्मध्ये एकतरस्य पुरुषस्य कारणत्वयोग्यताहानिः, अविकारित्वश्रुतेः। अतोऽन्यतरस्य प्रधानस्य कारणत्वयोगः॥७५॥

अविवादात् परमाणूनामेव कारणत्वमस्तु? इत्यत आह,—

परिच्छिन्नत्वान्न सर्वोपादानम् ॥ ७६ ॥

यत् परिच्छिन्नं, न तत् सर्वोपादानं, यथा न तन्तुर्घटस्य कारणम्। तस्मात् पदार्थानां पृथक् पृथक् कारणं वक्तव्यम्; एककारणत्वे च लाघवं स्यादिति ॥ ७६ ॥

---

प्रकृतिपुरुषयोर्द्वयोरेव नित्यत्वेन सृष्ट्यादौ विद्यमानत्वात् कथं प्रकृतेरेव जगत्कारणत्व, न पुरुषस्य इति सिद्धान्तः सङ्गच्छते? इतीमामाशङ्कां परिहर्त्तुं सूत्रमवतारयति, प्रकृतिपुरुषयोरिति।—सूत्रे द्वयोरित्यस्य—प्रकृतिपुरुषयोरित्यर्थः। एकतरस्य हाने इति।—एकतरस्य—पुरुषस्य, हाने—कारणत्वहाने, अन्यतरयोगः,—अन्यतरस्य—प्रधानस्य, योगः,—कारणत्वसम्बन्धः। अन्वयव्यतिरेकाभ्यामिति—अन्वयव्यतिरेकज्ञानप्रयोज्यज्ञानविषयानन्यथासिद्धनियतपूर्ववर्त्तित्वेन कारणत्वव्यवहारः इति तात्पर्य्यम। तत्तु पुरुषस्य पूर्ववर्त्तित्वेऽपि अन्यथासिद्धत्वान न सम्भवतीति दर्शयन्नाह, द्वयोरिति।—तस्याकारणत्वे श्रुतिरेव प्रमाणमिति भावः॥ ७५॥

परमाणूनां जगदुपादानत्वनिराकरणपरं सूत्रमवतारयति—अविवादादिति। परमाणूनां परिच्छिन्नत्वात् न सर्वोपादानत्वमित्याह—यत्परिच्छिन्नमिति। नन्वेवं चतुर्विधाः परमाणवः असङ्ख्येया एव मिलिताः जगदुपादानत्व भजन्ताम्? इत्यत आह, एककारणत्वे च लाघवमिति।—एककारणत्वे—एकरूपेण कारणत्वे इत्यर्थः; तच्च रूपं प्रधानत्वमेवेति ध्येयम् ॥ ७६ ॥

अत्र श्रुतिं दर्शयति,—

**तदुत्पत्तिश्रुतेश्च ॥ ७७ ॥**

युक्तिस्तावत् प्रोक्ता। श्रुतिरपि प्रधानस्य जगत्कारणता-माह—"प्रधानाज्जगज्जायते" इति ॥७७॥

प्रागसतो घटस्य भवनं दृश्यते। नियतपूर्वभावित्वात् प्रागभावः कारणमस्तु ? इत्यत आह,—

**नावस्तुनो वस्तुसिद्धिः ॥ ७८ ॥**

नाभावात् भावोत्पत्तिः। कारणरूपं कार्य्यं दृश्यते इति जगतोऽपि अवस्तुत्वम् ॥७८॥

भवतु जगदपि अवस्तु, का नो हानिः ? इत्यत आह,—

**अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ॥ ७९ ॥**

शुक्तौ रजतज्ञाने 'नेदं रजतम्' इति ज्ञानात् रजतबाधः। न चात्र 'नेदं भावरूपं जगत्' इति कस्यापि ज्ञानमिति, येन भावरूपबाधः स्यात्। दुष्टकारणजन्यत्वाच्च मिथ्येति अवगम्यते ; यथा कामलादिदोषात् पीतशङ्खज्ञानं कस्यचित्। अत्र च

---

प्रधानस्य जगत्कारणत्वे श्रुतिरपि प्रमाणम् इति प्रतिपादयन् सूत्रमवतारयति—तदिति ॥ ७७ ॥

परिणामवादव्यवस्थापनाय आरम्भवादनिराकरणपरं सूत्रमवतारयन्नाह, प्रागिति। —प्रागसतः,—प्रागभावप्रतियोगिन इत्यर्थः। सिद्धस्य उत्पत्त्ययोगात् प्रागभावस्य कारणत्वमवश्यमङ्गीकार्य्यमिति सूचयन्नाह, नियतपूर्वेति।—अभावात—प्रागभावात्। अभावकारणकत्वे जगतोऽभावरूपत्वं स्यादित्याह, कारणरूपमिति।—तथा च जगतो भावत्वेन भावमात्रकारणकत्वमेवाङ्गीकार्य्यमिति परिणामवादिनामाशयः॥ ७८ ॥

जगतोऽवस्तुत्वे अभावरूपत्वे वा का हानिः ? इति शङ्कानिराकरणाय सूत्रमवतार-यति, भवतु इति।—बाधाभाव एव जगतः सद्रूपत्वे हेतुरिति मन्तव्यम्। सत्तया प्रतीयमानस्यापि वस्तुनः दुष्टकारणजन्यत्वेनासत्यत्ववत् जगतोऽसत्यत्वमस्तु ? इत्यत

जगज्ज्ञानस्य सर्वेषां सर्वदा सत्यत्वाच्च न दोषोऽस्ति ; तस्मात् भावस्तु जगदिति ॥७९॥

नन्वभावः कारणमस्तु, तथाऽपि अभावत्वं न जगतो भविष्यति ? तत्राह,—

**भावे तद्योगेन तत्सिद्धिः, अभावे तदभावात् कुतस्तरां तत्सिद्धिः ? ॥ ८० ॥**

भावे उपादानकारणे 'कारणगुणाः कार्य्ये' इति तद्योगेन भावयोगेन, तत्सिद्धिः कार्य्यस्य वस्तुत्वसिद्धिः। अभावे जगतोऽभावत्वे, तदभावात् जगदभावस्य अवश्यम्भावात्, कुतस्तत्सिद्धिः ? इति, अभावस्य अभावरूपत्वात् ॥८०॥

अथ कर्मैव जगत्कारणमस्तु, किं प्रधानकल्पनया ? इत्यत आह,—

**न कर्मणः, उपादानत्वायोगात् ॥ ८१ ॥**

निमित्तकारणमदृष्टमस्तु, धर्माधर्मयोस्तु उपादानकारणत्वं न क्वचित् दृष्टम्। प्रकृतिपुरुषविवेकदर्शनात् मुक्तिरिति प्रकृतिस्वीकारः ॥८१॥

आह, दुष्टेति ।—सत्यत्वात—अप्रामाण्यशङ्काऽनास्कन्दिताबाधितप्रतीतिविषयत्वादित्यर्थः। उपसंहरति—तस्मादिति ॥ ७९ ॥

जगतोऽभावकारणकत्वेऽपि अस्तु भावरूपत्वं, का क्षतिः ? इति शङ्कायां समाधानसूत्रमवतारयन्नाह—नन्विति। सूत्रं व्याचष्टे, भाव इति ।—तथा च, अभावस्य जगदुपादानत्वे कार्य्यस्य जगतः अभावत्वं दुष्परिहरणीयं स्यात् ॥ ८० ॥;

मतान्तरमुत्थापयन् तन्निराकर्त्तुं सूत्रमवतारयति, अथेति ।—कर्मणः निमित्तकारणत्वे नास्माकं विप्रतिपत्तिः, तदुपादानत्वन्तु न क्वचित् दृष्टं सम्भवति वा ॥ ८१ ॥

वेदोक्तार्थानुष्ठानादेव मुक्तिसम्भवात् किं प्रकृत्या ? इत्यत आह,—

**नानुश्रविकादपि तत्सिद्धिः, साध्यत्वेनावृत्ति-योगादपुरुषार्थत्वम् ॥ ८२ ॥**

वेदादनुश्रूयते इति आनुश्रविको यागादिः, तस्मादपि न मोक्षसिद्धिः, साध्यत्वेनावृत्तियोगात् कार्य्यत्वेन अनित्यत्वात् मुक्तस्य पुनः संसारानुवृत्तियोगः ; तस्मात् अपुरुषार्थत्वम् ॥८२॥

पुरुषार्थत्वं दर्शयति,—

**तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥ ८३ ॥**

तत्र प्रकृतिपुरुषयोः, प्राप्तविवेकस्य विवेकज्ञानात्, अनावृत्तिश्रुतिः "न च पुनरावर्त्तते" [ छान्दो० उप० ८ अध्यायः १५ खण्डः १ मन्त्रः ] इति श्रुतिः ॥८३॥

प्रकृतिपुरुषविवेकमन्तरेणापि उपायान्तरसाध्यैव मुक्तिरिति मतं निराकर्त्तुं सूत्रमवतारयति—वेदोक्तार्थेति । आनुश्रविकशब्दार्थमाह, वेदादिति ।—साध्यत्वेन—जन्यत्वेन । आवृत्तियोगात्—पुनर्बन्धयोगादित्यर्थः । अपुरुषार्थत्वम्—अपरमपुरुषार्थत्वम ॥ ८२ ॥

प्रकृतिपुरुषविवेकज्ञानसाध्याया एव मुक्तेः परमपुरुषार्थरूपतां दर्शयितुं सूत्रमवतारयति, पुरुषार्थत्वमिति ।—तत्रेत्यस्यार्थमाह—प्रकृतिपुरुषयोरिति । प्राप्तविवेकस्येति—भेददर्शिन इत्यर्थः । अनावृत्तिश्रुतिम उदाहरति—न च इति । विज्ञानभिक्षुस्तु 'तत्र' इत्यस्य ब्रह्मलोके इत्यर्थमाह ; तन्मते ब्रह्मलोके कर्मसाध्ये न साक्षात् मुक्तिः, परन्तु तत्र लब्धविवेकज्ञानस्यैव अपुनरावृत्तिलक्षणं निर्वाणं श्रुत्या प्रतिपाद्यते इति सूत्रार्थः ज्ञेयः । ब्रह्मलोकेऽपि विवेकज्ञानस्य अपेक्षा वर्त्तते इत्यतः,—"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम ॥" इति पौराणिकवचनम । अत्र 'कृतात्मानः' इति पदं विवेकसाक्षात्काररूपविशेषसंस्कारवत्त्वम् आत्मनां मोक्षसाधनत्वेन स्फुटं प्रतिपादयतीति विज्ञेयम् ॥ ८३ ॥

विपक्षे दुःखमाह,—

**दुःखात् दुःखं, जलाभिषेकवन्न जाड्यविमोक्षः ॥ ८४ ॥**

यदि कर्मसाध्या मोक्षो भवेत्, कर्मणो दुःखबहुलत्वात् तत्कार्यो मोक्षोऽपि दुःखबहुलः स्यात् । अन्ततः क्षयित्वेनापि दुःखं स्यात । न हि जाड्यार्त्तस्य जाड्यविमोक्षो जलाभिषेकात्, प्रत्युत जाड्यमेवेति ॥८४॥

दुःखस्य कर्मसाध्यत्वमप्रयोजकं, किन्तु काम्यकर्मसाध्यत्वं हेतुः, निष्कामकर्मणो मोक्षसाधनत्वात् ; तथा च श्रुतिः,—
"कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः ।
अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः ॥"
इत्यत्राह,—

**काम्याकाम्येऽपि साध्यत्वाविशेषात् ॥ ८५ ॥**

मा भूत् निष्कामकर्मसाध्यं दुःखं, तथाऽपि काम्यात् निष्कामकर्मणिविशेषेऽपि मोक्षस्य कर्मसाध्यत्वमविशिष्टम् । साध्यत्वात् क्षयित्वेन पुनरपि दुःखं स्यात् । निष्कामकर्मणो मोक्षसाधनत्वश्रुतिश्च ज्ञानार्थं, ज्ञानाच्च मोक्ष इति पारम्पर्य्येण मोक्षसाधनत्वम् ॥८५॥

यदि प्रकृतिपुरुषविवेकज्ञानात् मोक्षो भवेत्, तथाऽपि

मोक्षस्य कर्मसाध्यत्वे दोषं विवृण्वन् सूत्रमवतारयति, विपक्षे इति ।—दुःखात्—कर्मसहकृतादिति भावः । दुःखं—मोक्षरूपफलमपि दुःखमेव स्यादिति भावः ॥८४॥

ननु काम्यानामेव कर्मणां रागद्वेषादिदोषसहकृतत्वेन दुःखजनकत्वं भविष्यति, निष्कामकर्मणान्तु तदभावात् मोक्षजनकत्वे का क्षतिः ? इत्येवं वदतां मतं निराकर्तुं सूत्रमवतारयति, दुःखस्येति ।—तथा च, निष्कामकर्मसाध्यत्वे मोक्षस्य दुःखरूपता मा भवतु, अन्यत्वेन क्षयित्वन्तु अपरिहार्यमेव ॥ ८५ ॥

प्रकृतिपुरुषविवेकज्ञानसाध्यत्वे मोक्षस्य समान एवायं दोष इति भ्रान्तिं निराकर्तुं

श्रयित्वात् पुनरपि संसार इति वादिप्रतिवादिनोः तुल्यत्वं जात? तत्राह,—

**निजमुक्तस्य बन्धध्वंसमात्रं परं, न समानत्वम् ॥ ८६ ॥**

निजमुक्तस्य स्वभावमुक्तस्य, बन्धध्वंसः बन्धोऽविवेकः, तद्विरोधेन अविवेकध्वंसो नाशः। अविवेकनाशस्य च प्रध्वंसत्वात् कुतः संसारस्य पुनरावर्त्तनम्? इति न समानत्वम् ॥ ८६ ॥

पञ्चविंशतिगण इत्युक्तं, तत्सिद्धिश्च न प्रमाणेन विनेति सन्दर्शयति,—

**द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा। तत्साधकतमं यत् तत् ॥ ८७ ॥**

द्वयोः इतीन्द्रियार्थयोर्विद्यमानयोः प्रत्यक्षे, एकतरस्य वाऽपि इति विद्यमानस्य लिङ्गस्य शब्दस्य वाऽनुमाने शब्दे च,

सूत्रमवतारयति, यदीति।—तथा च, एतन्मते अविवेकध्वंसस्यैव स्वरूपतो मोक्षपदार्थत्वेन तस्य चाविनाशितया कुतः मोक्षस्य चायित्वप्रसक्तिः? इत्यस्यैव वैषम्यम् ॥८६॥

सिद्धान्ते पञ्चविंशतितत्त्वस्वरूपसिद्धौ अपेक्षितं प्रमाणम् आदौ स्वरूपतो निरूपयितुं सूत्रमवतारयति, पञ्चविंशतिरिति।—गण इति—समुदाय इत्यर्थः। तत्सिद्धिश्चेत्यत्र तत्पदेन प्रकृत्यादिपञ्चविंशतितत्त्वान्युच्यन्ते। तत् दर्शयति इत्यत्र तत्पदेन प्रमाणं गृह्यते। द्वयोरित्यस्यार्थमाह—इन्द्रियार्थयोरिति। एतच्च प्रत्यक्षे एव उपयुज्यते इत्याह—प्रत्यक्षे इति। तत्र द्वयोरेव तयोः विद्यमानत्वमपेक्षितमित्याह—विद्यमानयोरिति। परोक्षज्ञाने च प्रमेयस्य तस्मिन् काले असत्त्वेऽपि प्रमानिष्पत्तिः भवत्येव इति दर्शयन्नाह, एकतरस्येति।—विद्यमानस्येति—एतच्च लिङ्गस्य शब्दस्य च विशेषणम्। अत्र लिङ्गपदेन लिङ्गज्ञानं विवक्षितम्, अन्यथा अतीतानागतलिङ्गात् जायमानस्यानुमानस्य प्रमारूपस्यापि ग्रहणं न स्यात्। एतच्च प्रदर्शनपरम्; वस्तुतस्तु असन्निकृष्टार्थपरिच्छित्तिरेव प्रमालक्षणं वाच्यम्, अधिकस्य वैयर्थ्यात्। असन्निकृष्टपदम् अनधिगतपरं, तथा च, अनधिगतार्थविषयक-

**असन्निकृष्टार्थपरिच्छित्तिः इति अपरिच्छिन्नार्थपरिच्छित्तिः, प्रमा प्रमितिः फलम्। एतेन अनधिगतार्थगन्तृ प्रमाणम् इत्युक्तम्। प्रमासाधकतमं यत् तत् प्रमाणमिति प्रमाणसामान्यलक्षणम् ॥ ८७ ॥**

---

बोधः प्रमा इति फलितं, तदेवाह—अपरिच्छिन्नेति। फलितमाह, एतेनेति।—अनधिगतार्थगन्तृ इति पदं मानान्तरेणानधिगतवस्तुविषयकमित्यर्थकम्। तत्रानधिगतपदं स्मृतिव्यावर्तनाय उपात्तमिति। इदमुपलक्षणम्; प्रमालक्षणघटकीभूतेऽर्थे अबाधितत्वविशेषणमवश्यमुपादेयम्; अन्यथा शुक्तौ रजतभ्रमस्यापि प्रमात्वमापद्येत। प्रमां निरूप्य प्रमाणलक्षणं निरूपयन्नाह—प्रमासाधकतममिति। विज्ञानभिक्षुस्तु लक्षणमिदमन्यथा व्याख्यातवान् साङ्ख्यप्रवचनभाष्ये। तथा हि, "असन्निकृष्टः,—प्रमातर्यनारूढः, अनधिगत इति यावत्, एवम्भूतस्यार्थस्य—वस्तुनः, परिच्छित्तिः,—अवधारणं प्रमा; सा च द्वयोः,—बुद्धिपुरुषयोरुभयोरेव धर्मो भवतु? किं वैकतरमात्रस्य? उभयथैव तस्याः,—प्रमायाः, यत् साधकतमं—फलायोगव्यवच्छिन्नं कारणं, तत् त्रिविधं वक्ष्यमाणरूपेणेत्यर्थः। स्मृतिव्यावर्तनाय अनधिगतेति; भ्रमव्यावर्तनाय वस्त्विति; संशयव्यावर्तनाय त्ववधारणमिति। अत्र यदि प्रमारूपं फलं पुरुषनिष्ठमात्रमुच्यते, तदा बुद्धिवृत्तिरेव प्रमाणम्; यदि च बुद्धिनिष्ठमात्रमुच्यते, तदा तूक्तेन्द्रियसन्निकर्षादिरेव प्रमाणम्। पुरुषस्तु प्रमासाक्ष्येव, न प्रमातेति। यदि च पौरुषेयबोधो बुद्धिवृत्तिश्चोभयमपि प्रमोच्यते, तदा तूक्तमुभयमेव प्रमाभेदेन प्रमाणं भवति। चक्षुरादिषु तु प्रमाणव्यवहारः परम्परयैव सर्वथेति भावः। पातञ्जलभाष्ये तु व्यासदेवैः पुरुषनिष्ठबोधः प्रमेत्युक्तः। पुरुषार्थमेव करणानां प्रवृत्त्या फलस्य पुरुषनिष्ठताया एवौचित्यात्; अतोऽत्रापि स एव मुख्यः सिद्धान्तः। न च पुरुषबोधस्वरूपस्य नित्यतया कथं फलत्वम्? इति वाच्यम्; केवलस्य नित्यत्वेऽपि अर्थोपरक्तस्य कार्यत्वात् पुरुषार्थोपरागस्यैव वा फलत्वादिति। अत्रेयं प्रक्रिया—इन्द्रियप्रणालिकया अर्थसन्निकर्षेण लिङ्गज्ञानादिना वा आदौ बुद्धेरर्थाकारा वृत्तिर्जायते, तत्र चेन्द्रियसन्निकर्षजा प्रत्यक्षा वृत्तिरिन्द्रियविशिष्टबुद्ध्याश्रिता भवति इति विशेषः। सा च वृत्तिरर्थोपरक्ता प्रतिबिम्बरूपेण पुरुषारूढा सती भासते, पुरुषस्यापरिणामितया बुद्धिवत् स्वतोऽर्थाकारत्वासम्भवात्। अर्थाकारताया एव चार्थग्रहणत्वात्, अन्यथा दुर्वचत्वात् इति। तदेतत् वक्ष्यति जपास्फटिकयोरिव नोपरागः, किन्त्वभिमान इति; योगसूत्रञ्च—वृत्तिसारूप्यमितरत्र

कति प्रमाणानि ? इत्यत आह,—

त्रिविधं प्रमाणम् । तत्सिद्धौ सर्वसिद्धेः नाधिक्यसिद्धिः ॥ ८८ ॥

प्रत्यक्षानुमानशब्दाः प्रमाणानीति । किमुपमानार्थापत्त्यभावसम्भवैतिह्यानि न स्युः ? इति । अतोक्तं, तत्सिद्धौ इत्यादि—प्रमेयव्यवस्थार्थं प्रमाणस्वीकारः, त्रिविधप्रमाणसिद्धौ सर्वप्रमाणानां प्रमेयव्यवस्थासिद्धेर्नाधिक्यसिद्धिः पृथक्प्रमाणत्वेन, त्रिविधप्रमाणेषु एषामन्तर्भावादिति ; इन्द्रियार्थसन्निकर्षान्वयव्यतिरेकादिना यथायथं प्रत्यक्षादिषु सूरिभिरन्तर्भावितत्वात्, केवलमधिकः संज्ञाभेदः कृत इति नाधिकत्वेन प्रमाणसिद्धिः ॥ ८८ ॥

विशेषलक्षणमाह,—

यत्सम्बन्धसिद्धं तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम् ॥ ८९ ॥

इति । स्मृतिरपि—"तस्मिंश्चिद्दर्पणे स्फारे समस्ताः वस्तुदृष्टयः । इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥" इत्यन्तेन ग्रन्थेन ॥८७॥

न्यूनाधिकसङ्ख्याव्यवच्छेदफलकं प्रमाणविभागं प्रदर्शयितुं सूत्रमवतारयन्नाह, कति प्रमाणानीति ।—त्रिविधमित्यस्यार्थमाह—प्रत्यक्षानुमानशब्दा इति । नन्वेवम् उपमानादीनां वादिभिः अभ्युपगतानां का गतिः ? इत्याशङ्कायां व्यवस्थाम् उपदर्शयिष्यन्नाह, तत्सिद्धाविति ।—तैः,—प्रत्यक्षानुमानशब्दैः, सिद्धौ, सर्वेषामेव प्रमेयाणामिति शेषः । नाधिक्यसिद्धिः,—प्रमाणाधिक्यसिद्धिरित्यर्थः । तथा च, उपमानार्थापत्त्यैतिह्यादीनां वादिभिः प्रमाणान्तरत्वेनाभ्युपगतानां त्रिष्वेव एषु यथायथम् अन्तर्भावसम्भवेन न तेषां प्रमाणान्तरत्वसिद्धिरिति भावः । विज्ञानभिक्षुस्तु त्रिविधं प्रमाणमिति पूर्वसूत्रस्यैव घटकम् इति मन्यते, तथैव च व्याख्यातं तेन इति द्रष्टव्यम् । सूरिभिः, तीर्थकरैरिति शेषः ॥८८॥

तत्र सर्वप्रमाणोपजीव्यत्वात् प्रत्यक्षमादौ निरूपयितुं [illegible]तारयन्नाह,

यत्सम्बन्धसिद्धम् इत्यनुमानशब्दौ व्यवच्छिन्नौ। तदाकारोल्लेखि—घटाकारोल्लेखि। तत् प्रत्यक्षं—सविकल्पकमपि प्रत्यक्षं सङ्गृहीतम्। बौद्धास्तु निर्विकल्पकमेव प्रत्यक्षमिति वर्णयन्ति, कल्पनाऽपोढमभ्रान्तं प्रत्यक्षमिति। नामजात्यादियोजनात्मिका प्रतीतिः कल्पना, सा च सविकल्पकेऽप्यस्तीति न प्रत्यक्षं प्रमाणम्। तन्न; अदुष्टसाक्षात्कारिप्रमाजनकसामग्रीजनितं प्रत्यक्षम्; तदुभयं, निर्विकल्पकं सविकल्पकञ्च;

विशेषेति।—यत्सम्बन्धेति—येन—विषयेण, इन्द्रियाणामिति शेषः, सम्बन्धात्—सन्निकर्षात्, सिद्धं—जातं, तदाकारोल्लेखि—तद्विषयतानिरूपकं, विज्ञानम्—अन्तःकरणवृत्तिः, तत्—वृत्तिरूपं विज्ञानं, प्रत्यक्षं प्रमाणमिति तात्पर्य्यम्। व्यवच्छिन्नौ—निराकृतौ, तथा च, विषयेन्द्रियसन्निकर्षजन्यत्वात् प्रत्यक्षप्रमाणस्य नानुमानशब्दयोः प्रत्यक्षत्वापत्तिरिति भावः। एतच्च प्रत्यक्षप्रमाणलक्षणं सविकल्पकेऽपि वर्त्तते इति दर्शयन्नाह—सविकल्पकमिति। निर्विकल्पकस्यैव प्रत्यक्षत्वमभ्युपगच्छतां बौद्धानां मतमवतारयन्नाह, बौद्धास्त्विति।—अत्र निर्विकल्पकपदं विशेष्यविशेषणभावानवगाहिज्ञानपरम्। तन्मतसिद्धं प्रत्यक्षलक्षणमुदाहरति, कल्पनेति।—अत्र कल्पनापदं विशेष्यविशेषणभावावगाहित्वरूपं, संसर्गकाख्यविषयतारूपं वा, तया कल्पनया अपोढं—शून्यं, यज्ज्ञानं तदेव प्रत्यक्षं प्रमाणम् इति बौद्धानामाशयः। कल्पनाशब्दस्यार्थं प्रदर्शयन्नाह, नामेति।—नामजात्यादिपदेन विशेषणमात्रं गृह्यते, योजनं—यन्नामजात्यादिभिः सम्बन्धावगाहनं, तदेव आत्मा—स्वरूपं यस्याः सा एवम्भूता प्रतीतिः कल्पना इत्युच्यते। सा चेति—नामजात्यादियोजनात्मिका प्रतीतिरित्यर्थः। अत्र प्रतीतिपदं सांसर्गिकविषयतानिरूपकत्वं, बौद्धमते तदेव च भ्रमत्वप्रयोजकम्। यथाश्रुतार्थकत्वे तु सविकल्पकेऽप्यस्ति इत्यन्वयानुपपत्तेः संसर्गावगाहिज्ञानस्य दोषाजन्यत्वेन अबाधितत्वेन च प्रमात्वमवश्यमङ्गीकार्य्यमिति सिद्धान्तमनुसृत्य तदेतत् बौद्धमतं दूषयति, तन्नेति।—तथा च, ज्ञानस्य स्वसामग्रीवशादेव प्राप्तं प्रमात्वं कारणगतदोषनिर्णयेन बलवत्तरबाधकप्रत्ययसद्भावेन च निराक्रियते, नान्यथा; एवञ्च नीलो घट इत्यादि प्रत्ययानां स्वभावत एव प्राप्तं प्रमात्वं स्वकारणगतदोषादर्शनेन बलवत्तरबाधकप्रत्ययविरहेण च नापनोदनमर्हति। तदेतदाह, अदुष्टेति।—तत्—प्रत्यक्षमित्यर्थः। नन्वेवं नामजात्यादेः इन्द्रियसन्निकृष्टतत्तद्विषयेषु भानं कया रीत्या प्रत्यक्षे उपपद्यते? इत्याह

किन्तु सादृश्यात् संस्कारोद्बोधद्वारेण स्मृत्या नामजात्यादि-संविदुत्पद्यते । अत एवाधिकप्राप्त्या सविकल्पकमिति विशेष-संज्ञा । न च स्मृत्या कश्चिद्दोषः सामग्रीप्रत्यवायो वा जनितः । अथ स्मृत्या सहितत्वान्न प्रमाणम्? अहो नैपुण्यम्! यत् सहकारि प्रामाण्यं बाधते । तथा च,—

संज्ञा हि स्मर्य्यमाणाऽपि प्रत्यक्षत्वं न बाधते ।
संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥
ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता ॥ ८९ ॥

—सादृश्यादिति । सविकल्पकशब्दस्य व्युत्पत्तिं दर्शयन्नाह—अत एवेति । ननु सन्नि-कर्षघटकतया अङ्गीकृतायाः स्मृतेरेव दोषत्वात् तज्जन्यसविकल्पकज्ञानस्य चास्तु प्रमात्वं बाधितम्? इत्यत आह, न चेति ।—सामग्रीप्रत्यवाय इति—करणवैकल्यमित्यर्थः । ननु माऽस्तु स्मृतेः स्वतो दोषत्व, तत्सहकृतेन्द्रियस्यैव दोषत्वमस्तु, तेन च जनितस्य सविकल्पकस्य प्रमात्वं न सेत्स्यति? इत्याह—अथेति । तदेतत् दूषयन्नाह, अहो इति ।—इदञ्च सोल्लुण्ठनोक्तिः । न खलु प्रमाणस्य यत् सहकारि तत् प्रामाण्यं बाधितुमलम् । तथात्वे चालोकादिसहकृतमपीन्द्रियं नालं स्यात् प्रमामाधातुम् इत्येतदाह—यदिति । तदभिप्रायं वृद्धसम्मतिं प्रदर्शयन् श्लोकद्वयमवतारयति, तथा चेति ।—संज्ञेति पदं नामादिविशेषणपरम् । अत्र स्मर्य्यमाणेति पदं संज्ञायाः विशेषणम्; तथा च, ज्ञानलक्षणसन्निकर्षप्रयोज्यं संज्ञादिनिरूपितविषयित्वं न प्रत्यक्षस्य धर्म्यंशे लौकिक-सन्निकर्षजनितस्य प्रमात्वं बाधितुं प्रभवति इति प्रतिपादनपरं श्लोकस्य प्रथमार्द्धम् । तटस्था—उदासीना । तदेव औदासीन्यं प्रकटयति, न रूपाच्छादनक्षमा इति ।—तथा च, शुक्तौ आरोप्यमाणं रजतं यथा शुक्तिस्वरूपमेव प्रच्छादयत् तज्ज्ञानस्य भ्रमत्वाय कल्पते, नैवं नामजात्यादिविशेषणं विशेष्यविधया भासमानस्य वस्तुनः स्वरूपं प्रच्छादयतीति तत्सम्बन्धः न धर्मिज्ञानस्य भ्रमत्वनिर्वाहाय अलं भवति इति ध्येयम् । ततः परं—चक्षुरादिरूपज्ञानलक्षणासन्निकर्षसम्पत्त्यनन्तरं, वस्तु—निर्वि-कल्पकज्ञाने भासमानं धर्मिरूपं, यया बुद्ध्या जात्यादिभिर्धर्मैः अवसीयते अर्थात् जात्यादिनिष्ठप्रकारतानिरूपितविशेष्यतया भासते, सा बुद्धिरपि प्रमाप्रत्यक्ष-त्वेन सम्मता इति योजना ॥ ८९ ॥

ननु योगिप्रत्यक्षाव्यापकत्वान्नेदं प्रत्यक्षलक्षणम् ? इत्यत आह,—

**योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ॥ ९० ॥**

बाह्यप्रत्यक्षलक्षणमिदं लौकिकं, योगिप्रत्यक्षन्तु अबाह्यमलौकिकञ्च ; अतो नाव्यापकत्वदोषः ॥ ९० ॥

अथवा अनेन लक्षणेन योगिप्रत्यक्षस्यापि सङ्ग्रह इति पक्षान्तरमाह,—

**लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः ॥ ९१ ॥**

सत्कार्य्यस्थितेर्नष्टमपि स्वकारणे लीनं भूतत्वेन अस्ति, भविष्यदपि स्वकारणेऽनागतत्वेन अस्ति। योगजधर्मानुग्रहात् लब्धातिशयस्य योगिन एव प्रधानसम्बन्धात् सर्वदेशकालादिसम्बन्ध इति नाव्यापकत्वदोषः ॥ ९१ ॥

---

तदेतत् लक्षणं,न योगिप्रत्यक्षे वर्त्तते इत्यव्याप्तिदोषः ? इत्याशङ्कामपनेतुं सूत्रमवतारयति—नान्विति। सूत्रे बाह्यपदं लौकिकपरमित्याह—लौकिकमिति ॥ ९० ॥

अस्यैव लक्षणस्य प्रकारान्तरेण योगिप्रत्यक्षेऽपि सङ्गतिरस्ति इति दर्शयन् सूत्रमवतारयति, अथवेति।—लीनवस्त्विति—कारणे अव्यक्ते लीनं यद्वस्तु अतीतत्वेन भविष्यत्त्वेन वा लोके व्यवह्रियमाणं, तत्र लब्धः,—योगबलसिद्धः, यः अतिशयः,—इन्द्रियादिगतोत्कर्षविशेषः, तेन यः सम्बन्धः,—सन्निकर्षः तस्मात् योगिप्रत्यक्षस्य उत्पत्तेः अदोषः,—अव्याप्तिरूपदोषाभावः इति सूत्रतात्पर्य्यम्। सत्कार्य्यस्थितेः,—सत्कार्य्यवादसिद्धान्तस्य सिद्धत्वादिति भावः। भूतत्वेन—अतीतत्वेन। तथा च, न भाववस्तूनां निरन्वयो ध्वंसः सत्कार्य्यवादिभिः अङ्गीक्रियते। सदेव कार्य्यं वर्त्तमानावस्थापरित्यागेन अतीतत्वरूपामवस्थाम् उपगतं विनष्टं प्रध्वस्तमित्यादिशब्देन लोके व्यवह्रियते ; योगिनान्तु योगजनितप्रकर्षसहकृतम् इन्द्रियं तथाविधातीतानागतवस्तुग्रहणे समर्थं भवतीति तत्प्रत्यक्षस्य विषयेन्द्रियसन्निकर्षजन्यत्वेन न तत्र प्रत्यक्षलक्षणाव्याप्तिः सम्भवति। प्रधानसम्बन्धादिति—प्रधाने—मूलप्रकृतौ, सम्बन्धात्—सन्निकर्षादित्यर्थः ॥ ९१ ॥

ईश्वरप्रत्यक्षस्यालक्षणमित्यत आह,—

**ईश्वरासिद्धेः ॥ ९२ ॥**

यदीश्वरसिद्धौ प्रमाणमस्ति, तदा तत्प्रत्यक्षचिन्ता उपपद्यते ; तदेव तु नास्ति । क्षित्यादि सकर्त्तृकं कार्य्यत्वादिति प्रमाणमस्तीति चेत्, स किं शरीरी ? अशरीरी वा ? इत्युभयथाऽपि कर्त्तृत्वासम्भवात्, विशेषवादिनां कार्य्यत्वस्याभासत्वात् । एतदन्यत्र बहु प्रपञ्चितम् ॥ ९२ ॥

युक्त्यन्तरमाह,—

**मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ॥ ९३ ॥**

स किं बद्धो वा ? मुक्तो वा ? बद्धस्य धर्माधर्मयोगात् नेश्वरत्वम् । मुक्तस्य ज्ञानचिकीर्षाप्रयत्नाभावात् न कर्त्तृत्वमिति

---

तदेतत् लक्षणम् उत्पत्तिघटितत्वेन जन्यप्रत्यक्षस्य सम्भवदपि नित्ये ईश्वरप्रत्यक्षे पुनरव्याप्तम् ? इति नैयायिकाशङ्कां परिहर्त्तुं सूत्रमवतारयन्नाह, ईश्वरेति ।—तथा च, एतन्मते ईश्वरे प्रमाणाभावेन तदीयप्रत्यक्षस्यैवासिद्ध्या कुतस्तत्राव्याप्तिशङ्का ? इति ध्येयम् । अस्त्वेव ईश्वरे प्रमाणमिति वादिनां मतमुत्थापयन् आशङ्कते—क्षित्यादीति । उभयथाऽपि कर्त्तृत्वासम्भवादिति ।—तथा च, ईश्वरस्य शरीरित्वे जीववत् असर्वज्ञतया जगत्कर्त्तृत्वानुपपत्तेः, अशरीरित्वे मुक्तात्मवत् अकर्त्तृतया जगत्सृष्ट्यनुपपत्तेः इत्युभयथा ईश्वरस्य सिद्धिव्याघात इति ध्येयम् । विशेषवादिना—साङ्ख्यानामित्यर्थः । कार्य्यत्वस्याभासत्वादित्यादौ सकर्त्तृकत्वसाधनाय समुपन्यस्तस्य कार्य्यत्वस्य हेतोः अकर्त्तृकत्वव्याप्यशरीराजन्यत्वरूपप्रतिकूलहेतुसद्भावेन सत्प्रतिपक्षितत्वादिति भावः । एतत्—कार्य्यत्वस्य सकर्त्तृकत्वानुमाने साभासत्वम् । अन्यत्र—नास्तिकजैनग्रन्थादौ इत्यर्थः ॥९२॥

प्रकारान्तरेण ईश्वरासिद्धिं प्रपञ्चयन् सूत्रमवतारयति, युक्त्यन्तरमिति ।—नेश्वरत्वमिति—असर्वज्ञत्वमिति भावः । मुक्तस्येति—नित्यमुक्तस्य इत्यर्थः । ज्ञानचिकीर्षाप्रयत्नाभावात्—अवच्छेदकशरीराभावेन इत्यर्थः । नन्वस्तु जीवात् मुक्तात् आत्मनो भिन्नः जीवान्तरापरपर्य्यायः कश्चिदात्मविशेषः ईश्वरः, स एव जगत्कर्त्ता भविष्यति ?

नेश्वरसिद्धिः । अथ अन्य एव असौ जीवन्मुक्तः ? इति । एवं तर्हि दृष्टान्ताभावात् असाधारणत्वम् ॥ ९३ ॥

एतदेवाह,—

**उभयथाऽप्यसत्करत्वम् ॥ ९४ ॥**

उक्तव्याख्यानमेतत् सूत्रम् ॥ ९४ ॥

एवं तर्हि "स हि सर्ववित् सर्वस्य कर्त्ता" इत्यादिश्रुतिबाधः स्यात् ? इत्यत आह,—

**मुक्तात्मनः प्रशंसा, उपासासिद्धस्य वा ॥९५॥**

रागाद्यभावात् मुक्तात्मन इव मुक्तात्मनः, न तु मुक्तस्य ; तस्य सङ्कल्पकर्तृत्वाद्यभावात् । तत्प्रशंसा विधिवाक्योत्तम्भनाय । उपासासिद्धस्य वा इति उपासनया लब्धातिशयस्य योगिनोऽणिमादिसिद्धस्य प्रशंसाऽभ्यासोत्तम्भनायेति ॥ ९५ ॥

---

इति प्रकृते—अर्थात । निराकरोति, एवमिति ।—दृष्टान्ताभावादिति—तथाविधेश्वरानुमाने व्याप्तिग्राहकदृष्टान्तस्यासद्भावात् असाधारणत्वं हेतोरित्यर्थः ॥ ९३ ॥

एतदेव प्रपञ्चयति, उभयथेति ।—अभिमतस्य ईश्वरस्य क्लेशादिभिर्मुक्तत्वं तैः बद्धत्वं वा अङ्गीक्रियते, उभयथाऽपि न सृष्ट्यादिक्षमत्वम् । कुतः ? इति चेत्, मुक्तत्वे सृष्टिप्रयोजकाभिमानरागाद्यभावात् न सृष्ट्यादिक्षमत्वम् ; बद्धत्वेऽपि मूढत्वात् सुतरां न तथा ॥ ९४ ॥

नन्वेवम् ईश्वरप्रतिपादिकायाः श्रुतेः का गतिः ? इत्याशङ्कासमाधानाय सूत्रमवतारयति—एवमिति । मुक्तात्मनः इति, अत्र इवपदप्रक्षेपेण व्याख्यामाह—रागाद्यभावादिति । इवपदप्रक्षेपे हेतुमाह,—न त्विति । तस्य—मुक्तस्य । सङ्कल्पकर्तृत्वाद्यभावादिति ।—तथा च, सङ्कल्पं विना कथं मुक्तस्य कर्तृत्वम् ? कुतो वा तत्प्रशंसा सम्भवेत् ? इति भावः । विधिवाक्योत्तम्भनाय इति—अयन्तु पाठः न सर्वेषु पुस्तकेषु दृश्यते ; अस्य च जीवन्मुक्तपुरुषप्रतिपादकार्थवादघटितविधिवाक्यस्य उत्तम्भनाय—तदर्थानुष्ठाने जनानां रुचिसम्पादनाय इत्यर्थो ग्राह्यः । उपासासिद्धस्य इति पदस्य व्याख्यानमाह, उपासेति ।—उपासनया अणिमाद्यष्टैश्वर्य्यसिद्धिर्यस्य वर्त्तते तस्य । योगिनः प्रशंसा किमर्थम् ? इत्याह, अभ्यासोत्तम्भनायेति—अणिमाद्यष्टसिद्धिसम्पादकयोगे प्रवृत्तस्य योगिनः श्रद्धोत्पादनद्वारा अभ्यासदार्ढ्यसम्पादनाय इति भावः ॥९५॥

चेतनाऽधिष्ठानं विना नाचेतनं प्रवर्त्तते इत्यतोऽपि नेश्वरसिद्धिरित्याह,—

**तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥ ९६ ॥**

यथा प्रतिविम्बितशरीरे मणौ चलति अचलति शरीरे 'शरीरं चलति' इत्यभिमानः, तथा तत्सन्निधानात् प्रकृतिप्रतिविम्बितत्वात् आत्मनः प्रकृतेः कर्त्तृत्वं भोक्तृत्वमधिष्ठातृत्वमात्मनोऽभिमन्यते। तस्माच्चेतनोऽधिष्ठातेति भ्रान्तिरिति। तथा च,—

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा 'कर्त्ताऽहम्' इति मन्यते ॥" ९६ ॥
(गीता ३ अ० २७ श्लोकः)।

यदि न चेतनाऽधिष्ठातृत्वं, मृतशरीरस्य आहारादिक्रिया स्यात्? इत्यत आह,—

**विशेषकार्य्येऽपि जीवानाम् ॥ ९७ ॥**

वायुयुक्तो बुद्ध्यादिर्जीवः, न तु आत्मा जीवः। आहारादि-

अचेतनस्य चेतनाऽधिष्ठानमन्तरेण प्रवृत्त्यनुत्पत्तेः प्रधानकारणवादिभिरपि अवश्यमीश्वरोऽङ्गीकार्य्यः इत्याशङ्कायां समाधानसूत्रमवतारयति, चेतनेति।—चेतनाऽधिष्ठानमन्तरेण अचेतने प्रवृत्तिर्न सम्भवतीति यदुक्तं तत्रास्माकं नास्ति विप्रतिपत्तिः, परन्तु अधिष्ठातुः चेतनस्य परिणतिद्वारकम् अधिष्ठानव्यापारं न वयमङ्गीकुर्मः। चिदात्मनः प्रतिविम्बसम्बन्धेन बुद्ध्यादिरूपेण परिणतायां प्रकृतौ योऽयं सम्बन्धः साङ्ख्याचार्य्यैरङ्गीकृतः, तद्वशेनैव प्रकृतिप्रवृत्तिस्वीकारात् सर्वोपपत्तेः तादृशसम्बन्धनिरूपकत्वमेव चिदात्मनः अधिष्ठातृत्वं, तच्च जीवेऽपि सम्भवति; अतः किमतिरिक्तेश्वराङ्गीकारेण? इत्यर्थः। जीवात्मविलक्षणस्य ईश्वरस्य सत्त्वमनावश्यकमिति साङ्ख्यविदामाशयः, तदेव प्रपञ्चयन्नाह—यथेति ॥९६॥

कर्त्रादिरूपस्वव्यापारं विनाऽपि चिदात्मनोऽधिष्ठातृत्वे तस्य तादृशमधिष्ठातृत्वं सर्वदैव सम्भवतीति मृतशरीरस्यापि जीवाधिष्ठितत्वेन आहारादिप्रसङ्गः इत्याशङ्काऽपनयनाय सूत्रमवतारयति, यदीति।—वायुयुक्त इति—जन्मान्तरगत्यनुकूलसूक्ष्मवायूत्पन्नशरीरस्थ इति भावः। बुद्ध्यादिरपि आदिपदेन इन्द्रियाणां

विशेषकार्य्येऽपि जीवानामेव कर्त्तृत्वम्, आत्मनोऽपरिणामित्वात् ॥ ९७ ॥

आत्मनि चेज्ज्ञानं नास्ति, कथं ज्ञानाय उपदेशः ? इत्यत्राह,—

**सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ॥ ९८ ॥**

उत्तरसूत्रस्थान्तःकरणस्येति पदमनुषञ्जनीयम् । "वाक्यार्थोपदेशोऽन्तःकरणस्य" इत्यन्तमेकं सूत्रं वा । तेनायमर्थः ;—सिद्धरूपबोद्धत्वात् तात्त्विकरूपबोद्धृत्वान्महतोऽन्तःकरणस्य वाक्यार्थोपदेशः, तत्प्रतिबिम्बितत्वाच्च पुरुषस्य बोद्धृत्वाभिमानः ॥ ९८ ॥

एतदेव स्पष्टयति,—

**अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥ ९९ ॥**

अन्तःकरणस्य बुद्धौ पुरुषच्छायापत्त्या तच्चैतन्येनोज्ज्वलितस्य चेतनत्वाभिमानात् अधिष्ठातृत्वम् । लोहवत् इति—यथा आकर्षको लौहो निष्क्रियोऽपि सन्निधिमात्रेण आकर्षति ॥९९॥

---

यद्वचनम् ; तथा च, लिङ्गशरीराश्रितचिदात्मप्रतिबिम्ब एव तादृशप्रतिबिम्बविशिष्टबुद्ध्यादिर्वा जीवपदव्यवहारविषयः । न त्वस्मिन्—बिम्बभूतश्चिदात्मा इत्यर्थः । तथा च, मृतशरीरे तादृशबुद्ध्यादेरवस्थानाभावेन न तत्र जीवाधिष्ठितत्वमिति नोक्तप्रसङ्ग इति ध्येयम् ।९७॥

आत्मनः ज्ञानरूपपरिणामाभावे तस्य ज्ञानाय शास्त्रोपदेशानर्थक्यम् इति शङ्कासमाधानाय सूत्रमवतारयति, आत्मनि इति ।—तथा च, महत्पदवाच्यस्य अन्तःकरणस्य विषयाकारपरिणतिरूपवृत्तौ जायमानायां तत्र चित्प्रतिबिम्बस्य ज्ञानत्वेन व्यवहारात् तस्य च वस्तुतोऽन्तःकरणधर्मस्य जन्यतया तदर्थं शास्त्रोपदेश इति नानुपपत्तिलेशोऽपि इति हृत्तकृतामाशयः ॥९८॥

अन्तःकरणस्य चित्प्रतिबिम्बवशेन यदुक्तमधिष्ठातृत्वं तद्विशदाय सूत्रमवतारयति, एतदेवेति ।—अत्रेदं ज्ञेयं—यथा अग्निसंयोगविशेषेण हि लौहमुज्ज्वलितं तद्वत् प्रतिबिम्बहेतुसंयोगविशेषेण चेतनोज्ज्वलितत्वात् स्वरूपतः अचेतनस्यापि चेतनायमानस्य अचेतनान्तरेभ्यः विलक्षणस्य अन्तःकरणस्य शरीरं चक्षुरादिद्वारकमधिष्ठातृत्वं

अनुमानलक्षणमाह,—

**प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ॥१००॥**

अविनाभावदर्शिनो व्याप्यज्ञानात् अनु व्यापकज्ञानमनुमानम्। अनेन अन्वयी व्यतिरेकी अन्वयव्यतिरेकी पूर्ववच्छेषवत्सामान्यतो दृष्टञ्चेति सङ्गृहीतम्। वादिनामपि लक्षणानि अत्रैवान्तर्हितानीति। तथा च,—

"अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥" १००॥

शब्दं लक्षयति,—

**आप्तोपदेशः शब्दः॥ १०१॥**

आप्तोपदेशः शब्दः, न तु आप्तेन कृतः, अपौरुषेयत्वात् वेदस्य। अपौरुषेयत्वञ्च पञ्चमाध्याये 'न पौरुषेयत्वम्' इति सूत्रे

---

तद्दर्शनेव सर्वव्यवहारोपपत्तेः नात्मनि चिदात्मके कर्त्रादिरूपपरिणामकल्पना न्याय्येति। एतदेव प्रकारान्तरेण प्रपञ्चयन् अन्तिकदाह—लोकवदिति॥९९॥

क्रमप्राप्तमनुमानं निरूपयितुं सूत्रमवतारयति—अनुमानेति। अस्मिन् सूत्रे व्याप्यज्ञानादित्यंशमधिकं पूरयित्वा व्याख्यानमाह—व्याप्यज्ञानादिति। तदेतल्लक्षणं सर्वेषामेवानुमानानां सङ्ग्राहकमिति दर्शयन् आह—अनेनेति। अनुमापकहेतोः लिङ्गपदवाच्यत्वं स्वरूपञ्च दर्शयन् वृद्धकारिकामवतारयति, तथा चेति।—अनुमेयेन—साध्येन, सम्बद्धम्—अविनाभूतं, तदन्विते—साध्यान्विते, सपक्षे इति यावत्, तदभावे—तस्य—साध्यस्य, अभावो यत्र इति व्यधिकरणबहुव्रीहिणा तदभावपदं साध्याभाववन्तं विपक्षं प्रतिपादयति, तथा च विपक्षे इत्यर्थः, नास्त्येव इत्यत्र यदिति पदमध्याहार्य्यम; तत् लिङ्गं—लिङ्गपदेन व्यवहार्य्यं, तदेव च अनुमापकमित्युच्यते॥१००॥

क्रमप्राप्तम आगमसूत्रमवतारयति, शब्दमिति।—आप्तपदम उपदेशस्य विशेषणम; तथा च, अनधिगताबाधितार्थविषयकज्ञानजनकत्वमेवात्र आप्तत्वम। आप्तेन कृत इत्यर्थत्वे तु अपौरुषेयस्य वेदस्य सङ्ग्रहो न स्यात, इति तथाविधं व्याख्यानं परिहृतम इत्याशयेनाह—न त्वाप्तेनेति। ननु किमिदमपौरुषेयत्वम? इत्यत आह—अपौरुषेयत्वमिति। ननु प्रत्यक्षसूत्रे अनुमानसूत्रे च प्रमितेरेव लक्षणं कृतम्, अत्र

प्रतिपादयिष्यामः। शब्द इति कारणकथनं, फलन्तु शब्दजन्यं ज्ञानं शब्दः, कार्य्ये कारणोपचारात्। शाक्यादिवाक्यानां वेदविरोधेनायुक्तत्वादाभासत्वम् ॥१०१॥

प्रकृतिपुरुषविवेकार्थं शास्त्रारम्भः, न च तयोः सिद्धौ प्रमाणमस्तीत्यत आह,—

**उभयसिद्धिः प्रमाणात्, तदुपदेशः ॥ १०२ ॥**

वक्ष्यमाणात् प्रमाणात् प्रकृतिपुरुषयोः सिद्धिर्ज्ञानम्; तस्मात् तद्विवेकार्थमुपदेशो युक्त इति ॥१०२॥

किं तत् प्रमाणम्? इत्यत्राह,—

**सामान्यतो दृष्टादुभयसिद्धिः ॥ १०३ ॥**

प्रकृतेरप्रत्यक्षत्वात् यत् कार्य्यं तत् कारणगुणपूर्वकं, कार्य्यञ्च त्रिगुणात्मकमिति सामान्येन प्रकृतिसिद्धिः। आत्मनोऽप्रत्यक्षत्वेऽपि यत् संहतं, तत् परार्थमित्यसंहतः परः सिद्धः। वक्ष्यति च 'संहतपरार्थत्वात्' ॥१०३॥

तु कथं तत्परित्यागेन प्रमाणलक्षणोपन्यासः? इत्यत आह, शब्द इति।—तथा च, प्रमाणे शाब्दनिश्चिते तज्जन्यज्ञानस्य शाब्दप्रमितित्वं सुज्ञेयमिति न पृथगुपन्यासोऽपेक्षित इति भावः। आप्तकथनेन शाक्यादिवाक्यानां प्रमाणत्वं निराक्रियते इति दर्शयन्नाह—शाक्यादीति ॥१०१॥

उपोद्घातसङ्गत्या मोक्षानुकूलज्ञानविषयतया अपेक्षितयोः प्रकृतिपुरुषयोः सिद्धौ प्रमाणमवतारयितुं सूत्रमुत्थापयति—प्रकृतीति ॥ १०२ ॥

तत्र विशेषेण किं नाम प्रमाणं स्यात? इत्यपेक्षायां सूत्रमवतारयति—किमिति। प्रकृतिसिद्धौ सामान्यतो दृष्टानुमानस्य प्रकारान्तरं दर्शयति—यत कार्य्यमित्यादि। आत्मसिद्धये प्रमाणं दर्शयति, यत् संहतमिति।—एवेदं बोध्यम—आत्माऽनुमाने संहतत्वेन परार्थत्वानुमानमात्रमेव सामान्यतो दृष्टानुमानं, नैतावता साक्षादात्मसिद्धि, एतन्मूलकानुमानान्तरेण तु तत्सिद्धिर्भविष्यति; तच्च उपरिष्टात् व्यक्तीभविष्यति ॥१०३॥

प्रकृतेर्नित्यत्वात् प्रवृत्तिशीलत्वाच्च सर्वदा भोग इत्यनिर्मोक्षः स्यात् इत्यत आह,—

## चिदवसानो भोगः ॥ १०४ ॥

चित्—आत्मा, तद्विवेकावसानो भोगः। यथाऽनादिरपि प्रागभावो नश्यति तथा नित्यायाः प्रकृतेर्विवेकज्ञानपर्य्यन्तः प्रसवः। अथ अभाव एवं, न तु भाव इति ; न, अत्राभावत्वं न प्रयोजकं, प्रध्वंसाभावेऽतथादर्शनात्। अथ यथादर्शनं व्यवस्था, अत्राप्येवम् ॥१०४॥

यदि कर्त्तृ प्रधानं भोक्ता पुरुषः, अन्यकृतकर्मणोऽन्यो भोक्तेति स्यात् इत्यत आह,—

## अकर्त्तुरपि फलोपभोगोऽन्नाद्यवत् ॥ १०५ ॥

यथा सूपकारस्य अन्नादिकर्त्तृत्वम्, अकर्त्तुरीश्वरस्य फलोप-

भोगस्य प्रकृत्यधीनत्वे तस्याः नित्यतया भोगस्यापि सदातनत्वापत्तेः अनिर्मोक्ष-प्रसङ्गः इत्याशङ्कायां समाधानसूत्रमवतारयति, प्रकृतेरिति।—अत्र सूत्रे चिच्छब्दस्तत्पदम् आत्मपरम्। विवेकपदस्याध्याहृत्य आत्मनः विवेकेन अवसानं यस्य इति विग्रहेण अविवेकमूलकस्य भोगस्य विवेकनाश्यत्वमेव व्यवस्थापितम् इति वृत्तिकृदाशयः। शङ्कते,—अथेति।—एवमिति—अनादित्वेऽपि प्रागभावस्याभावरूपतया भवतु नाशः, भोगस्य तु अनादेर्भावरूपतया कथं नाम तद्ध्वंसः उपपद्यते? इति शङ्काग्रन्थतात्पर्य्यम्। परिहरति, नेति।—अत्र ध्वंसवत्त्वे अभावत्वं न प्रयोजकम् इष्यते इति भावः। कुतः? इत्याह,—प्रध्वंसाभावे इति। अतथादर्शनादिति—सत्यपि अभावत्वे प्रध्वंसस्य ध्वंसादर्शनादिति भावः। तथा च, अत्र ध्वंसं प्रति प्रतियोगिनः भावत्वम् अभावत्वं वा नास्माभिः प्रयोजकत्वेनाभ्युपेयते, किन्तु प्रमाणबलेनैव भावस्याभावस्य वा ध्वंसोऽङ्गीक्रियते ; प्रकृते तु भोगनिवृत्तिरूपापवर्गबोधकं "न च पुनरावर्त्तते" इत्यादि शास्त्रमेव अनादेः प्रवाहरूपस्य भोगस्य ध्वंसवत्त्वे प्रमाणमिति वृत्तिकृदभिप्रायः ॥ १०४ ॥

नन्वेवं प्रधानस्य कर्तृत्वे अविकारिणः पुरुषस्य च भोक्तृत्वे कृतिभोगयोः सामानाधिकरण्येन कार्य्यकारणभावः लोकसिद्धः व्याहन्येत, कृतहानाकृताभ्यागम-प्रसङ्गश्च इत्याद्याशङ्काम् अपनेतुं सूत्रमवतारयति, यदीति।—यथा स्वामिना नियुक्तः

भोक्तृत्वं, तथाऽत्रापि । अथोद्देश्यत्वेन कर्त्तृत्वमीश्वरस्य । अत्रापि आत्मोद्देश्यत्वेन प्रकृतेः प्रसव इति ॥ १०५ ॥

व्यवहारसिद्धान्तमुक्त्वा स्वसिद्धान्तमाह,—

**अविवेकाद्वा तत्सिद्धेः कर्त्तुः फलावगमः ॥ १०६ ॥**

न पुरुषः कर्त्ता न भोक्ता, किन्तु महत्तत्त्वप्रतिबिम्बितत्वात् कर्त्तृत्वाभिमानः । अविवेकाद्वा इति प्रकृतिपुरुषयोर्विवेकाग्रहात् । तत्सिद्धेः कर्त्तुः फलोपभोगाभिमानसिद्धेरिति ॥ १०६ ॥

एतद्व्यतिरेकमाह,—

**नोभयञ्च तत्त्वाख्याने ॥ १०७ ॥**

---

सूपकारः अन्नं पचन्नपि न अन्नभोक्ता, स्वामी तु अपचन्नपि तद्भोक्ता, एवं पुरुषाधिष्ठितया प्रकृत्या स्वकार्य्यमहदादिकृतिद्वारेण उत्पादितं भोग्यम् अकर्त्ताऽपि पुरुषः भुङ्क्ते इति नास्ति काऽपि अनुपपत्तिरिति वृत्तिकृतामाशयः । अत्रो ईश्वरपदं सूपकारं नियुञ्जानस्य तत्स्वामिनो बोधकम् । समवायेन कृत्याश्रयस्य भोगासम्भवेऽपि दृष्टान्ते उद्देश्यत्वेन कृतिमत्त्वं भोगसमानाधिकरणं सत् भोगप्रयोजकं दृष्ट, दार्ष्टान्तिके तत् कथमुपपद्यते ? इत्याशङ्कते—अथेति । सिद्धान्तमाह, अत्रेति ।—तथा च, प्रकृतेरपि महदाद्यात्मना परिणतायाः या कृतिः साऽपि उद्देश्यत्वेन स्वजन्यभोगाश्रयत्वेनेच्छाविषयतारूपेण सम्बन्धेन आत्मनि वर्त्तते एवेति न दृष्टान्त-दार्ष्टान्तिकयोः वैषम्यम् इति वृत्तिकृतामाशयः ॥ १०५ ॥

वस्तुतस्तु भोगोऽपि प्रकृतिनिष्ठ एव, अविवेकेन तु स पुरुषवृत्तिरिति व्यवह्रियते, अतः पूर्वपक्षस्यैव असम्भव इति साङ्ख्यसिद्धान्तं दर्शयितुं सूत्रमवतारयति, व्यवहारेति ।—तथा च, वास्तवेन पुरुषस्य न कर्तृत्वं, न वा भोक्तृत्वं, महत्तत्त्वे प्रतिबिम्बतया स्थितश्चेतन एव भोक्ता, तस्य च बिम्बव्यतिरेकेण उपाधिनिष्ठतया अवास्तवत्वेन औपाधिक एव भोगः पुरुषस्य इति साङ्ख्यसिद्धान्ते कृतिभोगयोः वैयधिकरण्यापत्तिप्रयुक्तः न कश्चिद्दोष इति ध्येयम् ॥ १०६ ॥

अत्रो कर्त्तुरित्यस्य कर्तृत्वाभिमानवतः पुरुषस्य इत्यर्थो ज्ञेयः ; तदेतन्मतं व्यतिरेकोपन्यासेन द्रढयितुं सूत्रमवतारयति, एतदिति ।—तथा च, अविवेकात् भोगवत्त्वं

विवेकात् तत्त्वज्ञाने नोभयं—न कर्त्तृत्वं न भोक्तृत्व-मिति ॥ १०७ ॥

प्रमाणमुक्त्वा प्रमेयव्यवस्थामाह,—

**विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ॥ १०८ ॥**

इन्द्रियस्य उपादानात्—सम्बन्धात् विषयः, इन्द्रियस्य हानात्—सम्बन्धाभावात् अविषयः, असम्बन्धश्च अतिदूरादेरयोग्यत्वात्। अतिदूरात् वियति पक्षी नोपलभ्यते, अतिसामीप्यात् लोचनस्थाञ्जनं, व्यवधानात् कुड्यस्थं वस्तु, मनोऽनवस्थानात् शोकादिग्रस्तस्य पार्श्वस्थवस्त्वग्रहणं, सौक्ष्म्यात् अणोः, अभिभवात् मार्दलध्वनिना शङ्खध्वनिरित्यादिः ॥ १०८॥

प्रकृतेः कथमनुपलब्धिः ? इत्यत आह,—

**सौक्ष्म्यादनुपलब्धिः ॥ १०९ ॥**

दुरूहत्वं सौक्ष्म्यं, न तु अणुत्वं, प्रकृतेर्विभुत्वात् ॥ १०९ ॥

---

विवेके च अपवर्गः भोगनिवृत्तिरूपः, इत्यन्वयव्यतिरेकदर्शनात भोगस्य आभिमानिकत्वं फलबलादायातम । तथा च सति पुरुषस्य कर्त्तृत्वं भोक्तृत्वञ्चेतत् द्वयमपि व्यावहारिकमेव, न तु तात्त्विकमिति तात्पर्य्यम ॥ १०७ ॥

प्रमाणनिरूपणानन्तर प्रमेयव्यवस्थाप्रदर्शनपरं सूत्रमवतारयति, प्रमाणमिति ।—विषयोऽपि—प्रत्यक्षयोग्योऽपि पदार्थः । अतिदूरादेः,—फलोपहितेन्द्रियसन्निकर्ष-व्याघातकस्य अतिदूरत्वादेरित्यर्थः । हानोपादानाभ्याम—इन्द्रियसम्बन्धहान-तद्-योग्यत्वोपादानाभ्याम इत्यर्थः । केचित्तु सूत्रमन्यथा व्याचक्षते ; तन्मते—अतिदूरत्वादेः यथायथं दोषात गुणाद्वा हानोपादानाभ्यां—फलोपहितसन्निकर्षाभाव-तत्सद्भावाभ्यां, विषयोऽपि अविषयः, तथा अविषयोऽपि विषयो भवतीति सूत्रनिर्गलितार्थ इति । आदिपदेन येषां दोषाणां ग्रहणं सूत्रे सूचितं, तान् सङ्क्षेपेण दर्शयन्नाह—अतिसामीप्यादिति ॥ १०८ ॥

जगत्कारणस्य प्रधानस्य अनुपलब्धौ तु को हेतुः ? इत्यत आह—प्रकृतेरिति ।

कथं तर्हि प्रकृतिव्यवस्था ? इत्यत आह,—

**कार्य्यदर्शनात् तदुपलब्धेः ॥ ११० ॥**

यथा घटदर्शनात् परमाणुज्ञानं, तथा त्रिगुणकार्य्यदर्शनात् प्रकृतिज्ञानम् ॥११०॥

ब्रह्मकारणं जगदिति केचित्, परमाणुकारणमित्यन्ये, प्रकृतिकारणमिति वृद्धा इति संशयमाह,—

**वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् ? ॥ १११ ॥**

तदसिद्धिः प्रधानासिद्धिः ॥१११॥

सिद्धान्तमाह,—

**तथाऽप्येकतरदृष्ट्याऽन्यतरसिद्धेर्नापलापः॥११२॥**

यदि वादिविप्रतिपत्तिमात्रेण पक्षासिद्धत्वं, विपक्षेऽपि विप्रतिपत्तिरस्तीति कथं तत्सिद्धिः ? यदि व्याप्यज्ञानात् व्यापक-

---

सौक्ष्म्यशब्दार्थमाह, दुरूहत्वमिति ।—अत्र दुरूहत्वं—प्रत्यक्षयोग्यतया प्रयोजकमाल-चौरमूढरूपावच्छावयशून्यत्वम् । न त्वणुत्वम्—अणुत्वमेवेत्यर्थः ॥ १०९ ॥

नन्वेवं तदुपलब्धौ किं प्रमाणम् ? इत्यतः सूत्रमवतारयितुमाह, कथं तर्हि इति।—अत्रौ घटपदं घटादिद्व्यणुकान्तकार्य्यपरम् ॥ ११० ॥

प्रसङ्गेन प्रकृतिकारणत्वमसहमानानां तीर्थकानां मतोपन्यासपूर्वकं तद्दूषणाय सूत्राण्यवतारयितुमाह, ब्रह्मेति ।—केचित—विवर्त्तवादिनः । अन्ये—आरम्भवादिनः । वृद्धाः,—परिणामवादिनः । तदसिद्धिरिति सौत्रं पदं व्याचष्टे—तदसिद्धिरिति ॥ १११ ॥

तत्र प्रथमं स्वसिद्धान्तं प्रख्यापयितुं सूत्रमवतारयति, सिद्धान्तमिति ।—वादिविप्रतिपत्तिमात्रेण—विवर्त्तवादिनाम् आरम्भवादिनाञ्च संशायकवाक्योपन्यासमात्रेणेत्यर्थः । पक्षासिद्धत्वमिति—पक्षस्य—पक्षाभिमतस्य जगतः प्रत्युपादानकत्वस्य, असिद्धत्वं—स्वविषयज्ञानधर्मिकाप्रामाण्यवत्त्व इत्यर्थः । अत्र विपक्षे इति पदात् प्राक् अस्तीति पदमध्याहार्य्यम् ; विपक्षे—विरुद्धवादिभिः अङ्गीकृते पक्षे, आरम्भवादे विवर्त्तवादे च इत्यर्थः ; तथा च, विप्रतिपत्तिसद्भावमात्रेण न कस्यचित् पक्षस्य सिद्धिरसिद्धिर्वा

ज्ञानस्य अविनाभावित्वात् प्रत्यक्षसिद्धिः, ममाप्येवम् इति न कार्य्यात् अनुमानापलापः ॥ ११२ ॥

कार्य्यात् कारणमस्तु, तच्च प्रकृतिरिति कथम्? इत्यत आह,—

त्रिविधविरोधापत्तेः ॥ ११३ ॥

त्रिविधो गुणः, सत्त्वरजस्तमांसि, तद्विरोधः तच्छून्यं जगत् भवेत्। न चैवं दृश्यते इति ॥ ११३ ॥

कार्य्यस्य किं सत उत्पत्तिः? असतो वा? इति संशयं निरस्यति,—

नासदुत्पादो नृशृङ्गवत् ॥ ११४ ॥

असदेकस्वभावं नृशृङ्गादि, सदेकस्वभावमाकाशादि, सदसत्स्वभावा घटादय इति कथं नृशृङ्गतुल्यत्वम्? तत् न, घटा-

---

सम्भवति; अपि तु तर्कपरिशोधितव्याप्तिज्ञानमूलकानुमानादेरेव विषयसाधनं परीक्षकाणाम अभिमतसिद्धिकृत्, तच्च परिणामवादे निष्प्रत्यूहमेव इति दर्शयन्नाह— यदीति ॥ ११२ ॥

प्रकृतिकारणत्वसमर्थनाय सूत्रमवतारयति, कार्य्यादिति।—सूत्रे त्रिविधपदेन सत्त्व-रजस्तमांसि गुणाः गृह्यन्ते, विरोधपदञ्च अभावपरम; तथा च, त्रिगुणात्मकजगत्-कारणास्वीकारे जगतस्त्रैगुण्याभावः प्रसज्येत इति प्रत्यक्षसिद्धस्य जगत्त्रैगुण्यस्य अन्यथा-ऽनुपपत्त्या तन्मूलकारणस्यापि त्रैगुण्यं सिध्यतीति सूत्रतात्पर्य्यम। विज्ञानभिक्षुस्तु सूत्र-मेतदन्यथा व्याचख्यौ; तद्यथा—"अत्र सर्वं कार्य्यं त्रिविधं सर्ववादिसिद्धम, अतीत-मनागतं वर्त्तमानमिति; तत्र यदि कार्य्यं सदाऽसन्न इष्यते, तदा त्रिविधत्वानुपपत्तिः, अतीतादिकाले घटाद्यभावेन घटादेरतीतादिधर्मकत्वानुपपत्तेः, सदसतोः सम्बन्धा-नुपपत्तेरिति ॥ ११३ ॥

इदानीं कार्य्यस्य उत्पत्तेः प्राक् अपि सत्त्वं व्यवस्थापयितुं सूत्रमवतारयति, कार्य्यस्येति।—सतः,—उत्पत्तेः प्रागपि विद्यमानस्य इत्यर्थः। उत्पत्तिः,—अभिव्यक्ति-रित्यर्थः। असदेकस्वभावं—कदाचिदपि सत्तया प्रतीत्यनर्हम्। सदेकस्वभावं—सर्वदैव सत्तया प्रतीत्यर्हम्। सदसत्स्वभावाः,—कदाचित् सत्त्वेन प्रतीतियोग्यत्वे

दीनां प्रागभावसमयेऽसत्त्वं नृशृङ्गादीनां सर्वदाऽसत्त्वमिति द्वयोः को विशेषः ? घटादीनां जन्मदर्शनं विशेष इति चेत्, एतदेव चिन्त्यते. एतदेवोत्तरमित्यहो !! नैपुण्यम् ॥११४॥

सत्कार्ये न्यायमाह,—

उपादाननियमात् ॥ ११५ ॥

कारणसम्बन्धात् कार्य्यस्य । सम्बन्धश्च विद्यमानयोरेव, अन्यथा सर्वदा सर्वत्र कार्य्योत्पत्तिः स्यात् ॥ ११५ ॥

एतदेवाह,—

---

सति असत्त्वेन प्रतीतिविषयाः तादृशाः पदार्थाः घटादय इत्यारम्भवादिनां मतं, तन्मतेनेयं शङ्का ज्ञेया। तदेतदारम्भवादिमतं दूषयति, तन्नेति।—प्रागभावसमये—उत्पत्तेः प्राक्। तथा च, असतः अलीकात्मनः कदाचिदपि सत्त्वं नैव सम्भवति, "यत् सत् तत् सदेव, यदसत् तदसदेव" इति न्यायात् घटादीनां जन्मदर्शनेन तत्पूर्वम् असत्त्वम् अनन्तरञ्च सत्त्वम् इति अस्ति सर्वदैव असद्रूपात् नृशृङ्गादेस्तद्वैलक्षण्यम् इति आरम्भवादी शङ्कते—घटादीनामिति। सिद्धान्ती परिहरति, एतदेवेति।—एतत्—घटादीनां जन्मदर्शनं, चिन्त्यते—सन्दिह्यते; तथा च, भावानां जन्मदर्शनं किं कारणव्यापारात् प्रागपि विद्यमानानां तेषाम् अभिव्यक्तिप्रतिबन्धकसमपसारण-प्रयोज्यम्? उत असतां तेषां प्रागभावध्वंसप्रयोज्यम्? इति सन्देहाकारः; तथा च, जन्मदर्शनस्य प्रागभावप्रयोज्यत्वं सन्दिग्धमिति तद्बलात् प्रागभावानुमानम् आरम्भ-वादिनामभिमतं सन्दिग्धव्यभिचारतया न सिध्यति। एतदेवाह वृत्तिकारः, एतदेव चिन्त्यते, एतदेव उत्तरम् इत्यादिग्रन्थेन ॥ ११४ ॥

सत्कार्य्यसिद्धौ युक्तिप्रदर्शनपराणि सूत्राणि अवतारयति, सत्कार्य्ये इति।—सूत्रे उपादानपदं समवायिकारणपरम्; तथा च, कारणविशेषात् कार्य्यविशेषम् अङ्गीकुर्वद्भिः आरम्भवादिभिः तयोः कारणविशेष-कार्य्यविशेषयोः व्यवस्थितकार्य्य-कारणभावनिर्वाहाय कश्चन सम्बन्धविशेषः अवश्यमङ्गीकार्य्यः; स च उत्पत्तेः प्राक् कार्य्यस्यासत्त्वे न सम्भवति, सतोरेव सम्बन्धदर्शनात्, सदसतोः सम्बन्धानुप-पत्तेश्च। तमिममर्थं सूचयन्नाह वृत्तिकारः,—सम्बन्धश्चेति। अन्यथा—सम्बन्धं विनैव कार्य्यकारणभावाङ्गीकारे इत्यर्थः ॥ ११५ ॥

एतत्प्रपञ्चनपरं सूत्रमवतारयन्नाह, एतदेवेति।—तथा च, योऽयं सर्वत्र

**सर्वत्र सर्वदा सर्वासम्भवात् ॥ ११६ ॥**

व्यक्तम् ॥ ११६ ॥

ननु उपादानकारणत्वाविशेषेऽपि यस्य यत् शक्यं, तदेव तत् करोति ; न हि तन्तुर्घटस्य कारणं भवति ; कुतः सर्वसम्भवः ? इत्यत आह,—

**शक्तस्य शक्यकरणात् ॥ ११७ ॥**

शक्तस्य शक्तिः शक्यविषया वा ? न वा ? शक्यविषया चेत्, शक्यस्य सत्त्वं वाच्यम् । नेति पक्षे तन्तुतो घटोत्पत्तिस्तदवस्था ॥ ११७ ॥

अपरं न्यायमाह,—

**कारणभावाच्च ॥ ११८ ॥**

कार्य्यकारणयोरेकत्वात् घटाकारेण परिणतोऽपि मृद्रूपतां न जहाति । न च सदसतोरेकत्वम् । यदि द्वयोरेकत्वं मृत्पिण्ड-

---

सर्वदा सर्वासम्भवः लोके दृष्टः स सतोः कार्य्यकारणयोः सम्बन्धस्वीकारे एव सम्भवति, अन्यथा उत्पत्तेः प्राक् असता कार्य्येण कारणत्वेनाभिमतानां सर्वेषामेव वस्तूनाम् असम्बद्धत्वाविशेषात् विनिगमनाविरहेण सदा सर्वत्र सर्वं कार्य्यमुत्पद्येत इति सूत्रार्थः ॥ ११६ ॥

ननु कारणे कार्य्यानुकूलशक्तिरेव उत्पत्तौ नियामिका भविष्यति इति न सर्वत्र सर्वदा सर्वकार्य्योत्पादप्रसङ्गः इत्याशङ्का समाधानसूत्रमवतारयन्नाह, नन्विति ।—शक्तस्य—शक्तिमत्तया अङ्गीकृतस्य कारणस्य इत्यर्थः । शक्यविषया—शक्येन कार्य्येण सम्बद्धा इत्यर्थः ; तथा च, कारणगतशक्तेः कार्य्येण सम्बन्धस्वीकारे उत्पत्तेः प्राक् कार्य्यस्य सत्त्व फलबलादेवायातम् । असम्बन्धपक्षे तु सर्वत्र सर्वदा सर्वकार्य्योत्पादप्रसङ्गतादवस्थ्यम् इति सूत्रतात्पर्य्यम् ॥ ११७ ॥

युक्त्यन्तरमवतारयन्नाह—अपरमिति । सूत्रे कारणभावपदं कारणतादात्म्यपरम् इति दर्शयन्नाह—कार्य्यकारणयोरिति । आरम्भवादी शङ्कते, यदीति ।—द्वयोः,—मृत्पिण्डादिरूपकारण घटादिरूपकार्य्ययोरित्यर्थः । एकत्वपक्षे दोषं दर्शयन्नाह, मृत्पिण्डेनेति ।—तथा च, घटो यदि स्वोपादानकारणादभिन्नः स्यात्, तदा घटोत्पत्तेः

नापि जलाहरणं कर्त्तव्यम् । भवेदेवं, यदि अत्यन्ताभेदः स्यात्, भेदाभेदपक्षे तु न कश्चिद्दोष इति । तथा च,—

"असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः ।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥"

"नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥११८॥"

इति ( गीता २ अ० १६ श्लोकः )।

अस्तु ते,—

**भावे भावयोगश्चेन्न वाच्यम् ॥ ११९ ॥**

यदि भावे कारणे भावस्य कार्य्यस्य विद्यमानस्य योग उत्पत्तिः, तदा 'भविष्यति घटः, उत्पद्यते, नष्टः' इति व्यपदेशो न स्यात् ॥ ११९ ॥

---

प्रागपि घटोपादानमृत् घटकार्य्यं जलाहरणादिकं कुर्य्यात । न चैवं दृश्यते, तस्मादस्त्येव भेदः घटादेः कार्य्यात तदुपादानस्य मृदादेः इति । आरम्भवादिनां पूर्वपक्षस्य परिहारं दर्शयन्नाह, भवेदेवमिति ।—इदमत्र तात्पर्य्यम् ;—यदि कार्य्यस्य कारणात अत्यन्ताभेदः अङ्गीकृतः स्यात्, तदाऽयं दोषः प्रसज्येत ; वस्तुतः परिणामवादिभिः कारणे कार्य्यस्य अत्यन्ताभेदः नाङ्गीक्रियते, भेदाभेदवादस्तु तेषामभिमतः ; कारणताऽवच्छेदकसामानाधिकरण्येन कार्य्यस्य भेदः कार्य्यताऽवच्छेदावच्छेदेन च कारणस्याभेद एव कार्य्यकारणयोः भेदाभेदशब्देन व्यवह्रियते इति सूक्ष्ममीक्षणीयम् । सत्कार्य्यवादपक्षे वृद्धसम्मतिं प्रदर्शयन् कारिकाद्वयमवतारयति, तथा चेति ।—असत्त्वात्, कार्य्यस्य उत्पत्तेः प्रागिति शेषः । सत्त्वसङ्गिभिः,—सत्त्वेनैव कार्य्यकारणभावरूपसम्बन्धवद्भिः । ननु असम्बद्धमेव कार्य्यं कारणेन उत्पाद्यताम् इत्यत आह, असम्बद्धस्येति ।—न व्यवस्थितिः,—नियतकारणात् नियतकार्य्योत्पत्तिरूपा व्यवस्था न स्यादित्यर्थः । असतः,—कारणव्यापारात् प्राक् अविद्यमानस्य कार्य्यस्य, भावः,—उत्पत्तिः, सतः,—कार्य्यस्य कारणस्य वा, अभावः,—ध्वंस इत्यर्थः । उभयोः,—सदसतोः, अन्तः,—सत् सदेव, असत् असदेव इत्येवं-रूपो निश्चयः ॥ ११८ ॥

कार्य्यस्य सदातनत्वे शङ्कामुखमवतारयति—अस्तु ते इति । सूत्रे न वाच्यम् इत्यस्य अर्थमाह—तदा इति ॥ ११९ ॥

सिद्धान्तमाह,—

**न, अभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥ १२० ॥**

यथा शुक्लपटस्य मलिनस्य क्षालनादिना शुक्लत्वमभिव्यज्यते, तथा कुलालव्यापारात् घटोऽभिव्यज्यते, मुद्गराभिघातात् तिरोभूयते। दृष्टश्च अभिव्यक्तिः पीड़नेन तिलेषु तैलस्य, दोहनेन गवि पयसः, अवघातेन धान्ये तण्डुलाना-मित्यादि ; तस्मादभिव्यक्तिनिबन्धनौ शब्दप्रयोगार्थक्रियाभेदाविति ॥ १२० ॥

अभिव्यक्तिनिबन्धनोत्पत्तिः, किं-निबन्धनो विनाशः ? इत्यत आह,—

**नाशः कारणलयः ॥ १२१ ॥**

मुद्गराभिघातात् घटस्य कारणे लयः, तन्निबन्धनो नाश इति शब्दार्थक्रियाभेदौ। यदि लयः, तर्हि पुनरुद्भूतो दृश्येत, न च दृश्यते इति चेत् ? मूढैर्न दृश्यते, विवेचकैर्दृश्यते एव। तथा हि, तन्तौ नष्टे मृद्रूपेण परिणामः, मृदश्च कार्पासवृक्षरूपेण

तामिमामाशङ्कां निराकर्त्तुं सूत्रमवतारयति, सिद्धान्तमिति।—व्यवहाराव्यवहारौ—विद्यमानत्वव्यवहार-तदभावौ इत्यर्थः। अभिव्यक्तिनिबन्धनाविति—अभिव्यक्तिप्रयोज्यौ इत्यर्थः ; तथा च, एतन्मते अभिव्यञ्जकसामग्री एव कार्य्यस्य उत्पादकसामग्रीत्वेन व्यपदिश्यते। वस्तुतस्तु अभिव्यञ्जकसामग्र्या एव उत्पत्त्यादिव्यवहारसम्भवे उत्पत्तिं प्रति सामग्र्यन्तरकल्पनं गौरवग्रस्तम् असम्भवदुक्तिकञ्चेति सूत्राशयः। तमिमम् आशयं प्रकटीकुर्वन् उक्तिकृत् सूत्रं व्याख्यातुम् उपक्रमते—यथेति ॥ १२० ॥

उत्पत्तेरिव ध्वंसस्यापि नास्ति कार्य्येण कश्चित् तात्त्विकः सम्बन्धः, उत्पत्तिनाशव्यवहारौ तु अभिव्यक्ति-तिरोभावमूलकौ इति प्रदर्शनपरं सूत्रमवतारयति, अभिव्यक्तीति।—अत्र उत्पत्तिपदम् उत्पत्तिव्यवहारपरं ज्ञेयम्। नाशश्च कारणलय-

परिणामः, तस्य पुष्पफलतन्तुरूपेण परिणामः। एवं सर्वे भावाः॥ १२१॥

किमभिव्यक्तिः सती? असती वा? सती चेत्? नित्यं कार्य्योपलब्धिः स्यात। असती चेत्? सत्कार्य्यहानिः स्यात्। तस्या अपि अभिव्यक्तिरन्या, तस्या अप्यन्या इत्यनवस्था इत्यत आह,—

पारम्पर्य्यतोऽन्वेषणात् बीजाङ्कुरवत् ॥१२२॥

भवतु अभिव्यक्तिसहस्रं, तथाऽपि न दोषः, अनादित्वात्, बीजाङ्कुरवदिति॥ १२२॥

युक्त्यन्तरमाह,—

उत्पत्तिवद्वाऽदोषः॥ १२३॥

किमुत्पत्तिरुत्पद्यते? न वा? उत्पद्यते चेत्? अस्या अप्युत्पत्तिरिति अनवस्था। नोत्पद्यते चेत्, किमसत्त्वात्? नित्यत्वाद्वा? यदि असत्त्वात्? कदाचिदप्युत्पत्तिर्नास्तीति सर्वदाऽनुपलम्भः स्यात्। अथ नित्यत्वात्? सर्वदा कार्य्योत्पत्तिः स्यात्। अथोत्पत्तेः स्वयमेवोत्पत्तिरूपत्वात् किमुत्पत्त्यन्तरकल्पनया? इति, तर्हि अभिव्यक्तेरपि अभिव्यक्तिरूपत्वात् किमभिव्यक्त्यन्तरकल्पनया? इति तुल्यम्। तव यस्तव सिद्धान्तः सोऽस्माकमपि॥ १२३॥

नाशत्वे ध्वस्तस्य घटस्य पुनरुद्भवः कुतो न स्यात? इतीमामाशङ्कां निराकर्त्तुम् आह, यदीति।—मूढैरिति—अविवेकिभिरित्यर्थः॥ १२१॥

अभिव्यक्तेः सत्त्वमसत्त्वं वा? इति विकल्प्य आद्ये कारणव्यापारवैफल्यं, द्वितीये असत्कार्य्योत्पादप्रसङ्गः इतीमामाशङ्कां निराकर्त्तुं सूत्रमवतारयन्नाह, किमभिव्यक्तिरिति।—पारम्पर्य्यतः,—परम्पराक्रमेण, अन्वेषणा—अभिव्यक्तेरनुधावनं, कर्त्तव्यमिति शेषः। न चैवमनवस्था स्यात् इत्यत आह—बीजाङ्कुरवदिति। तदेतत् प्रपञ्चयन्नाह वृत्तिकारः, तथाऽपीति॥ १२२॥

अभिव्यक्तेः अभिव्यक्त्यन्तरस्वीकारास्वीकारतः प्रसङ्गः उत्पत्तिपक्षेऽपि समानम्

प्रकृतिकार्य्याणामन्योऽन्यं साधर्म्यमाह,—

**हेतुमदनित्यं सक्रियमनेकमाश्रितं लिङ्गम् ॥१२४॥**

हेतुमत्—कारणवत् । अनित्यं—विनाशि । सक्रियम्—उपात्तं देहं त्यजत्, पृथिवी शरीरादयश्च स्पन्दन्ते । अनेकं—पुरुषभेदात् । आश्रितं—स्वकारणे । लिङ्गं—स्वकारणे लयं गच्छतीति ॥ १२४ ॥

यदि पञ्चविंशतितत्त्वं, किं ज्ञानसुखादीनां सामान्यकर्म्मणामभाव एव ? तथा च दृष्टपरित्याग इत्यत आह,—

**आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्-सिद्धिः प्रधानव्यपदेशाद्वा ॥ १२५ ॥**

आञ्जस्यात् स्वरूपतः चतुर्विंशतितत्त्वात् अभेदस्तल्लक्षणयोगात् गुणसामान्यादीनाम् । तत्सिद्धिः,—तेषु एवान्तर्भावात् सिद्धिः । वा-शब्दः पक्षान्तरं सूचयति । प्रधानव्यपदेशाद्वा—गुणादीनां पारम्पर्य्येण प्रधानकार्य्यत्वेन कार्य्यकारणयोरभेदात् प्रधानव्यपदेशादेव गुणादिसिद्धिः, न तु अभावात् अननुकीर्त्तनम् ॥ १२५ ॥

---

इति दर्शयन् सूत्रमवतारयति—युक्त्यन्तरमिति । उत्पत्तेरनुत्पत्तिपक्षे दोषं दर्शयन्नाह—नोत्पद्यते इति । वास्तव समाधानं प्रदर्शयन्नाह—चयोत्पत्तेरिति ॥ १२३ ॥

कार्य्याणां साधर्म्यसूत्रमवतारयति—प्रकृतीति । विनाशीति—तिरोभावधर्मकमित्यर्थः । अनेकमिति ।—यत्किञ्चिद्वाबहुयङ्क्तितत्त्वविभाजकोपाधिमत्त्वे सति कार्य्यत्वम् एव अनेकत्वमभिप्रेतम् । लिङ्गमिति—तिरोभावदशायां कारणरूपतापन्नमित्यर्थः ॥ १२४ ॥

धर्मधर्मिणोरभेदोपचारेण गुणक्रियादीनां धर्माणां पञ्चविंशतितत्त्वेष्वेव यथायथम् अन्तर्भावं दर्शयन्नाह, यदीति ।—तेष्वेव—चतुर्विंशतितत्त्वेष्वेव । प्रधानव्यपदेशात्—प्रधानकार्य्यत्वेन तदभिन्नतया शास्त्रे निर्देशादित्यर्थः ॥ १२५ ॥

प्रकृतिकार्य्ययोः साधर्म्यमाह,—

**त्रिगुणाचेतनत्वादि द्वयोः ॥ १२६ ॥**

त्रिगुणमचेतनम्। आदिशब्दात् परार्थत्वम्। द्वयोरिति कार्य्यकारणयोः ॥ १२६ ॥

प्रकृतिभागस्य त्रिगुणस्यान्योऽन्यवैधर्म्यमाह,—

**प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम् ॥ १२७ ॥**

प्रीतिः,—सुखम्। आदिशब्दात् लघु प्रकाशकं सत्त्वम्। अप्रीतिः,—दुःखम्। आदिशब्दात् उपष्टम्भकं चलं रजः। विषादः,—मोहः। आदिशब्दात् गुरु वरणकं तमः ॥ १२७ ॥

तेषां वैधर्म्यकथनानन्तरं साधर्म्यमाह,—

**लघ्वादिधर्मैरन्योऽन्यं साधर्म्यं वैधर्म्यं गुणानाम् ॥ १२८ ॥**

लघुचलगुरुत्वैः; अनेन वैधर्म्यमुक्तम्। आदिशब्दात् साधर्म्यं सूचितम्; तच्च पुरुषार्थत्वम् अन्योऽन्याभिभवजननमिथुनवृत्तित्वम् ॥ १२८ ॥

हेतुमदित्यादिना महदादीनां कार्य्यत्वमुक्तम्। तत्र प्रमाणमाह,—

---

कार्य्यमात्रसाधर्म्यमुक्त्वा इदानीं मूलकारण-तत्कार्य्ययोः साधर्म्यं दर्शयन् सूत्रमवतारयति—प्रकृतिकार्य्ययोरिति। सूत्रस्थस्य आदिपदस्य अर्थमाह, आदिशब्दादिति।—परार्थत्वं—परकीयभोगजनकत्वम् ॥ १२६ ॥

प्रधानस्य अवयवतया प्रसिद्धानां गुणानां सत्त्वरजस्तमसां मिथो वैधर्म्यं दर्शयन् सूत्रमवतारयति—प्रकृतीति ॥ १२७ ॥

वैधर्म्यवत् साधर्म्यमपि दर्शयन्नाह—तेषामिति। साधर्म्यस्वरूपमाह—तच्चेति ॥ १२८ ॥

महदादीनां कार्य्यत्वे प्रमाणं दर्शयितुं सूत्रमवतारयति, हेतुमदिति।—

## उभयान्यत्वात् कार्य्यत्वं महदादेर्घटादिवत् ॥ १२९ ॥

प्रकृतिपुरुषयोर्नित्ययोरन्यत्वात् । शेषं व्यक्तम् ॥ १२९ ॥

हेत्वन्तरमाह,—

## परिमाणात् ॥ १३० ॥

परिमितत्वात् ॥ १३० ॥

अपरां युक्तिमाह,—

## समन्वयात् ॥ १३१ ॥

प्रधानेन सह सम्यगन्वयात् प्रधानगुणानां सर्व्वपदार्थेषु दर्शनात् ॥ १३१ ॥

एतदेवाह,—

## शक्तितश्चेति ॥ १३२ ॥

कारणशक्त्या कार्य्यं प्रवर्त्तते इति महदादयः स्वोणाः सन्तः प्रकृत्यनुपूरणेन कार्य्यं जनयन्ति; अन्यथा प्रवृत्तिशीलत्वात् सर्व्वदा कार्य्यं जनयेयुः ॥ १३२ ॥

---

उभयान्यत्वादिति सौत्रं पदं, तदर्थश्च प्रकृतिपुरुषरूपनित्यभिन्नत्व, तथा च, अनित्यत्वेनैव महदादेः कार्य्यत्वम् अनुमेयमिति भावः ॥ १२९ ॥

कार्य्यत्वे साधकान्तरमपि दर्शयन् सूत्रान्तरमवतारयितुमाह, हेत्वन्तरमिति ।—परिमितत्वादिति—अवच्छिन्नपरिमाणवत्त्वात् अपकर्षाश्रयपरिमाणवत्त्वात् वा इत्यर्थः ॥ १३० ॥

समन्वयादिति सूत्रस्यार्थमाह, प्रधानेनेति ।—सर्व्वपदार्थेषु—सर्व्वकार्य्येषु इत्यर्थः ॥१३१॥

समन्वयमेव विशदयितुं सूत्रमवतारयति, एतदेवेति ।—तथा च, कार्य्यं जनयन्तो महदादयः यावत् प्रकृत्या अनुपूरिता न भवेयुः, तावत् कार्य्यान्तरजनने न समर्था भवन्ति । अन्यथेति—एतादृशप्रकृत्यनुपूरणास्वीकारे इत्यर्थः, महदादयः सर्व्वदा कार्य्यं जनयेयुरेव इत्यर्थः ॥ १३२ ॥

व्यतिरेकमाह,—

**तद्धाने प्रकृतिः पुरुषो वा ॥ १३३ ॥**

कार्य्यम् अकार्य्यञ्च कोटिद्वयम् । कार्य्यताहाने प्रकृतौ पुरुषे वा महदादीनां प्रवेश इति ॥ १३३ ॥

उभयकोटिविनिर्मुक्ता एव महदादयो भविष्यन्ति, इत्यत आह,—

**तयोरन्यत्वे तुच्छत्वम् ॥ १३४ ॥**

तयोः,—कार्य्याकार्य्ययोः, अन्यत्वे महदादीनां तुच्छरूपत्वम्—अभावरूपत्वम् ॥ १३४ ॥

किमर्थं महदादयः कार्य्यत्वेन प्रकृतेः लिङ्गम् ? अविनाभावात् एव लिङ्गं भविष्यन्ति, इत्यत आह,—

**कार्य्यात् कारणानुमानं तत्साहित्यात् ॥ १३५ ॥**

भवति एव, यत्र कारणरूपं कार्य्ये न दृश्यते, यथा चन्द्रोदयात् समुद्रवृद्ध्यनुमानम् । अत्र तु प्रधानरूपस्य महदादौ दर्शनात् कार्य्यात् कारणानुमानम् एव । तत्साहित्यात्—प्रकृतिरूपस्य महदादौ दर्शनात् ॥ १३५ ॥

---

तदेतत् महदादीनां विलक्षणकार्य्यकारित्वम् एव प्रकृतिपुरुषयोर्वैलक्षण्यं, तदेतत् दर्शयन् सूत्रमवतारयति, व्यतिरेकमिति ।—कोटिद्वयं—भागद्वयम् ॥ १३३ ॥

महदादेस्तु कार्य्यकारणात्मकत्वमेव इत्याशङ्कामपनेतुं सूत्रमवतारयति, उभयेति ।—तथा च, परिणामिभावपदार्थस्य कार्य्ये कारणे वा प्रवेश एव, नत्वन्या गतिरस्ति इति भावः ॥ १३४ ॥

महदादीनां विनाऽपि प्रकृतिकार्य्यत्वं प्रकृत्यविनाभावादेव तेषां प्रकृत्यनुमापकत्वं कुतो नाङ्गीक्रियते ? इत्याशङ्कायां समाधानसूत्रमवतारयन्नाह, किमर्थमिति ।—तथा च, योऽयमविनाभावः भवद्भिः प्रदर्शितः, सः निमित्तनैमित्तिकभावेऽपि अव्याहत एव, परन्तु तत्र निमित्तनैमित्तिकभावे नैमित्तिकेषु कार्य्येषु निमित्तकारणानां गुणाः न दृश्यन्ते । अत्र तु त्रिगुणत्वादीनां प्रधानधर्माणां कार्य्येषु महदादिषु यावत्

एवञ्च महत्तत्त्वम् एव जगत्कारणम् अस्तु, किं प्रधानेन ? इत्यत आह,—

**अव्यक्तं त्रिगुणाल्लिङ्गात् ॥ १३६ ॥**

त्रिगुणात् लिङ्गात् लयं गच्छति इति महत्तत्त्वात् प्रधानम् अनुमातव्यम् । महत्तत्त्वञ्च अध्यवसायरूपं व्यक्तं विनाशि प्रत्यक्षसिद्धम् । तेन लिङ्गानुमानम् ॥ १३६ ॥

तथाऽपि अन्यत् एव कारणं भविष्यति, किं प्रकृत्या ? इत्यत आह,—

**तत्कार्य्यतस्तत्सिद्धेर्नापलापः ॥ १३७ ॥**

तत्कारणं कार्य्यम् ? अकार्य्यं वा ? कार्य्यत्वे तत्कारणस्य अपि तथात्वे सति अनवस्था । मूलकार्य्यत्वे तदेव सा इति । तत्कार्य्यतः इति—प्रकृतिकार्य्यतः प्रकृतिसिद्धेः न अपलापः ॥ १३७ ॥

भवतु प्रकृतिसिद्धिः, पुरुषसिद्धिस्तु न स्यात् एव, न हि तस्य कार्य्यम् अस्ति ? इत्यत आह,—

---

सत्त्वमुपलब्धतया निमित्तनैमित्तिकभावविलक्षणः कश्चन कार्य्यकारणभावः उपादानोपादेयभावरूपः अकामेनापि अङ्गीकार्य्यः इति हृत्तिकृतामाशयः इति ध्येयम ॥ १२५ ॥

महत्तत्त्वस्य अव्यक्तमूलकत्वं साधयितुं सूत्रमवतारयति—एवमिति । लिङ्गशब्दस्य व्युत्पत्तिमाह, लयं गच्छतीति—तथा च, महत्तत्त्वस्य कार्य्यत्वेन तस्यापि मूलं किञ्चित् अस्ति, यदेव च तन्मूलं, तदेवास्माकं प्रधानमिति भावः । लिङ्गानुमानमिति—लिङ्गि—प्रधानं, तस्य लिङ्गं—कार्य्यरूपं ज्ञापकम् अस्य अस्ति इति व्युत्पत्त्या अवसेयम ॥१२६॥

प्रधानसिद्धौ युक्त्यन्तरदर्शनाय सूत्रमवतारयति, तथाऽपीति ।—सूत्रे अपलाप इत्यस्य प्रकृतेः इत्यध्याहार्य्यपदेनान्वयः । मूलकार्य्यत्वे इति—कार्य्यत्वाभाववत्त्वे सति कारणत्वमिति तदर्थः । सा—प्रकृतिः ॥ १२७ ॥

प्रकृतिं प्रसाध्य पुरुषं साधयितुं सूत्रमवतारयति, भवत्विति ।—आस्तिकदार्शनिक-

**सामान्येन विवादाभावात्, धर्मवत्, न तत्साधनम् ॥ १३८ ॥**

सामान्येन तावत् आत्मनि विवादः नास्ति, विशेषे हि विवादः "अनेकः एकः व्यापकः अव्यापकः" इत्यादिः । यथा सर्वस्मिन् दर्शने धर्मः इति अविवादः, धर्मविशेषे हि विप्रतिपत्तिः । न तत्साधनं—न तत्र कार्य्यकारणभावः साधनम् । अन्यत् साधनं वक्ष्यामि इति अभिसन्धिः ॥ १३८ ॥

देहेन्द्रियादय एव आत्मानः, किम् अन्यकल्पनया ? इत्यत आह,—

**शरीरादिव्यतिरिक्तः पुमान् ॥ १३९ ॥**

व्यक्तम् ॥ १३९ ॥

अत्र न्यायमाह,—

**संहतपरार्थत्वात् ॥ १४० ॥**

यत् संहतं, तत् असंहतपरार्थम् । संहतपरार्थत्वे अनवस्था स्यात् । संहतत्वञ्च गुणानाम् अन्योऽन्यमिथुनभावेन कार्य्यकरणम । अथवा द्रवकठिनता संहतत्वम् ; तच्च प्रकृत्यादौ

---

भावसिद्धतया आत्मनः तत्सद्भावे नास्त्यस्माकं विप्रतिपत्तिः इति सामान्यतः तत्साधक-प्रमाणोपन्यासः निरर्थकः । अयमत्राभिप्रायः,—भोक्तरि अहं-पदार्थे नास्ति कस्यापि विवादः, तस्य तु देहादिव्यतिरिक्तत्वे नित्यत्वे च चास्ति विप्रतिपत्तिः, तन्निरूपणाय चास्ति विचारापेक्षा, तदर्थन्तु आग्रिमसूत्रावतारणम ॥ १३८ ॥

तत्र चात्मनः देहेन्द्रियाद्यात्मकत्वं मन्यमानानां चार्वाकाणां मतं निरसितुं सूत्रमवतारयति—देहेन्द्रियादय इति ॥ १३९ ॥

ननु प्रतिज्ञामात्रेण चात्मनः शरीरादिव्यतिरिक्तत्वं न सिध्यति इत्यत चाह, चत्रेति ।—चत्र आरम्भकसंयोगवत्त्वमेव संहतत्वं ग्राह्यम् । स चायं संयोगः साङ्ख्यनये चवयवावयविनोरभेदाभ्युपगमेन प्रकृति-तत्कार्य्यसाधारणो ज्ञेयः । तत्रेयम् चनुमानरीतिः,—विवादास्पदं प्रकृतिमहदादिकं परार्थं—स्वेतरस्य भोगापवर्ग-फलकमिति यावत्, चारम्भकसंयोगवत्त्वात् शय्याऽऽसनादिवत् । एतदेव

तिरोभूतम् अस्ति, अन्यथा तत्कार्य्येषु संहततया अदर्शन-प्रसङ्गात् ॥ १४० ॥

एतदेव स्पष्टयति,—

**त्रिगुणादिविपर्य्ययात् ॥ १४१ ॥**

पुरुषे त्रिगुणादिविपर्य्ययात् तदर्शनात्। आदिशब्दात् अन्येषां प्रकृतिधर्माणाम् अपि अदर्शनात् इति ॥ १४१ ॥

न्यायान्तरमाह,—

**अधिष्ठानाच्चेति ॥ १४२ ॥**

चेतनो हि अधिष्ठाता भवति, प्रकृतिश्च जड़ा इत्यर्थः ॥ १४२ ॥

युक्त्यन्तरमाह,—

**भोक्तृभावात् ॥ १४३ ॥**

भोग्या प्रकृतिः, भोक्ता पुरुषः। यद्यपि कूटस्थत्वात् आत्मनः भोक्तृत्वं नास्ति, तथाऽपि बुद्धिच्छायापत्त्या इति उक्तम् ॥ १४३ ॥

---

संहतत्वं गुणानामन्योऽन्यमिथुनभावेन कार्य्यकरणम इति वृत्तिकारोऽप्याह। प्रकारान्तरेण संहतत्वं निरूपयति, अथवेति।—द्रवकाठिनतेति—द्रवत्वं काठिनत्वञ्चेत्यर्थः। प्रकृत्यादेः प्रकृतेः शान्तघोरमूढ़ात्मकतया तत्र द्रवकाठिनतामहत्वं नास्ति प्रमाणम इत्यत आह—तत्रेति। विपक्षे बाधकमाह—अन्यथेति ॥ १४० ॥

तदेतन्मतं स्पष्टयितुं सूत्रमवतारयति, एतदेवेति।—सूत्रे त्रिगुणपदं त्रैगुण्यपरं ज्ञेयम। तथा च, पुरुषे त्रैगुण्यादिरूपप्रकृतिधर्माभावदर्शनात् तस्य असंहतत्वम् अनुमेयमित्यर्थः ॥ १४१ ॥

युक्त्यन्तरप्रदर्शनपरं सूत्रमवतारयति, न्यायान्तरमिति।—अधिष्ठातेति—संयोग-विशेषेण परिणामहेतुत्वमेवात्र अधिष्ठातृत्वं ग्राह्यम ॥ १४२ ॥

असंहतपुरुषाङ्गीकारे युक्त्यन्तरं प्रदर्शयितुं सूत्रमवतारयति—युक्त्यन्तरमिति। नन्वात्मनः भोक्तृत्वे श्रुत्यवगतं कूटस्थत्वं व्याहन्येत ? इत्याशङ्कते, यद्यपीति।—स्वरूपतः

मोक्षार्थं प्रवृत्तिः, सा किमात्मनः ? प्रकृतेः वा ? इत्यत आह,—

**कैवल्यार्थं प्रवृत्तेः ॥ १४४ ॥**

त्रिगुणस्वभावत्वात् प्रकृतेः न स्वभावप्रच्यवः, अनित्यत्व-प्रसङ्गाच्च । यस्य औपाधिकाः गुणाः, तस्य कैवल्यं सम्भवति, स च आत्मा इति ॥ १४४ ॥

स किंरूपः ? इत्यत आह,—

**जडप्रकाशायोगात् प्रकाशः ॥ १४५ ॥**

जडो न प्रकाशते इति सिद्धम् । यदि आत्मा अपि जडः स्यात्, तस्य अपि अन्येन प्रकाशेन भवितव्यम् । लाघवाच्च आत्मा एव प्रकाशरूपोऽस्तु ? श्रुतिश्च—"येनेदं सर्वं विजानाति तं केन विजानीयात् विज्ञातारम् ? अरे ! केन विजानीयात् ?" इति (बृह० उप० २ अध्या० ४ ब्रा० १४ मन्त्रः) । जडोऽपि आत्मा अस्तु चिद्धर्मा ? तेन जगत् प्रकाशयति ॥ १४५ ॥

---

तत्र भोगाभावेऽपि प्रतिबिम्बरूपेण भोगः सम्भवति इति प्रागेव प्रदर्शितमिति । उत्तरयति—तथाऽपीति ॥१४३॥

मोक्षस्वरूपं निरूपयितुं सूत्रमवतारयति, मोक्षार्थमिति ।—सा—प्रवृत्तिरित्यर्थः । तथा च, प्रकृतिप्रवृत्तिं प्रति पुरुषभोगापवर्गयोरेव प्रयोजकत्वम । सा च प्रवृत्तिः प्रकृतेः स्वभाव एव, न चास्मात् स्वभावात् कदाचिदपि प्रकृतिप्रच्युतिः सम्भवति, स्वभावनाशे वस्तुविनाशध्रौव्यात् । तदेवाह—अनित्यत्वप्रसङ्गादिति । गुणा इति ।—अत्र गुणपदं भोगपरं ज्ञेयम । तथा च, पुरुषस्य कैवल्ये स्वतःसिद्धेऽपि अविवेक-प्रयुक्तौपाधिकभोगकवलिततया न सर्वदा प्रकाशः, भोगानवृत्तौ तु तन्निवृत्तेर्जन्यतया तदुपलक्षितकैवल्यस्यापि योगक्षेमसाधारणं जन्यत्वम् इति मोक्षस्य कार्य्यत्वोक्तिः, तदर्थं प्रयत्नस्य उपपद्यते एवेति ध्येयम ॥१४४॥

पुरुषस्य तात्त्विकं स्वरूपं निरूपयितुं सूत्रमवतारयति—स किंरूपः ? इति । आत्मनः स्वतः-प्रकाशरूपत्वे युक्तिमवतारयन्नाह, यद्यात्मेति ।—लाघवादिति—प्रकाशस्य कार्य्यत्वे नानाकारणध्वंसादिकल्पनागौरवमपेक्ष्य नित्यैकप्रकाशस्वीकारे लाघवसद्भावादित्यर्थः ॥ १४५ ॥

न तु स चिद्रूप इत्यत आह,—

**निर्गुणत्वान्न चिद्धर्मा ॥ १४६ ॥**

यदि आत्मनः धर्मयोगः स्यात्, परिणामित्वं स्यात्, ततश्च अनिर्मोक्ष इति ॥ १४६ ॥

अत्र श्रुतिविरोधमाह,—

**श्रुत्या सिद्धस्य नापलापः, तत्प्रत्यक्षबाधात् ॥ १४७ ॥**

“असङ्गो ह्ययं पुरुषः” [ बृह० उप० ४ अध्या० ३ ब्रा० १५ मन्त्रः ] इत्यादिश्रुतिः। गुणयोगे सा बाधिता स्यात् ॥ १४७॥

दूषणान्तरमाह,—

**सुषुप्त्याद्यसाक्षित्वम् ॥ १४८ ॥**

यदि आत्मा जडः स्यात्, सुषुप्त्यादौ असाक्षित्वम् अज्ञातृत्वं स्यात्। न च एवं, “सुखम् अहम् अस्वाप्सम्” इति प्रतिभासनात्। आदिशब्दात् स्वप्नग्रहणम्।

एक एव आत्मा इति वेदान्तिनः। तथा च,—

“नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः स भिद्यते शक्त्या मायया न स्वभावतः” ॥ १४८ ॥

---

आत्मनः चैतन्यधर्मकत्वं कादाचित्कम् इतिवादिनां मतं दूषयितुं सूत्रमवतारयति, न त्विति।—आत्मनो जन्यधर्मवत्त्वे निर्गुणत्वादि नोपपद्यते इति सूत्रतात्पर्य्यम् ॥ १४६ ॥

निर्गुणत्वे च नास्ति प्रमाणम् इत्याशङ्कायां समाधानसूत्रमवतारयति—अत्रेति ॥ १४७ ॥

आत्मनो जडत्वे दूषणान्तरं प्रदर्शयितुं सूत्रमवतारयति, दूषणान्तरमिति।—न चैवमिति—आत्मनोऽज्ञातृत्वं कदाचिदपि न सम्भवतीत्यर्थः। सुषुप्तिरत्र द्विविधा ग्राह्या, अर्द्धलय समग्रलयभेदात्। तत्र अर्द्धलयात्सुषुप्तौ “सुखमहमस्वाप्सम्” इति प्रतिभासः। समग्रलये तु “न किञ्चिदवेदिषम्” इत्येवमेव प्रतिभासः ग्राह्यः ॥ १४८ ॥

अत्राह,—

**जन्मादिव्यवस्थातः पुरुषबहुत्वम् ॥१४९॥**

यदि एकः आत्मा, एकस्मिन् जायमाने सर्वे जायेरन्॥१४९॥

परमतमाशङ्कते,—

**उपाधिभेदेऽप्येकस्य नानायोगः, आकाशस्येव घटादिभिः ॥ १५० ॥**

यथा एकम् आकाशं घटाद्युपाधिभेदात् घटे नष्टे "घटाकाशं नष्टम्" इति व्यपदिश्यते, तथा एकात्मपक्षेऽपि देहावच्छेदात् तन्नाशे "आत्मा नष्टः" इति व्यपदेशमात्रं नानात्मपक्षेऽपि ; अन्यथा आत्मनः नित्यत्वात् कथं जन्ममरणव्यवस्था ? इति ॥ १५० ॥

समाधानमाह,—

**उपाधिर्भिद्यते, न तु तद्वान् ॥ १५१ ॥**

उपाधिः भिद्यते । न च अन्यनाशात् अन्यत्र नाशव्यवहारः, अतिप्रसङ्गात् । एकात्मपक्षे च व्यक्तः एव विरुद्धधर्माध्यासः, एकस्य बन्धमोक्षाभावात् । आकाशस्य तु धूमादियोगायोगौ अविरुद्धौ, संयोगस्य अव्याप्यवृत्तित्वात् ॥ १५१ ॥

लाघवात् आत्मैक्यमिति वेदान्तिनः, तन्मतं दूषयितुं सूत्रमवतारयति, अत्राहेति ।—अपूर्वदेहेन्द्रियसङ्घातसंयोगः जन्म, तद्वियोगश्च मरणं, तथा च, जन्ममरणसुखदुःखबन्धमोक्षादिव्यवस्थातः सूत्रोक्तायाः हेतोः पुरुषबहुत्वं सिध्यति, "पुण्यः पुण्येन,... पापः पापेन" [ बृह० उप० ४ अध्या० ४ ब्रा० ५ मन्त्रः ] इत्यादिश्रुतौ जन्मव्यवस्था दृष्टा, "ये तद्विदुरमृतास्ते भवन्ति, अथेतरे दुःखमेवापि यन्ति" [ बृह० उप० ४ अध्या० ४ ब्रा० १४ मन्त्रः ] इत्यादि श्रुतौ बन्धमोक्षव्यवस्था द्रष्टव्या ॥ १४९ ॥

आशङ्कासूत्रं परमतानुसारेणावतारयति, परमतमिति ।—तन्नाशे—देहनाशे ॥ १५० ॥

अत्र समाधानसूत्रमवतारयन्नाह—समाधानमिति । उपाधिभेदमात्रमादाय

एतेन किं स्यात्? इत्यत आह,—

**एवमेकत्वेन परिवर्त्तमानस्य न विरुद्धधर्माध्यासः ॥ १५२ ॥**

न विरुद्धधर्माध्यासो भवति ॥ १५२ ॥

अन्यधर्मस्य अपि अन्यत्र आरोपः दृष्टः, यथा प्रकृतेः कर्त्तृत्वं पुरुषेऽन्यत्र इत्यत आह,—

**अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिः, एकत्वात् ॥ १५३ ॥**

पुरुषकर्त्तृत्वं भ्रान्तम्; अत्र पुरुषाकर्त्तृत्वस्य सत्यत्वात्, आरोपस्य असत्यत्वात्। न च सत्यासत्ययोः सम्बन्धः तात्त्विको भवति। असङ्गित्वात् आत्मनः न जन्ममरणादि सम्भवति ॥ १५३ ॥

एवञ्च श्रुतिविरोधः स्यात्। तथा च "एकमेवाद्वितीयं ब्रह्म" [छान्दो० उप० ६ अध्या० २ खण्ड० १ मन्त्रः]। "नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥" [बृह० उप० ४ अध्या० ४ ब्रा० १९ मन्त्रः]।

---

जन्मादिव्यवस्था नोपपद्यते इत्याह—न चेति। तदेव प्रपञ्चयन्नाह—एकात्मपक्षे इति ॥ १५१ ॥

प्रकृतमुपसंहरन् सूत्रमवतारयति, एतेनेति ।—एकत्वेन परिवर्त्तमानस्य—सर्वतो वर्त्तमानस्य इत्यर्थः। विरुद्धाः,—सुखदुःखादिरूपाः, ये धर्माः तेषाम् अध्यासः,—तदाप्राप्तिः, पुरुषबहुत्वे सति न भवितुमर्हति इत्यर्थः॥ १५२ ॥

नन्वात्मनः निर्धर्मत्वात् सुखादीनां बुद्ध्यादिधर्मत्वाच्च कथमितरेतरविनिमयेन संशय उपपद्यते? इत्यतः समाधानसूत्रमवतारयति, अन्यधर्मस्येति ।—तथा च, नायं धर्मविनिमयो वास्तवः, परन्तु अविवेकप्रयुक्त औपाधिको जपालौहित्यमिव स्फटिकादौ; तथा च, आरोप्यस्य असत्यत्वमेव प्रकृते समायाति इत्याशयेनाह—पुरुषकर्त्तृत्वमिति ॥ १५३ ॥

अत आह,—

**नाद्वैतश्रुतिविरोधः, जातिपरत्वात् ॥ १५४ ॥**

व्याख्यातम् ॥ १५४ ॥

ननु अनेकात्मवादिनोऽपि एकस्य आत्मनो बन्धमोक्षौ विरुद्धौ ? इत्यत्र आह,—

**विदितबन्धकारणस्य दृष्ट्या तद्रूपम् ॥ १५५ ॥**

विदितं बन्धकारणं प्रकृतिपुरुषविवेकादर्शनं यस्य तस्य, दृष्ट्या—विवेकज्ञानेन, तद्रूपं—कैवल्यरूपम् ॥ १५५ ॥

विवेकादर्शननिमित्तः बन्धो न तात्त्विकः, दर्शनात् अदर्शनं निवर्त्तते इति युक्तिः । एवञ्च एकात्मपक्षे एव न्याय्यं पश्यामः, न नानात्मपक्षे, इत्यत्र आह,—

**नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः ॥ १५६ ॥**

अन्धो न पश्यति इति चक्षुष्मान् अपि किं न उपलभते ? नानात्मवादिनाम् अनेके न्यायाः सन्ति इत्यर्थः ॥ १५६ ॥

इतोऽपि नानात्मान इत्याह,—

**वामदेवादिर्मुक्तः, नाद्वैतम् ॥ १५७ ॥**

पुराणादौ श्रुतं "वामदेवः मुक्तः, शुकः मुक्तः" इत्यादि ।

वास्तवात्मनानात्वे अद्वैतश्रुतिविरोधमाशङ्क्य समाधानसूत्रमवतारयन्नाह—एवञ्चेति ॥ १५४ ॥

अनेकात्मवादपक्षे दोषं बध्यमानं निराकर्त्तुं सूत्रमवतारयन्नाह—नन्विति ॥ १५५ ॥

फलितमाह—विवेकेति । एकात्मवादी पुनः शङ्कते—एवमिति । तामिमामाशङ्कां निराकर्त्तुं सूत्रमवतारयति—अत्राहेति । सूत्रतात्पर्य्यमाह—नानात्मेति ॥ १५६ ॥

तेषु न्यायेषु कतिचित् दर्शयन् सूत्रमवतारयति, इतोऽपीति ।—तथा च, एकात्म-

यदि एक एव आत्मा, एकमुक्तौ सर्वमुक्तिः भेदश्रुतिबाधः स्यात् ॥ १५७ ॥

नानात्मपक्षे, अनादौ संसारे कदाऽपि कोऽपि मुच्यते इति क्रमेण सर्वमुक्तौ सर्वशून्यता स्यात्। एकात्मपक्षे तु उपाधिविगम एव मोक्षः, इत्यत आह,—

**अनादावद्य यावदभावाद्भविष्यदप्येवम् ॥ १५८ ॥**

अनादौ संसारे अद्य यावत् शून्यतायाः अदर्शनात् भविष्यति मुक्तिः इति पक्षे नास्ति प्रमाणम् ॥ १५८ ॥

समाधानान्तरम् आह,—

**इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥**

अनन्तत्वात् आत्मनां क्रमेण मुक्तिरपि स्यात्, संसारोच्छेदोऽपि न स्यात्। इदानीमिव सर्वत्र भविष्यत्कालेऽपि मुक्तिः भविष्यति इति न अत्यन्तोच्छेदः स्यात्, प्रवाहनित्यत्वात्। उपाधिविगमो मोक्ष इति पक्षेऽपि सर्वशून्यताप्रसङ्गः इति तुल्यः अनुयोगः। यथा नानात्मनां क्रमेण मुक्तौ सर्वोच्छेदः, तथा सर्वकर्मोच्छेदे सर्वोपाधिनाशात् जगत् शून्यं स्यात्। अथ उपाधीनाम् अनन्तत्वात् न शून्यता, नानात्मपक्षेऽपि तुल्यत्वम्। तथा च—

पक्षे 'वामदेवो मुक्तः' 'शुको मुक्तः' इत्यादि व्यपदेशः न सङ्गच्छते इति। अतः तदेव प्रपञ्चयन्नाह—यदीत्येकमेवेति ॥ १५७ ॥

नानात्मपक्षे क्रमेण सर्वमुक्तौ संसारोच्छेदः, एकात्मपक्षे उपाधिविगममात्रमिति एकात्मपक्ष एव श्रेयान् अस्तु? इति शङ्कासमाधानाय सूत्रमवतारयति, नानात्मपक्षे इति।—भविष्यति मुक्तिरित्यत्र सर्वेषामिति शेषः ॥ १५८ ॥

उक्तार्थे समाधानान्तरं प्रदर्शयितुं सूत्रमवतारयति, समाधानेति।—तथा च, आत्मनामनन्तत्वादेव क्रमेण मुक्तिस्वीकारेऽपि संसारात्यन्तोच्छेदः नाशङ्कनीय इत्याह—अनन्तत्वादिति। एकात्मपक्षेऽपि अयं दोष एव इति दर्शयन्नाह—उपाधि-

"अत एव हि विद्वत्सु मुच्यमानेषु सन्ततम् ।
ब्रह्माण्डजीवलोकानामनन्तत्वादशून्यता" ॥ १५९ ॥

किम् आत्मा बद्धः ? मुक्तः वा ? बद्धत्वे स्वरूपस्य अप्रच्यवादनिर्मोक्षः, प्रच्यवे अनित्यत्वम् । मुक्तत्वे व्यर्थः ध्यानादिः, इत्यत आह,—

**व्यावृत्तोभयरूपः ॥ १६० ॥**

न बद्धः, नायं मुच्यते, किन्तु नित्यमुक्तः । अज्ञाननाशस्तु ध्यानादिना क्रियते इति ॥ १६० ॥

आत्मनः साक्षित्वम् उक्तम् । प्राप्तविवेकस्यापि साक्षित्वे अनिर्मोक्षः, इत्यत आह,—

**साक्षात् सम्बन्धात् साक्षित्वम् ॥ १६१ ॥**

अक्षम्—इन्द्रियं, तत्सम्बन्धात् साक्षित्वम् । विवेके च क्व इन्द्रियसम्बन्धः ? इति ॥ १६१ ॥

सर्वदा किंरूपः आत्मा ? इत्यत आह,—

**नित्यमुक्तत्वम् ॥ १६२ ॥**

स्पष्टम् ॥ १६२ ॥

**औदासीन्यं चेति ॥ १६३ ॥**

व्यक्तम् ॥ १६३ ॥

---

विगम इति । एवंविधे सिद्धान्ते बद्धसम्मतिं सूचयन् कारिकामवतारयति—तथा चेति ॥ १५९ ॥

आत्मनः स्वरूपप्रदर्शनाय तस्य बद्धमुक्तत्वविकल्पेन सम्भाव्यमानाम् आपत्तिं परिहर्त्तुं सूत्रमवतारयति—किमात्मेति । तथा च, नित्यमुक्तत्वमेव आत्मनः स्वरूपमित्याह—किन्त्विति ॥ १६० ॥

यदात्मनः साक्षित्वं तदपीन्द्रियद्वारकमिति दर्शयितुं सूत्रमवतारयति, आत्मन इति ।—तथा च, साक्षित्वमस्य औपाधिकं विज्ञेयमिति भावः ॥ १६१ ॥

आत्मनः स्वरूपप्रदर्शनाय सूत्रद्वयमवतारयति—सर्वदेति ॥ १६२ । १६३ ॥

आत्मनः कर्तृत्वं श्रूयते, तत्कथम् ? इत्यत आह,—

**उपरागात् कर्तृत्वं, चित्सान्निध्यात् चित्सान्निध्यात् ॥ १६४ ॥**

चित्सान्निध्येन प्रकृत्युपरागादात्मनः कर्तृत्वं कर्तृत्वाभिमानः । चित्सान्निध्यात् इति वीप्सा परिसमाप्तौ, श्रुतौ तथा दृष्टत्वात् इति ॥ १६४ ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तौ विषयाध्यायः प्रथमः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

---

अथ विषयनिरूपणानन्तरं प्रधानकार्य्यनिरूपणार्थं द्वितीयाध्यायारम्भः ।

**विमुक्तविमोक्षार्थं स्वार्थं वा प्रधानस्य ॥ १ ॥**

स्वभावविमुक्तः आत्मा । तस्याभिमानिकबन्धविमोक्षार्थं

आत्मनः कर्तृत्वं श्रुतिन्यायसिद्धं कथमुपपद्यते ? इत्याशङ्कायां समाधानसूत्रमवतारयन्नाह, आत्मन इति ।—तथा च, आभिमानिकमेव दृष्टं कर्तृत्वं, न तात्त्विकम् इति न कर्तृत्वप्रतिपादकश्रुत्यादिविरोधः ॥ १६४ ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तिटीकायाम् अमलाऽऽख्यायां

विषयाध्यायः प्रथमः ।

---

तत्र तावत् प्रथमेनाध्यायेन शास्त्रस्य विषयान् सामान्यतो निरूप्य पुरुषस्यापरिणामित्वोपपादनाय प्रकृतितः सृष्टिप्रक्रियां विस्तरेण प्रतिपादयितुं द्वितीयाध्याय आरभ्यते । तत्र प्रधानप्रवृत्तौ कारणप्रदर्शनपरं प्रथमं सूत्रमवतारयति—अथेत्यादि । तदेतत् सूत्रं वृत्तिकारो व्याचष्टे—स्वभावविमुक्त इति । स्वभावतश्चेदात्मा विमुक्तः कुतस्तस्य बन्धः, यन्निवृत्तये प्रकृतिप्रवृत्तिः स्यात् ? इत्यत आह, तस्येति ।—तथा च,

प्रधानस्य प्रवृत्तिः जगत्कर्तृत्वमित्यर्थः। अयं भावः,—दुःखहृष्टौ स्वभावादेव वैराग्यात् मोक्षे वै पुरुषः प्रवर्त्तते। सुखहृष्टौ च दुःखप्रबलत्वात् सुखस्यापि दुःखपक्षनिक्षेपात् वैराग्यमेवोपजायते। तत् चतुर्विधं—यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा चेति। तथा हि, हेयं दुःखम् अनागतम् एकविंशतिप्रकारं—शरीरं, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुःखञ्चेति। तत्र शरीरं दुःखायतनत्वात् दुःखम्; इन्द्रियाणि, विषयाः, बुद्धयश्च तत्साधनभावात् दुःखं, सुखं दुःखानुषङ्गात्, दुःखं यातनापीड़ासन्तापात्मकं

---

आभिमानिकबन्धनिवारणमेव प्रधानप्रवृत्तिप्रयोजनम्। नन्वेवं कुतः दुःखहृष्टौ प्रकृतिप्रवृत्तिः? इत्यत आह, दुःखहृष्टाविति।—स्वभावादिति—दुःखस्य स्वभावात्, द्वेषविषयत्वादिति तदर्थः। पुरुषः प्रवर्त्तत इति—प्रतिबिम्बरूपेण पुरुषस्य इयं प्रवृत्तिर्ज्ञेया; तथा च, प्रवृत्तिः बुद्धिधर्मः, अनाद्यविवेकवशात् बुद्धौ प्रतिबिम्बितस्य तु पुरुषस्य औपाधिकप्रवृत्तिमत्त्वं निराबाधमेव। नन्वेवं पुरुषविमोक्षाय प्रकृतिर्दुःखमेव सृजति, सुखहृष्टौ पुनर्हेतुः कः? इत्यत आह—सुखहृष्टाविति। तदिति।—तत्—वैराग्यम्। चतुर्विधमिति।—तत्र यतमानसंज्ञा नाम—रागादयः खलु कषायाः चित्तवर्त्तिनः, तैः इन्द्रियाणि यथास्वं विषयेषु प्रवर्त्तन्ते, तत् मा प्रवर्त्तिष्यत इन्द्रियाणि तत्तद्विषयेषु इति तत्परिपाचनाय आरम्भः प्रयत्नः, सा यतमानसंज्ञा इत्युच्यते। तदारम्भे सति केचित् कषायाः पक्वाः पच्यन्ते, पक्ष्यन्ते च केचित्, तत्र पक्ष्यमाणेभ्यः पक्वानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा। इन्द्रियप्रवर्त्तनासमर्थतया पक्वानाम् औत्सुक्यमात्रेण मनसि व्यवस्थानम् एकेन्द्रियसंज्ञा। औत्सुक्यमात्रस्य अपि निवृत्तिः उपस्थितेष्वपि दिव्यादिव्यविषयेषु उपेक्षाबुद्धिः संज्ञात्रयात् परा वशीकारसंज्ञा। तत्र वर्त्तमानस्य दुःखस्य क्षणिकत्वात् स्वयमेव नाशो भविष्यति इति तन्नाशाय न प्रयत्नापेक्षा, परन्तु यदेव अनागतं तदेव हेयम् इत्याह—हेयमिति। तत्र दुःखस्य एकविंशतिप्रकारत्वं प्रपञ्चयन्नाह, शरीरमिति।—अत्र व्यासभाष्यं—"दुःखमतीतम् उपभोगेनातिवाहितं न हेयपक्षे वर्त्तते, वर्त्तमानञ्च स्वक्षणे भोगारूढमिति न तत्क्षणान्तरे हेयतामापद्यते, तस्मात् यदेवानागतं दुःखं, तदेव हेयतामापद्यते।" तत्र शरीरादीनां मुख्यानां दुःखत्वमुपपादयन्नाह, तत्र इति।—तथा च, दुःखसाधनत्वमेव

मुख्यतः एव इति। तस्य निवर्त्तकम् असाधारणं कारणम् अविद्या-तृष्णे, धर्माधर्मौ इति। अविद्या विपरीतज्ञानं, तत्संस्कारश्च विद्वद्भिः उक्तः तृष्णादीनाम् असाधारणो हेतुः। दुःखहानं च दुःखोत्पत्तिनिवृत्तिः आत्यन्तिकी। तस्य उपायः तत्त्वज्ञानम् आत्मविषयं, ततः अविद्यायाः निवृत्तेः। तथा च उक्तम्—"आत्मा वा अरे! द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [ बृह० उप० २ अध्या० ४ ब्रा० ५ मन्त्रः ]।

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येयः एते दर्शनहेतवः॥"

"तरति शोकमात्मवित्" [ छान्दो० उप० ७ अध्या० १ खण्ड० ३ मन्त्रः ] इति च। सः द्विविधः, परश्च अपरश्च इति। तथा चोक्तं—"द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च" इति। विद्यैश्वर्यविशिष्टः संसारधर्मैः ईषदपि असंस्पृष्टः परः भगवान् महेश्वरः सर्वज्ञः सकलजननात् विधाता। सः कथं ज्ञातव्यः? अनुमानात् वा? आगमात् वा? तथा हि,

एतेषां दुःखत्वमिच्छाभिप्रेतम्। सुखस्य दुःखत्वमुपपादयन्नाह, सुखमिति।—दुःखानुषङ्गात्—दुःखानान्तरीयकत्वात्। स्वानुभवजनितरागस्य परम्परया दुःखकारणत्वं वा दुःखानुबन्धः। सर्वानुभवसिद्धमुख्यदुःखस्वरूपमाह—यातनेति। अविद्यापदेन मुख्यतः विपरीतज्ञानमेव ग्राह्यम्। तादृशज्ञानजनितसंस्काराणां गौणाविद्यापदार्थत्वम्। स्वरूपं दर्शयन्नाह, दुःखोत्पत्तिनिवृत्तिरिति।—उत्पत्तिप्रवृत्तिर्नाम प्रागभावप्रतिपालनम्; तथा च, ऐकान्तिकैः दुःखोत्पत्त्या दुःखप्रागभावो निवर्त्तते, तेषामुपायानां दूरतः परिवर्जनमेव तत्प्रतिपालनम् इत्यभिप्रेतम्। सुषुप्त्यादौ कादाचित्की दुःखोत्पत्तिनिवृत्तिरस्त्येव इति तन्निरासाय आह—आत्यन्तिकीति। तस्य—दुःखहानस्य। आत्मविषयं—प्रकृति-तत्कार्येभिन्नत्वेन आत्मगोचरम्। ततः—तस्मात् तत्त्वज्ञानात्। स इति—आत्मा इत्यर्थः। अत्र यत् परस्य ब्रह्मणः वेद्यत्वमुक्तौ इतिकृता, तत् सेश्वरमताभिप्रायेणेति ज्ञेयम्। कापिलोक्ते दर्शने ईश्वरस्वरूपम् असिद्धमिति प्रागेव सूचकेन दर्शितम्। परमेश्वरानुमितौ लिङ्गं प्रदर्शयन्नाह, तथा हीति।—

विवादाध्यासितम् उपलब्धं सकारणकम्, अभूत्वा भावित्वात्, चित्रवत् इति अनुमानम् । ततः सामान्येन अवगतस्य योगेन विशेषतो ज्ञानम् । अपरस्य च जीवस्य स्वानुभवादेव सिद्धिः । तयोश्च परापरयोः विवेकज्ञानाय प्रकृतेः प्रवृत्तिः । तत्र परार्थता वक्ष्यते । स्वार्थता च, सा यं पुरुषं प्रति आत्मानं विवेकेन दर्शितवती, तं प्रति उदास्ते । अचेतनायाः प्रकृतेः कथं प्रवृत्तिः ? दृष्टमचेतनानामपि वृक्षाणां फलादिद्वारेण प्रवृत्तिः इति ॥ १ ॥

अथ के मोक्षाधिकारिणः ? इत्यत आह,—

**विरक्तस्य तत्सिद्धेः ॥ २ ॥**

तथा च श्रुतिः,—"पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय अथ भिक्षाचर्य्यं चरन्ति" इति [ बृह० उप०

---

अभूत्वेति—अनागतत्वे सति, तथा च, प्रागभावप्रतियोगित्वे सति इति फलितम् । भावित्वात्—विद्यमानत्वादित्यर्थः । जीवस्वरूपे प्रत्यक्षमेव प्रमाणम् इति दर्शयन्नाह—अपरस्येति । तयोः,—जीव परमात्मनोः । विवेकज्ञानाय—मिथः विविक्तस्वरूपप्रतिभासाय इत्यर्थः । तत्र स्वार्थप्रवृत्तिमुपपादयन्नाह, स्वार्थतेति ।—भुक्तभोगजीवान् प्रति औदासीन्यमेव प्रकृतेः स्वार्थप्रवृत्तौ हेतुरिति भावः । अचेतनाया अपि प्रकृतेः प्रवृत्तिं दृष्टान्तद्वारा समर्थयन्नाह—दृष्टमिति । अत्रेदं बोध्यम् ;—यदत्र वृत्तिकृता परापरयोरीश्वरजीवयोः विवेकज्ञानाय प्रकृतेः प्रवृत्तिरित्युक्तं, नैतत् निरीश्वरसाङ्ख्यमतेन सामञ्जस्यवत्, इत्यगत्या सेश्वरसाङ्ख्यमतानुसारेण वृत्तिग्रन्थोऽयम् इति यथा-कथञ्चित् उपपादनीय म ॥ १ ॥

प्रसङ्गात् मोक्षाधिकारिनिरूपणार्थं सूत्रमवतारयति, अथेति ।—सूत्रे तदिति पदं मोक्षपरं ज्ञेयम् । उक्तार्थे श्रुतिं प्रमाणभूतामुदाहरति, तथा चेति ।—अत्र श्रुतौ पुत्रैषणापदेन आत्मनः पारलौकिकभोगविषयिणी कामना गृह्यते । वित्तैषणा-पदन्तु ऐहिकभोगमात्रविषयिणीं कामनां प्रतिपादयति । लोकैषणापदेन यशो-विषयिणी कामना गृह्यते । व्युत्थाय—विरज्य इत्यर्थः । भिक्षाचर्य्यं—सन्न्यासं पारिव्रज्यापरपर्य्यायम् । चरन्ति—अनुतिष्ठन्ति । आत्मज्ञानार्थेन अधिकारिणा यानि

३ अध्या० ५ ब्रा० १ मन्त्रः ]। "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मनि एव आत्मानं पश्यति" [ बृह० उप० ४ अध्या० ४ ब्रा० २३ मन्त्रः ] इति च ॥ २ ॥

यदि वैराग्यात् श्रवणानन्तरं मोक्षः, तदा सर्वेषां गुरूपदेशानन्तरं मोक्षः स्यात् ? न च एवं दृश्यते इत्यत्र आह,—

**न श्रवणमात्रात् तत्सिद्धिः, अनादिवासनायाः बलवत्त्वात् ॥ ३ ॥**

न श्रवणानन्तरं मोक्षः, किन्तु अनादिवासनायाः बलवत्त्वात् क्षिप्रं मुक्तिः, अन्यत्र चिरात् इति ॥ ३ ॥

युक्त्यन्तरमाह,—

**बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥**

यथा एकस्य बहवः भृत्याः आराधनाऽपराधाभ्यां केचित् मुच्यन्ते, केचित् प्रमादभाजः, केचित् बध्यन्ते, तथा प्रकृतिः एका,

---

साधनानि अपेक्ष्यन्ते, तानि प्रदर्शयन् श्रुतिमुदाहरति, शान्त इति ।—शान्तः,—शमवान्, दान्तः,—दमवान्, उपरतः,—सन्न्यासी, तितिक्षुः,—द्वन्द्वसहिष्णुः, समाहितः,—समाधिमान् । तथा च, श्रुत्या शमदमोपरमतितिक्षासमाधीनां मिलितानां मोक्षहेतुभूतात्मतत्त्वसाक्षात्कारं प्रति हेतुत्वं प्रतिपादितं भवतीति विज्ञेयम् । श्रुतौ पश्यतीति पदं मनसा साक्षात्करोतीत्येतदर्थकम्, आत्मनः रूपादिरहितत्वेन चाक्षुषप्रत्यक्षविषयत्वासम्भवात् ॥ २ ॥

मोक्षं प्रति वैराग्यानन्तरजायमानात्मतत्त्वश्रवणं चेत् साक्षात् कारणं भवेत, तदा अविशेषेण गुरूपदेशश्रवणानन्तरं सर्वेषामेव मोक्षप्रसङ्गः ? इत्याशङ्कायां समाधानसूत्रमवतारयन्नाह, यदीति ।—तथा च, अनेकजन्मान्तरसञ्चितदेहाद्यात्मबुद्धिजनितवासनाराशिविनाशमन्तरेण न श्रौतमात्मतत्त्वज्ञानं मोक्षाय परिकल्पते इत्यतः तादृशवासनाविनाशाय सन्ततश्रवणाभ्यासद्वारेण निदिध्यासनम् अपेक्षते, यस्य तु तादृशवासना न दृढ़ा, अतीतजन्मकृतात्मतत्त्वानुशीलनेन शैथिल्यमापन्ना इति यावत, तस्य तु श्रवणमात्रादेव समुत्पन्नः आत्मसाक्षात्कारः झटिति मोक्षाय कल्पते इति सूत्रतात्पर्य्यम् । तदेव विशदयन्नाह वृत्तिकारः,—नेति ॥ ३ ॥

पुरुषाश्च बहवः इति । येषां स्पष्टं विवेकज्ञानं तेषां शीघ्रं, येषाम् उपासनामात्रं तेषां क्रमेण, अन्येषां नास्ति एव ॥ ४ ॥

कूटस्थत्वादात्मनो बन्धो नास्त्येव, इत्यत्राह,—

**प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥ ५ ॥**

प्रकृतिः यं प्रति आत्मानं दर्शितवती, तं प्रति प्रकृतेः अप्रवर्त्तनं मोक्षः । यं प्रति प्रवर्त्तते, तं प्रति पुरुषच्छायापत्तिरेव अध्यासः, न तात्त्विकः । तथा च,—

"यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः ।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥" ५ ॥

अत्र प्रमाणं दर्शयति,—

**कार्य्यतस्तत्सिद्धिः ॥ ६ ॥**

प्रकृतिकार्य्याणां महदादीनाम् अविच्छेददर्शनात् प्रकृतेः बन्धसिद्धिः ॥ ६ ॥

प्रकृतिः प्रवृत्तिस्वभावत्वात् सर्वपुरुषान् प्रवर्त्तयेत्, किं विवेकाविवेकदर्शनेन ? इत्यत्र आह,—

---

उक्ते अर्थे दृढ़प्रत्ययाधानाय युक्त्यन्तरप्रदर्शनपरं सूत्रमवतारयति, युक्त्यन्तरमिति ।— सुगमम् ॥ ४ ॥

आत्मनः बन्धस्य वास्तवत्वम् इति शङ्कानिराकरणाय सूत्रमवतारयति, कूटस्थत्वादिति ।—प्रकृतिवास्तवे इति —प्रकृतेः,—प्रधानस्य, वास्तवे—तात्त्विके, बन्धे इति पदमध्याहार्य्यम् ; तथा च, प्रकृतेरेव बन्धः तात्त्विकः इति, पुरुषस्य बन्धः आध्यासिक एव इति सूत्रतात्पर्य्यम् । पुरुषच्छायापत्तिरिति—प्रतिबिम्बरूपेण प्रकृतौ स्थितस्य पुरुषस्य प्रकृतिधर्मसम्बन्धः इत्यर्थः । तदेव प्रपञ्चयन्नाह—न तात्त्विक इति । सुगममन्यत् ॥ ५ ॥

प्रकृतेरेव बन्धः इति मतं दृढ़यितुं प्रमाणसूत्रमवतारयति—अत्रेति ॥ ६ ॥

प्रकृतेः प्रवृत्तिस्वाभाव्ये सर्वपुरुषान् प्रति सर्वदैव प्रवृत्तिः कुतो न स्यात ? इतीमामाशङ्कां निराकर्त्तुं सूत्रमवतारयति, प्रकृतिरिति ।—तथा च, बन्धमोक्षव्यव-

**चेतनोद्देशान्नियमः कण्टकमोक्षवत् ॥ ७ ॥**

यथा कण्टकं दृष्ट्वा कश्चित् कश्चित् निषेधति "अनेन वर्त्मना मा गाः" न सर्वान् प्रति, तथा अधिकारात् चेतनविशेषोद्देशात् प्रवर्त्तनं, न सर्वं प्रति इति नियमः॥ ७ ॥

न आत्मनो बन्धः इत्युक्तं, तदाह,—

**अन्ययोगेऽपि तत्सिद्धिः, नाञ्जस्येन, अयोदाहवत् ॥८॥**

प्रवर्त्तकत्वमेव प्रकृतेर्बन्धाय। प्रकृतियोगेऽपि तच्छायापत्त्या पुरुषस्य बन्धाभिमानसिद्धिः। नाञ्जस्येन—न तत्त्वतः। अयोदाहवत् इति—यथा तप्तलोहयोगात् लोहः दहतीति मन्यते, न च लोहस्य दाहकत्वं, किन्तु संयोगादग्नेरेव इति ॥ ८ ॥

---

व्यापकशास्त्रप्रामाण्यादेव प्रकृतेः कञ्चित् पुरुषं प्रति प्रवृत्तिमत्त्वं, कञ्चित् पुरुषं प्रति निवृत्तिमत्त्वम्, इत्येवंरूपः कश्चन स्वभावविशेषः श्रुतिप्रामाण्यवादिभिः सुतरामङ्गीकर्त्तव्यः इति वृत्तितात्पर्य्यम्। केचित्तु एवं वृत्तितात्पर्य्यं वर्णयन्ति, यथा—प्रकृतेः नियमः प्रवृत्त्यभावः, यथा कण्टकाभिज्ञं प्रति मोक्षः कण्टकभेदजन्यदुःखप्रयोजकत्वाभावः, प्रकृतेः अपि तथा ज्ञेयम्। प्रकृतेर्हि स्वनिष्ठदुःखमोक्षाय प्रवृत्तिर्वाच्या, स च विवेकिपुरुषसम्बन्धे सति जात एव, इदमेव हि प्रकृतेर्दुःखरूपत्वं, यत् दुःखात्मकबुद्धिप्रतिबिम्बरूपदुःखभोगस्य पुरुषनिष्ठस्य प्रयोजकत्वं, तच्च विवेकिपुरुषस्य दुःखभोगाभावे सति गतमेव इति स्वनिष्ठप्रयोजनवत्त्वाभावात् मुक्तपुरुषं प्रति न प्रवर्त्तते, किन्तु अमुक्तपुरुषं प्रत्येवेति भावः इति ॥ ७ ॥

आत्मनो बन्धस्य अतात्त्विकत्वं प्रतिपादयितुं सूत्रमवतारयति, न आत्मन इति।—प्रवर्त्तकत्वमेव प्रकृतेः बन्धाय, कारणमिति शेषः। तथा च, स्वभावादेव प्रकृतेर्बन्धः, न तु पुरुषस्य। अन्ययोगे इति सौत्रं पदं व्याचष्टे—प्रकृतियोगे इति। तच्छायापत्त्या—तत्प्रतिबिम्बितत्वेनेत्यर्थः। सौत्रमाञ्जस्यपदं व्याचष्टे—आञ्जस्येनेति। दृष्टान्तं विशदीकुर्वन्नाह—यथेति ॥ ८ ॥

किमर्थं सृष्टिः ? इत्यत्र आह,—

**रागविरागयोर्योगः सृष्टिः ॥ ९ ॥**

रागात् भुक्तिः, वैराग्यात् मुक्तिः। परमार्थतस्तु रागादपि भोगे विषयदोषदर्शनात् वैराग्यमेवेति ॥ ९ ॥

प्रथमाध्याये "सत्त्वरजस्तमः" इत्यादिसूत्रे पञ्चविंशतितत्त्वम् उक्तम्, इदानीं सप्रपञ्चं क्रममाह,—

**महदादिक्रमेण पञ्चभूतानाम् ॥१०॥**

सृष्टिः इति। क्रमं वक्ष्यति ॥ १० ॥

किं स्वार्थम् ? परार्थं वा ? इत्यत्र आह,—

**आत्मार्थत्वात् सृष्टेः नैषामात्मार्थ आरम्भः ॥११॥**

पुरुषार्थत्वात् सृष्टेः न एषां महदादीनाम् आत्मार्थे स्वार्थे आरम्भः। नित्यत्वात् प्रकृतेः स्वार्थारम्भः युक्तः, महदादीनान्तु कारणलयेन नाशात् सृष्टिमात्रम् इति ॥ ११ ॥

दिक्कालौ सिद्धौ कथं गणनायां न श्रुतौ ? इत्यत्राह,—

**दिक्कालावाकाशादिभ्यः ॥ १२ ॥**

तत्तदुपाधिभेदात् आकाशम् एव दिक्कालशब्दवाच्यं,

---

सृष्टेः प्रयोजनं निरूपयितुं सूत्रमवतारयति, किमर्थं सृष्टिः ? इति।—सूत्रे पाठक्रमः अर्थानुरोधेन परिवर्त्तनीयः ; तथा च, विरागे—अर्थात वैराग्ये सति, योगः,—स्वरूपावस्थानरूपः मुक्तिरिति यावत, रागे च सृष्टि' इति योजनीयम। तदेतदाह वृत्तिकारः, रागात् भुक्तिः, वैराग्यात मुक्तिरिति च। रागोऽपि विषयदोषदर्शनं द्वारीकृत्य परम्परया वैराग्यं प्रति हेतुरेव इति दर्शयन्नाह—परमार्थतस्त्विति ॥ ९ ॥

प्रथमाध्यायोक्तं सृष्टिक्रमं प्रपञ्चयितुं सूत्रमवतारयति—प्रथमाध्याये इति ॥ १० ॥

प्रकृतिनिष्ठस्रष्टृत्वात् महदादिनिष्ठस्रष्टृत्वस्य विशेषदर्शनाय सूत्रमवतारयति—किं स्वार्थम ? इति ॥ ११ ॥

ननु सकलव्यवहारसिद्धौ दिक्कालौ कुतः तत्त्वमध्ये न परिगणितौ ? तत्राह—

तस्मात् आकाशे अन्तर्भूतौ। आदिशब्दः सम्पातायातः। सप्तम्यर्थे पञ्चमी ॥ १२ ॥

महतो बुद्धेर्लक्षणमाह,—

**अध्यवसायो बुद्धिः ॥ १३ ॥**

एवमेवेति निश्चयोऽध्यवसायः ॥ १३ ॥

धर्मादीनां क्व अन्तर्भावः ? इत्यत्राह,—

**तत्कार्य्यं धर्मादिः ॥ १४ ॥**

धर्मज्ञानवैराग्यैश्वर्य्याणि। तत्कार्य्यत्वेन आत्मधर्मत्वं निरस्तम्। कार्य्यकारणयोरभेदादन्तर्भावो दर्शितः ॥ १४ ॥

तस्या विशेषमाह,—

**महदुपरागात् विपरीतम् ॥ १५ ॥**

अधर्माज्ञानावैराग्यानैश्वर्य्याणि। दृष्टो हि सहकारि-

दिक्कालौ इति। सूत्रस्थमादिपदं निष्प्रयोजनमित्याह, आदिशब्द इति।—वस्तुतस्तु आदिशब्देन उपाधयो गृह्यन्ते, तथा च, तत्तदुपाधिभ्यः आकाशाच्च दिक्कालव्यवहारः सिध्यति। यद्यपि उपाधिविशिष्ट आकाश एव दिक्कालौ, तथाऽपि विशिष्टस्यातिरिक्तत्वं विशेषणविशेष्योभयजन्यत्वञ्चाभ्युपेत्य सूत्रे अयं जन्यत्वव्यवहारः कथञ्चित् समर्थनीय इति ध्येयम ॥ १२ ॥

अथ महदादीन् दर्शयितुं सूत्रमवतारयति—महत इति। तत्र अध्यवसायस्य स्वरूपमाह, एवमेवेति निश्चय इति।—प्रयत्नजनकत्वेन सिद्धस्य कृतिसाध्यतानिश्चयादेरपि अध्यवसाये एवास्मिन् अन्तर्भाव इत्युन्नेयम ॥ १३ ॥

तत्र बुद्धेः धर्मान् साकल्येन प्रतिपादयितुं सूत्रमवतारयति—धर्मादीनामिति। तत्कार्य्यत्वेन—बुद्धिकार्य्यत्वेनेत्यर्थः। आत्मधर्मत्वम—आत्मपरिणामत्वम्। नन्वेवं तत्त्वाधिक्यप्रसङ्गः ? इत्यत आह—कार्य्यकारणयोरिति ॥ १४ ॥

अन्येऽपि धर्माः तत्र तत्र वर्त्तन्ते इत्येतत्प्रदर्शनपरं सूत्रमवतारयति, तस्या इति।—तस्याः,—बुद्धेः। उपरागात्—तमोऽभिभवादित्यर्थः। विपरीतम् इति स्त्रीवं पदं

भेदात् कार्य्यभेदः। यथा वेत्रवीजस्य वेत्राङ्कुरजनकत्वं, वह्नि-संयोगसहकारिणः कदलीकाण्डजनकत्वं, तथा सत्त्वसह-कारिणो महतो धर्मादिजनकत्वं, तमःसहकारिणोऽधर्मादि-जनकत्वमिति ॥ १५ ॥

क्रमप्राप्तम् अहङ्कारादिलक्षणमाह,—

**अभिमानोऽहङ्कारः ॥ १६ ॥**

अहम् इति अभिमानः ॥ १६ ॥

तस्य कार्य्यमाह,—

**एकादश पञ्चतन्मात्रं तत्कार्य्यम् ॥ १७ ॥**

एकादशेन्द्रियाणि पञ्च तन्मात्राणि षोड़शकं तत्-कार्य्यम् ॥ १७ ॥

कथमेकस्मात् कारणात् जड़प्रकाशौ भवतः ? इत्यत्राह,—

**सात्त्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्का-रात् ॥ १८ ॥**

महद्विकारात् अहङ्कारात् सात्त्विकं सत्त्वसहकृतम् एका-दशकम् एकादशेन्द्रियं प्रवर्त्तते। तमःसहकृतं तन्मात्रम् ॥ १८ ॥

इन्द्रियत्रैविध्यमाह,—

**कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥१९॥**

---

धर्मज्ञानवैराग्यैश्वर्य्यप्रतिकूलाधर्मादिचतुष्टयं प्रतिपादयितुम् उपात्तम् इति दर्शयति—अधर्मेति ॥ १५ ॥

प्रसङ्गेन बुद्धिधर्मान् निरूप्य यथाक्रमम् अहङ्कारं निरूपयितुं सूत्रमवतारयति—क्रमेति। तत्र अहङ्कारलक्षणस्याभिमानस्य आकारं दर्शयति—अहमिति ॥१६॥

अहङ्कारस्य कार्य्यं निरूपयितुं सूत्रमवतारयति, तस्येति।—सुगमम् ॥ १७ ॥

एकस्मादहङ्कारस्य कथं कार्य्यद्वैविध्यम् ? इत्याशङ्कासमाधानाय सूत्रमवतारयति—कथमिति ॥ १८ ॥

कर्म्मेन्द्रियैः वागादिभिः पञ्चभिः, बुद्धीन्द्रियैः घ्राणादिभिः पञ्चभिः सह आन्तरं मनः इति एकादशकम् इन्द्रियम् ॥ १९ ॥

भौतिकानि इन्द्रियाणि इति, तन्निषेधार्थमाह,—

**आहङ्कारिकत्वश्रुतेर्न भौतिकानि ॥ २० ॥**

तत्र च श्रुतिबाधात् इत्यर्थः ॥ २० ॥

युक्त्यन्तरमाह,—

**देवतालयश्रुतेर्नारम्भकस्य ॥ २१ ॥**

कारणे कार्य्यलयः इति स्थितम्। "आदित्यं वै चक्षुः गच्छति" इति देवे लयः श्रूयते ; तस्मात् न आरम्भकस्य न आरम्भकाभिमतस्य भूतस्य कारणत्वम् इति ॥ २१ ॥

नित्यानि इन्द्रियाणि इति केचित, तन्निराकरणार्थमाह,—

**तदुत्पत्तिः श्रूयते, विनाशदर्शनाच्च ॥ २२ ॥**

अहङ्कारात् तदुत्पत्तिः श्रूयते। उत्पन्नस्य विनाशः अपि अवश्यम्भावी इति ॥ २२ ॥

---

ज्ञानकर्मान्तरान्तरभेदात इन्द्रियवैविध्यं प्रतिपादयितुं सूत्रमवतारयति, इन्द्रियेति।—एकादशकम—एकादशप्रकारमित्यर्थः ॥ १९ ॥

इन्द्रियाणां भौतिकत्वमित्यारम्भवादिनः तन्मतं दूषयितुं सूत्रमवतारयति—भौतिकानीति। तत्र—भौतिकत्वे। श्रुतिबाधादिति।—अत्र विज्ञानभिक्षुः इन्द्रियाणाम् आहङ्कारिकत्वे प्रमाणभूता श्रुतिः कालनुप्ताऽपि आचार्य्यवाक्यात मन्वाद्यखिलस्मृतिभ्यश्च अनुमीयते। प्रत्यक्षा श्रुतिः "अहं बहु स्याम" इत्यादिः इति ॥२०॥

अत्रैवार्थे दाढ्यार्थं युक्त्यन्तरप्रदर्शनपरं सूत्रमवतारयति, युक्त्यन्तरमिति।—सूत्रार्थस्तु—देवतासु या लयश्रुतिः, सा नारम्भकस्य नोपादानविषयिणी इत्यर्थः। अनुपादानेऽपि भूतले जलबिन्दूनां लयदर्शनात, "विज्ञानघन एव एतेभ्यः भूतेभ्यः समुत्थाय" [ बृह० उप० २ अध्या० ४ ब्रा० १२ मन्त्रः ] इत्यादि श्रुतौ अनारम्भकेष्वपि भूतेषु आत्मनः लयश्रवणाच्च। इतो कारणत्वमिति—उपादानकारणत्वमिति ध्येयम ॥२१॥

नित्येन्द्रियवादिनां मतं खण्डयितुं सूत्रमवतारयति, नित्यानीति।—इन्द्रियाणामुत्पत्तिमत्त्वे "एतस्मात जायते प्राणो मनः सर्वेन्द्रियाणि च" [ मुण्ड० उप० २ मुण्ड० १ खण्ड० ३ मन्त्र. ] इत्यादिश्रुतिरेव प्रमाणम ॥ २२ ॥

चक्षुरादीनां शक्तिभेददर्शनात् ऐन्द्रियकाणि इन्द्रियाणि इति, तत् निषेधति,—

**अतीन्द्रियमिन्द्रियं, भ्रान्तानामधिष्ठाने ॥ २३ ॥**

भ्रान्तानाम् अधिष्ठाने चक्षुर्गोलकादौ इन्द्रियज्ञानम्। अन्यथा छिन्नकर्णस्य श्रवणानुपपत्तिः, पाटलचक्षुषो रूपग्रहण-प्रसङ्गः ॥ २३ ॥

एकमिन्द्रियमुपाधिभेदात् नानात्वम् इत्यत्राह,—

**शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ॥ २४ ॥**

भवतु उपाधिभेदः, शक्तिभेदस्तु अवश्यं वक्तव्यः, स च सत्य इति नानात्वमपि सत्यम् ॥ २४ ॥

एकत्वेन एव उपपत्तौ बहुत्वकल्पना गुर्वी इत्यत्राह,—

**न कल्पनाविरोधः प्रमाणदृष्टस्य ॥ २५ ॥**

स्पष्टम् ॥ २५ ॥

मनसः लक्षणमाह,—

**उभयात्मकञ्च मनः ॥ २६ ॥**

चक्षुरादीनाम् इन्द्रियाणां गोलकाद्यधिष्ठानवर्त्तित्वमेव इति नास्तिकमतमपाकर्त्तुं सूत्रमवतारयति, चक्षुरादीनामिति।—शक्तिभेददर्शनात्—गोलकाद्याश्रितत्वेनैव कार्य्यदर्शनात्। ऐन्द्रियकाणि—गोलकाद्यधिष्ठानसम्बन्धीनि, तदभिन्नानि इति वा अर्थः। भ्रान्तानां—चार्वाकादीनाम्। अधिष्ठानात्मकत्वे अनुपपत्तिं दर्शयन्नाह—छिन्नकर्णस्येति। पाटलचक्षुषः,—आरक्तनेत्रस्य इत्यर्थः। रूपग्रहणप्रसङ्ग इति—दर्शनशक्तिरहितस्यापि अक्षतगोलकस्य रूपग्रहणं स्यात् यदि गोलकमेव चक्षुर्भवेत् इत्यर्थः, अधिष्ठानस्य गोलकस्य अक्षतत्वादिति भावः ॥ २३ ॥

एकेन्द्रियवादनिराकरणाय सूत्रमवतारयति, एकमिति।—तथा च, शक्तिभेदादेव शक्तिमत्तया सिद्धानामिन्द्रियाणां मिथो भेद इति भावः ॥ २४ ॥

न च नानेन्द्रियकल्पना गुर्वी इत्याह—एकत्वेन इति ॥ २५ ॥

क्रमप्राप्तं मनसो लक्षणं प्रतिपादयितुं सूत्रमवतारयति, मनसो लक्षणमिति।—

बुद्धीन्द्रियात्मकं कर्मेन्द्रियात्मकं मनः, अधिष्ठानात् उभयप्रवृत्तेः ॥ २६ ॥

कथमेकस्मात् अहङ्कारात् अनेकानि इन्द्रियाणि? इत्यत आह,—

**गुणपरिणामभेदान्नानात्वम्, अवस्थावत् ॥ २७ ॥**

धर्माधर्मसहकारिसत्त्वादिगुणपरिणामभेदात् अनेकानि। अवस्थावत् इति—यथा एकस्य देहस्य बाल्ययौवनवार्द्धकानि इति ॥ २७ ॥

उभयेन्द्रियविषयमाह,—

**रूपादिरसमलान्त उभयोः ॥ २८ ॥**

उभयोः,—बुद्धीन्द्रियकर्मेन्द्रिययोः। बुद्धीन्द्रियस्य विषयाः रूपरसगन्धस्पर्शशब्दाः। कर्मेन्द्रियस्य विषयाः वचनविहरणादानानन्दरसमलाः। रसमलो नाम मलः, तदन्तः ॥ २८ ॥

---

अत्रायमाशयः,—मनोऽवधानं विना इन्द्रियाणां सर्वथा स्वव्यापारासमर्थत्वात् मन एव ज्ञानेन्द्रियं कर्मेन्द्रियम् इति च उच्यते, "अन्यत्रमना अभूवन्नादर्शमन्यत्रमना अभूवं नाश्रौषम्" [ वृह० उप० १ अध्या० ५ ब्रा० ३ मन्त्रः ] इत्यादि श्रुतिरपि अमुमेवार्थं द्रढ़यति इति ॥ २६ ॥

उभयात्मकम् इत्यस्यार्थं प्रकटयितुं सूत्रमवतारयति—कथमिति। सूत्रार्थस्तु, गुणानां—सत्त्वादीनां, परिणामाः,—चक्षुरादयः, तेषां भेदात् नानात्वं—नानाविधत्वं, ज्ञाने इति शेषः। चाक्षुषादिवृत्तिप्रयुक्तं चाक्षुषत्वादिकमादाय मनःपरिणामभूते एव ज्ञाने चाक्षुषं श्रौतमित्यादि व्यवहारो द्रष्टव्यः; यथैकस्मिन् एव देहे तत्तदन्नविशेषोपयोगानुपयोगप्रयुक्ताः कृशत्वपुष्टत्वादयोऽवस्थाविशेषाः, तद्वदिति भावः। उक्तार्थे दृष्टान्तमाह—यथैकस्येति ॥ २७॥

इन्द्रियं निरूप्य तेषु बुद्धीन्द्रियकर्मेन्द्रिययोः विषयं दर्शयितुं सूत्रमवतारयति, उभयेन्द्रियेति।—विज्ञानभिक्षुस्तु सूत्रमिदं व्याचष्टे—"अन्नरसानां मलः पुरीषादिः, तथा रूपरसगन्धस्पर्शशब्दाः, वक्तव्यादातव्यगन्तव्यानन्दयितव्योत्स्रष्टव्याश्च, उभयोः,—ज्ञानकर्मेन्द्रिययोः दश विषया इत्यर्थः" इति। रसमलशब्दस्य अर्थं प्रदर्शयितुमाह—रसमलो नामेति ॥२८॥

आत्मेन्द्रिययोः वैधर्म्यमाह,—

**द्रष्टृत्वादिरात्मनः, करणत्वमिन्द्रियाणाम् ॥ २९ ॥**

व्यक्तम् ॥ २९ ॥

अन्तःकरणत्रयाणाम् अन्योऽन्यं वैधर्म्यमाह,—

**त्रयाणां स्वालक्षण्यम् ॥ ३० ॥**

महदहङ्कारमनसां स्वालक्षण्यं स्वं स्वं लक्षणं, महतः अध्यवसायः, अहङ्कारस्य अभिमानः, मनसः सङ्कल्पः इति ॥ ३० ॥

एषां साधर्म्यमाह,—

**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ ३१ ॥**

प्राणाद्याः पञ्च वायवः त्रिभिः करणैः धार्य्यन्ते ॥ ३१ ॥

करणानां वृत्तीराह,—

**क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ॥ ३२ ॥**

क्रमशश्च—मन्दालोके चौरं दृष्ट्वा इन्द्रियेण वस्तु विचार-

---

प्रसङ्गात् आत्मेन्द्रिययोः मिथो वैधर्म्यं दर्शयितुं सूत्रमवतारयति—आत्मेन्द्रिययो-रिति । द्रष्टृत्वादिरिति ।—यदि च दृक्स्वरूपत्वमेव आत्मनः इति सिद्धान्तः, तथाऽपि बुद्धिवृत्तौ प्रतिबिम्बितस्य तस्य दृक्स्वरूपस्यैवात्मनः बुद्ध्यविवेकात् द्रष्टृत्वम् औपाधिकं, न तु वास्तवम् इति ध्येयम् ॥ २९ ॥

इदानीं बुद्ध्यहङ्कारमनसां मिथो वैधर्म्यं दर्शयितुं सूत्रमवतारयति, अन्तःकर-णेति ।—त्रयाणामित्यस्य अर्थमाह—महदहङ्कारमनसामिति । स्वालक्षण्यपदं व्याचष्टे—स्वं स्वमिति । तदेव विवृणोति—महत इति ॥ ३० ॥

वैधर्म्यमुक्त्वा तेषां साधर्म्यं दर्शयितुं सूत्रमवतारयति, एषामिति ।—सूत्रे सामान्यकरणवृत्तिरिति पदे—सामान्या चासौ करणवृत्तिश्चेति कर्मधारयसमासः । अत्र करणपदेन—महदहङ्कारमनोलक्षणानि अन्तःकरणानि गृह्यन्ते । तदेतत् सूचयन्नाह वृत्तिकारः,—त्रिभिः करणैरिति ॥ ३१ ॥

इदानीं बाह्येन्द्रियाणाम् अन्तःकरणस्य च वृत्तिः युगपदयुगपद्वा ? इति निर्णयाय सूत्रमवतारयति—करणानामिति । क्रमशश्चेति ।—तथा च, वृत्तीनां सामग्रीसमव-

यति, ततः "चौरः अयम्" इति मनसा सङ्कल्पयति, ततः "धनं गृह्णाति" इति अहङ्कारेण अभिमन्यते, ततः "चौरं गृह्णामि" इति बुद्ध्या अध्यवस्यति। अक्रमशश्च—रात्रौ विद्युदालोके व्याघ्रं दृष्ट्वा झटिति अपसरति। तत्र चतुर्णाम् एकदा वृत्तिः। यद्यपि वृत्तीनामेकदा असम्भवात् तत्रापि क्रमः एव स्वीक्रियते, तथाऽपि उत्पलशतपत्रव्यतिभेदवत् अवभासनात् अक्रमः इति उक्तम् इति ॥ ३२ ॥

कति वृत्तयः ? इत्यत्र आह,—

**वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाश्च ॥ ३३ ॥**

प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः। प्रत्यक्षानुमानशब्दाः प्रमाणानि। विपर्य्ययः मिथ्याज्ञानम् अतद्रूपप्रतिष्ठम्।

---

धाने क्रमयौगपद्यविधानविवक्षयैव अयौगपद्यं यौगपद्यञ्च सम्भवति। न वयं नैयायिकवत् जातिसाङ्कर्य्यभयेन करणवृत्तीनाम् अयौगपद्यमेव इति मतमाश्रयामहे इत्यर्थः। अत्र इन्द्रियवृत्तीनां विभागः साङ्ख्यकारिकया एवं व्याख्यातः,—"शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्" ॥ आलोचनञ्च ज्ञानं, पूर्वाचार्य्यैरपि एवं व्याख्यातम्—'अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्। परं पुनस्तथा वस्तुधर्मैर्जात्यादिभिस्तथा ॥" इति। परम्—उत्तरकालीनमित्यर्थः। वस्तुधर्मैः,—द्रव्यरूपवस्तुधर्मैः, तथा जात्यादिभिः ज्ञानं सविकल्पकमित्यर्थः, तथा आलोचनाख्यमेव भवति इत्यर्थः। तथा च, निर्विकल्पक-सविकल्पकरूपं द्विविधमपि ऐन्द्रियकं ज्ञानम् आलोचनसंज्ञमेव भवति इति श्लोकतात्पर्य्यम्। केचित्तु निर्विकल्पकं ज्ञानमेव आलोचनम् इन्द्रियजन्यं भवति, सविकल्पकन्तु अन्तःकरणमात्रजन्यम् इति श्लोकतात्पर्य्यं वर्णयन्ति; तन्न रमणीयं, योगभाष्ये व्यासदेवैः विशिष्टज्ञानस्यापि ऐन्द्रियकत्वस्य व्यवस्थापितत्वात्, इन्द्रियैः विशिष्टज्ञानजनने बाधकाभावाच्च" इति द्रष्टव्यम्। सूत्रे कथितमपि वृत्तीनां यौगपद्यं वृत्तिकारो नानुमन्यमान आह, यद्यपीति।—तथा च, वृत्तिकारमते वृत्तीनां यौगपद्यप्रतीतिः शीघ्रभावित्वनिबन्धना भ्रान्तिरेवेति ज्ञेयम् ॥ ३२ ॥

सामान्यतो वृत्तिस्वरूपनिरूपणाय सूत्रमवतारयति—कतीति। क्लिष्टा इति—

विकल्पः उभयस्पृक् ज्ञानम् । निद्रा तमोऽवलम्बि ज्ञानम् । स्मृतिः अतीतज्ञानम् । क्लिष्टाः क्लेशयुक्ताः रजस्तमोमय्यः । अक्लिष्टाः सत्त्वमय्यः दग्धक्लेशाः ॥ ३३ ॥

वृत्तिनिवृत्तौ मुक्तिः इति आह,—

**तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥ ३४ ॥**

वृत्तिनिवृत्तौ क्षपिताविद्याऽस्मितारागद्वेषाभिनिवेशः स्वस्थः स्वरूपं लभते ॥ ३४ ॥

दृष्टान्तमाह,—

**कुसुमवच्च मणिः ॥ ३५ ॥**

यथा जपाकुसुमसंसर्गात् स्फटिके लौहित्यं, तदपगमात् स्फटिकः स्वरूपेण अवतिष्ठते, तथा सः अपि इति ॥ ३५ ॥

करणानां तुल्यत्वात् सर्वदा तुल्यरूपता इत्यत्राह,—

**पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ॥ ३६ ॥**

संशय इत्यर्थः । तदेव बोधयन्नाह, उभयस्पृगिति—विरुद्धकोटिद्वयावगाहीति यावत् । विज्ञानभिक्षुस्तु विकल्पपदम् अन्यथा व्याख्यातवान् । यथा—"विकल्पस्तु विशेषदर्शनकालेऽपि राहोः शिरः पुरुषस्य चैतन्यम् इत्यादिज्ञानम्" इति । योग-भाष्ये व्यासदेवेनापि विकल्पस्य एवमेव स्वरूपं वर्णितम् । अतीतज्ञानमिति—संस्कारमात्रजन्यं ज्ञानम् इत्यर्थः । तासां वृत्तीनां पुनर्द्वैविध्यमाह, क्लिष्टा अक्लिष्टा-श्चेति ।—तथा च, सत्त्वप्रधानाः वृत्तय एव अक्लिष्टाः विज्ञेयाः, तद्भिन्ना यावत्य एव वृत्तयः क्लिष्टाः ज्ञेयाः, क्लेशहेतुत्वमेवासां क्लिष्टत्वम् ॥ ३३ ॥

या एता बुद्धिवृत्तयः प्रदर्शिताः, एतदौपाधिकी एव पुरुषस्य संसारिरूपता, न स्वतः, एतन्निवृत्तौ च पुरुषः स्वरूपे अवस्थितो भवति, इत्यनयापि दिशा पुरुषस्य स्वरूपं प्रतिपादयितुं सूत्रमवतारयति, वृत्तिनिवृत्ताविति ।—सुगमम् ॥ ३४ ॥

तदेतदर्थं बुद्धिसौकर्याय दृष्टान्तं दर्शयितुं सूत्रमवतारयति—दृष्टान्तमिति । तदपगमात्—जपाकुसुमसंसर्गापगमादित्यर्थः । सोऽपि—पुरुषोऽपि ॥ ३५ ॥

करणानाम् एककारणकत्वेऽपि भोगवैचित्र्यप्रयोजकत्वं प्रतिपादयितुं सूत्रमव-

न तुल्यता, करणोद्भवानुद्भवाभ्यां विशेषात्। विशेषश्च अदृष्टोल्लासात् बलवत्तरत्वात् ॥ ३६ ॥

दृष्टान्तमाह,—

**धेनुवत् वत्साय ॥ ३७ ॥**

यथा धेनुत्वेन तुल्यत्वेऽपि या क्षीरिणी सा वत्सं पुष्णाति ॥ ३७ ॥

वाह्यान्तरभेदात् कति करणानि ? इत्यत्राह,—

**करणं त्रयोदशविधमवान्तरभेदात् ॥ ३८ ॥**

अन्तर्बुद्ध्यहङ्कारमनांसि। वाह्यानि दशेन्द्रियाणि ॥ ३८ ॥

इन्द्रियेषु कथं करणत्वम् ? इत्यत्राह,—

**इन्द्रियेषु साधकतमत्वयोगात्, कुठारवत् ॥ ३९ ॥**

---

तारयति—करणानामिति। तुल्यता—एकजातीयकार्य्यभावजनकता। करणोद्भवानुद्भवाभ्यामिति—करणानां—चक्षुरादीनाम्, उद्भवानुद्भवाभ्यां—पुरुषादृष्टप्रयुक्ततत्तद्विजातीयफलोपधानानुपधानाभ्यामित्यर्थः। अदृष्टोल्लासादिति—अदृष्टानां—सुखदुःखप्रयोजकपुरुषादृष्टविशेषाणाम्, उल्लासात्—कालादिरूपसहकारिसमवधानादित्यर्थः। बलवत्तरत्वादिति—करणानाम् ऐकरूप्येण कार्य्यजनकत्वं प्रति प्रयोजकस्य एकोपादानकत्वस्य पुरुषादृष्टस्य च इत्युभयोर्मध्ये फलवैषम्यप्रयोजकस्य पुरुषादृष्टस्य एव बलवत्तरत्वादिति भावः ॥ ३६ ॥

तमिममर्थं दृष्टान्तेन दृढीकर्त्तुं सूत्रमवतारयति—दृष्टान्तमिति। अत्र सूत्रे धेनुपदं लक्षणया धेनुप्रभवपयसि वर्त्तते; तथा च, तत्र यथा अचेतनमपि स्वयमेव स्रवति क्वचित्, क्वचिच्च न स्रवति, तत्स्रावे अस्रावे वा नान्यप्रयत्नः अपेक्ष्यते, तथा प्रकृतेऽपि ज्ञेयम्। तथा च, कदाचित् कस्यचित् करणस्य उद्भवेन कदाचित् कस्यचित् करणस्य अनुद्भवेन पुरुषभोगवैचित्र्यं विहाय नान्यदस्य कादाचित्कविभिन्नधर्मकत्वे प्रयोजकमस्तीति भावः ॥ ३७ ॥

पुनः प्रकारान्तरेण करणविभागार्थं सूत्रमवतारयति, वाह्येति।—सुगमाऽत्र वृत्तिः ॥ ३८ ॥

तदेवं सर्वेषामेव करणानां सामान्यतः करणत्वे प्राप्ते अन्तःकरणस्य मुख्यं

यथा साधकतमत्वेन कुठारे करणत्वं, तथा इन्द्रियेषु अपि इति ॥ ३९ ॥

त्रयोदशकरणानां कार्य्यमाह,—

**द्वयोः प्रधानं मनः, लोकवत् भृत्यवर्गेषु ॥४०॥**

द्वयोः बुद्धीन्द्रियकर्मेन्द्रिययोः प्रधानं मनः, तदधिष्ठानात् एव एषां प्रवृत्तेः, यथा लोके भृत्येषु स्वामी ॥ ४० ॥

युक्तिमाह,—

**अव्यभिचारात् ॥ ४१ ॥**

व्यक्तम् ॥ ४१ ॥

युक्त्यन्तरमाह,—

**तथाऽशेषसंस्काराधारत्वात् ॥ ४२ ॥**

नष्टेन्द्रियाणामपि संस्कारदर्शनात् ॥ ४२ ॥

---

करणत्वम्, अन्येषाञ्च तद्गौणमित्युपपादयितुं सूत्रमवतारयति, इन्द्रियेष्विति ।—अयमिदम् अवधेयं—फलायोगव्यवच्छिन्नस्यैव करणत्वात् प्रहारे एव छिदां प्रति मुख्यं करणत्वं, कुठारे तु प्रकृष्टसाधनत्वगुणयोगात् गौणमेव तत् ; एवं बुद्धावेव पुरुषार्थं प्रति फलायोगव्यवच्छिन्नत्वात् मुख्यमेव करणत्वम्, अन्येषु तु इन्द्रियेषु पुरुषार्थसाधक-तमत्वगुणमात्रयोगात् मुख्यमेव तत् इत्यस्ति सत्यपि करणत्वे बुद्धेः बहिरिन्द्रियाणाञ्च मुख्यगौणभेदेन वैषम्यम् इति भावः ॥ ३९ ॥

तदेवं सिद्धे विशेषे तमेव वैशद्येन उपपादयितुं सूत्रमवतारयति—त्रयोदशेति । मन इति—बुद्धीन्द्रियमित्यर्थः । तस्य प्राधान्ये हेतुमाह—तदधिष्ठानादिति । तत्र दृष्टान्तमाह—यथा लोके इति ॥ ४० ॥

अस्मिन्नर्थे युक्तिं प्रदर्शयितुं सूत्रमवतारयति, युक्तिमिति ।—अव्यभिचारादिति—पुरुषभोगरूपफलाव्यभिचारादित्यर्थः ॥ ४१ ॥

•दार्ढ्याय पुनर्युक्त्यन्तरं प्रदर्शयितुं सूत्रमवतारयति, युक्त्यन्तरमिति ।—तथा च, तत्तद्बहिरिन्द्रियजन्यानुभवादिति । संस्काराणामपि बुद्धिमात्राश्रयत्वस्यावश्यमङ्गीकरणीय-तया बहिरिन्द्रियापेक्षया बुद्धेः प्राधान्यम् अनायत्या अङ्गीकार्य्यमेव । नष्टेन्द्रियाणा-मिति—नष्टानि इन्द्रियाणि येषां तेषामित्यर्थः ॥ ४२ ॥

न्यायमाह,—

**स्मृत्याऽनुमानाच्च ॥ ४३ ॥**

इन्द्रियं विनाऽपि स्मृतिदर्शनात् मनोऽनुमीयते ॥ ४३ ॥

आत्माधारः संस्कारः इत्यत्राह,—

**सम्भवेन्न स्वतः ॥ ४४ ॥**

स्वतः आत्मनः न सम्भवेत्, कूटस्थनिर्गुणत्वात् ॥ ४४ ॥

करणत्वे तुल्ये किंनिबन्धनः गुणप्रधानभावः ? इत्यत्राह,—

**आपेक्षिको गुणप्रधानभावः, क्रिया-विशेषात् ॥ ४५ ॥**

स्पष्टम् ॥ ४५ ॥

निरभिमन्यानात् न अपरः परार्थं प्रवर्त्तते इत्यत्राह,—

**तत्कर्मार्जितत्वात्तदर्थमभिचेष्टा लोकवत् ॥ ४६ ॥**

बुद्धिप्रतिबिम्बितपुरुषकर्मार्जितत्वात् पुरुषार्थम् अभिचेष्टा प्रवर्त्तनं बुद्ध्यादीनाम्। यथा लोके, येन अर्जितः भृत्यः तत्कर्म करोति ॥ ४६ ॥

---

उक्ते अर्थे न्यायं दर्शयितुं सूत्रमवतारयति—न्यायमिति। मनोऽनुमीयते—संस्काराधारत्वेन मनोऽनुमीयते इत्यर्थः ॥ ४३ ॥

संस्काराः आत्मधर्माः इति न्यायवैशेषिकमतं दूषयितुं सूत्रमवतारयति—आत्माधार इति। आत्मनः संस्कारादिरूपजन्यधर्मानाश्रयत्वे प्रमाणमाह—कूटस्थेति ॥४४॥

सत्यप्यहङ्कारकारणकत्वे करणानां योऽयं मिथो गुणप्रधानभावः प्रदर्शितः, तत्र किं निमित्तम् ? इत्याशङ्कासमाधानाय सूत्रमवतारयति—करणत्वे इति। आपेक्षिक इति—प्राणादिकपुरुषभोगवैचित्र्यापेक्षानिमित्तक इत्यर्थः। तत्र हेतुमाह—क्रियाविशेषादिति ॥ ४५ ॥

पुरुषार्थसिद्धौ बुद्धेः स्वतः प्रवृत्तिमुपपादयितुं सूत्रमवतारयति—निरभिमन्यानादिति। पुरुषकर्मार्जितत्वादिति—पुरुषस्य उपाधिनिष्ठैः कर्मभिः मर्जितत्वादित्यर्थः ॥ ४६ ॥

सर्वत्र बुद्धेः प्राधान्यमिति आह,—

**समानकर्मयोगे बुद्धेः प्राधान्यं, लोकवल्लोकवत् ॥ ४७ ॥**

यथा लोके ग्रामाध्यक्षात् राज्याध्यक्षः श्रेष्ठः, तस्मादपि राजा इति, तथा मनः बुद्ध्यर्थं प्रवर्त्तते इति सर्वप्रधाना बुद्धिः इति। समानकर्मयोगे पुरुषार्थतुल्यक्रियायोगेऽपि सर्वेषाम् इति। लोकवत् इति वीप्सा अध्यायपरिसमाप्तौ ॥ ४७ ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तौ प्रधानकार्य्याध्यायो द्वितीयः ॥ २ ॥

---

## तृतीयोऽध्यायः ।



प्रधानकार्य्यनिरूपणानन्तरं वैराग्यार्थं तृतीयाध्यायारम्भः ।

**अविशेषात् विशेषारम्भः ॥ १ ॥**

अविशेषात् भूतसूक्ष्मात् विशेषस्य महाभूतस्य आरम्भः ॥१॥

---

तदेवं बुद्धेः प्राधान्यं सर्व्वत्र इति पक्षमुपसंहरन् सूत्रमवतारयति, सर्व्वेति।— सर्व्वेषां करणानां समानेऽपि कर्म्मसम्बन्धे उक्तप्राधान्यहेतुभिः बुद्धेरेव प्राधान्यमङ्गीकार्य्यम ; यथा लोके विवाहादिक्रियायोगसाम्येऽपि कामिन्याः वनिता स्वामिनः प्रधानं प्राधान्यप्रयोजकगुणैर्भवति, नान्या, तद्वदत्रापि ज्ञेयम ॥ ४७ ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रभाष्यटीकायाम चमलाऽऽख्यायां प्रधानकार्य्याध्यायो द्वितीयः ।

---

अतःपरं प्रधानस्य शान्तघोरमूढाख्यानि स्थूलकार्य्याणि महाभूतानि शरीरद्वयञ्च निरूपयितव्यम । ततश्च प्रसङ्गेन नानायोनिगत्यादयः तत्त्वज्ञानसाधनानुष्ठानहेतवपरवैराग्यार्थं, ततश्च परवैराग्याय ज्ञानसाधनानि अखिलानि वक्तव्यानीति अध्यायप्रारम्भः, अविशेषादिति।—न वर्त्तते विशेषः,—शान्तघोरमूढत्वादिः यस्मिन् इत्यविशेषः,—भूत-

**तस्माच्छरीरस्य ॥ २ ॥**

तस्य मांसादिमयविचारात् निर्विद्यते ॥ २ ॥

उत्पत्तिः दर्शिता, नाशः कुत ? इत्यत आह,—

**तद्वीजात् संसृतिः ॥ ३ ॥**

तस्य भूतारम्भस्य कारणात् धर्माधर्मात् संसरणं नाशः ॥३॥

भूतानाम् आरम्भकस्वभावत्वे सर्वदा आरम्भात् अनिर्मोक्षः, इत्यत्राह,—

**आ-विवेकाच्च प्रवर्त्तनमविशेषाणाम् ॥ ४ ॥**

विवेकज्ञानपर्य्यन्तम् आरम्भकस्वभावत्वं भूततन्मात्राणाम् इति ॥ ४ ॥

सूक्ष्मं, पञ्चतन्मात्रापरपर्य्यायं तस्मात् अविशेषात्, विशेषाणां—स्थूलानां, महाभूतानाम् आरम्भ इति तात्पर्य्यम्। सुखदुःखमोहाद्यात्मकता हि शान्त्यादिरूपा स्थूलभूतेष्वेव तारतम्यादिभिः अभिव्यज्यते, न सूक्ष्मेषु ; तेषां शान्तैकरूपतयैव योगिषु अभिव्यक्तेः ॥१॥

तस्मादिति।—तस्मात्—चतुर्विंशतितत्त्वात्, स्थूलसूक्ष्मशरीरद्वयस्य आरम्भ इति भावः। नन्वेवं शरीरनिरूपणं वैराग्ये कुतः उपयुज्यते ? इत्यत आह—तस्येति ॥२॥

शरीरनाशे हेतुं प्रदर्शयितुं सूत्रमवतारयति—उत्पत्तिर्दर्शितेति। सूत्रे बीजपदं धर्माधर्मपरम् इति दर्शयन्नाह—तस्येति। संसृतिपदमत्र नाशार्थकमिति दर्शयति—संसरणमिति। विज्ञानभिक्षुस्तु सूत्रमिदमन्यथा व्याचष्टे, यथा—"तस्य—शरीरस्य, बीजात्—चतुर्विंशतितत्त्वरूपात् सूक्ष्मात् हेतोः, पुरुषस्य संसृती—गतागते भवतः ; कूटस्थस्य विभुतया स्वतो गत्याद्यसम्भवादित्यर्थः। चतुर्विंशतितत्त्वे अवच्छिन्नो हि पुरुषः तेनैव उपाधिना पूर्व्वकृतकर्म्मभोगार्थं देहात् देहं संसरति—'मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्। वाचा वाचाकृतं कर्म्म कायेनैव तु कायिकम् ॥' इत्यादिस्मृतिभिः पूर्व्वसर्गीयकरणैरेव उत्सर्गतः सर्गान्तरेषु उपभोगसिद्धेः" इति ॥३॥

भूतारम्भकत्वपक्षे आपत्तिं परिहर्त्तुं सूत्रमवतारयति, भूतानामिति।—तथा च, विवेकज्ञानपर्य्यन्तं भूतसूक्ष्माणामारम्भकत्वमित्यर्थः ॥४॥

अविवेकिनं प्रति आरम्भकत्वे महाप्रलये अपि तं प्रति आरम्भकत्वं स्यात्, इति आह,—

उपभोगादितरस्य ॥ ५ ॥

अविवेकिनः उपभोगात् महाप्रलये शरीराभावात् कुतः उपभोगः ? इति न तं प्रति आरम्भकत्वम् ॥ ५ ॥

अनारम्भकत्वे तु कुतः विशेषात् अविवेकिनं प्रति पुनः आरम्भकत्वम ? इत्यत आह,—

सम्प्रति परिष्वक्तो द्वाभ्याम् ॥ ६ ॥

धर्माधर्माभ्याम। गमागमपरिष्वक्तो प्रलयेऽपि धर्माधर्मानुबद्धः आत्मा, इति तं प्रति पुनः आरम्भः। मुक्तो न तथा इति ॥ ६ ॥

नित्यत्वे तु मुक्तेः कथं पारतन्त्र्यम ? इत्यत आह,—

मातापितृजं स्थूलं प्रायशः, इतरन्न तथा ॥ ७ ॥

प्रायशः इति दृश्यत्वात्। इतरत् सूक्ष्मशरीरं न तथा, दुरूहत्वात् ॥ ७ ॥

---

आशङ्कैवार्थं आपद्यन्तरं खण्डयितुं सूत्रमवतारयति—अविवेकिनमिति। सूत्रे इतरस्य इति पदार्थमाह—अविवेकिन इति। उपभोगात् इति पदं व्याचष्टे, महाप्रलये इति।—तथा च, इतरस्य—अविवेकिनः, उपभोगात्—उपभोगसमाप्तेः, पूर्वस्य भोगप्रदकर्मणः नाश इति यावत्, प्रलयो भवतीति। भोगाभावे किमर्थं शरीरम् उत्पद्येत ? इति भावः ॥५॥

नन्वेवं सृष्टौ पुनरारम्भकत्वं कथम ? इत्याशङ्कासमाधानाय सूत्रमवतारयति—अनारम्भकत्वे इति। सूत्रे सम्प्रति इति पदं—सृष्टिकाले इत्यर्थकम। द्वाभ्यां—धर्माधर्माभ्याम। अत्र सूत्रे क्वचित् "प्राङ्मुक्तः" इति पाठो दृश्यते, तदर्थस्तु बद्ध इत्यर्थः, आङ्पूर्वस्येव परिपूर्वस्यापि बन्धनार्थत्वात्; तथा च, प्रलये सुप्तयोः धर्माधर्मयोः सृष्टिकाले फलोन्मुखयोः सतोः शरीरमारभ्यते, मुक्तौ तु धर्माधर्मयोर्नाश एवेति ज्ञेयम ॥ ६ ॥

स्थूलसूक्ष्मशरीरयोर्वैलक्षण्यमाह सूत्रे—मातापितृजमिति। दृश्यत्वादिति—तदेव

द्वयोः देहयोः कस्य भोगः? इत्यत्र आह,—

## पूर्वोत्पत्तेस्तत्कार्य्यत्वं भोगादेकस्य, नेतरस्य ॥ ८ ॥

पूर्वोत्पत्तेः सूक्ष्मशरीरस्य, भोगात् एकस्य तस्य, इतरस्य स्थूलस्य, तत्कार्य्यत्वम्। स्थूलशरीरस्य गौणः भोगः, मृतशरीरे भोगादर्शनात् ॥ ८ ॥

कतिभिः तत्त्वैः सूक्ष्मशरीरारम्भः? इत्यत्र आह,—

## सप्तदशैकं लिङ्गम् ॥ ९ ॥

सप्तदश च एकञ्च अष्टादश, तैः लिङ्गं सूक्ष्मदेहः उत्पद्यते। बुद्ध्यहङ्कारमनांसि, पञ्च सूक्ष्मभूतानि, दश इन्द्रियाणीति ॥ ९ ॥

---

दृश्यमानत्वादिति भावः। तथा च, स्थूलमपि किञ्चन शरीरं मातापितृजं न भवतीति प्रायशः इत्युक्तम ॥ ७ ॥

तदनयोर्देहयोर्मध्ये कस्य भोगः स्यात्? इत्याशङ्का समाधानसूत्रमवतारयति, द्वयोरिति।—तथा चेयं भोगव्यवस्था तयोर्देहयोः पौर्वापर्य्यनिबन्धना भविष्यति इति सूत्रतात्पर्य्यम्। एकस्य—सूक्ष्मशरीरस्य। स्थूलशरीरस्य भोगाभावे मृतेषु भोगव्यभिचार एव हेतुरिति दर्शयन्नाह—मृतशरीरे इति ॥ ८ ॥

लिङ्गशरीरनिरूपणाय सूत्रमवतारयति—कतिभिरिति। सप्तदशैकमिति सौत्रं पदं समाहारद्वन्द्वतया व्याचष्टे—सप्तदश च एकञ्चेति। फलितार्थमाह, अष्टादशेति।—वस्तुतस्तु एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदश मिलित्वा एकं लिङ्गशरीरं भवति, इत्येवमेव सूत्रतात्पर्य्यं विज्ञानभिक्षुप्रभृतिभिराचार्य्यैः व्याख्यातं साधीय इति मन्तव्यम, अन्यथा "कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः प्रयुज्यते। ससप्तदशकेनापि राशिना युज्यते च सः॥" इति मोक्षधर्मादौ लिङ्गशरीरस्य सप्तदशत्वश्रवणानुपपत्तिः। अत्र राशिशब्देन स्थूलशरीरवत् लिङ्गशरीरस्य अवयवित्वं निराकृतम, अवयविरूपेण द्रव्यान्तरकल्पनायां गौरवात्। स्थूलदेहस्य तु अवयवित्वं सार्वजनीनैकत्वादिप्रत्ययस्यान्यथानुपपत्त्या कल्प्यते इति सुधीभिरवधेयम् ॥ ९ ॥

सूक्ष्मदेहस्य सर्वत्र तुल्यत्वात् कथं पुत्तिकाहस्तिदेहानां विसदृशानां तस्मात् उत्पत्तिः ? इत्यत्राह,—

**व्यक्तिभेदः कर्मविशेषात् ॥ १० ॥**

व्यक्तम् ॥ १० ॥

यदि आत्मा अन्यः, कथं देहे अहम् इति अभिमानः ? इत्यत्राह,—

**तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः ॥ ११ ॥**

आत्माधिष्ठानाश्रये देहे सम्भोगात् आत्मवादात् देहे अहम् इति अभिमानवादः ॥ ११ ॥

अत्र दृष्टान्तमाह,—

**न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च ॥ १२ ॥**

यदि आत्मना विना देहे अहम् इति प्रत्ययः, तदा मृतदेहे अहम् इति प्रत्ययः स्यात् ? न च एवम् । यथा आवरकेण विना न छाया, भित्तिं विना न चित्रं, तथा अत्रापि ॥ १२ ॥

सूक्ष्मदेहः एव आत्मा भविष्यति, इत्यत्राह,—

**मूर्त्तत्वेऽपि न, सङ्घातयोगात् तरणिवत् ॥ १३ ॥**

---

लिङ्गशरीरस्यातिसूक्ष्मत्वात् पुत्तिकाहस्तिदेहानां विसदृशानां कथं तस्मादुत्पत्तिः ? इति शङ्कासमाधानाय सूत्रमवतारयति—सूक्ष्मदेहस्येति । व्यक्तिभेदः इति ।—व्यक्तयः,—स्थूलदेहाः । भेदः,—वैलक्षण्यम् ॥ १० ॥

आत्मनो देहाद्भिन्नत्वे देहे अहमित्यभिमानः कथं सङ्गच्छते ? इत्याशङ्कासमाधानाय सूत्रमवतारयति—यदीति । सूत्रे तदिति पदम्—आत्मपरं, तथा च, पूर्वस्मात् अहमिति वादात् उत्तरोत्तरम् अहमिति वादः । वाद इत्यभेदेन देहे अहमिति ज्ञानस्य भ्रमत्वमाह, आत्मनो देहातिरिक्तत्वात् ॥ ११ ॥

देह एव "अहं" प्रत्ययविषयोऽस्तु, तस्यैव आत्मत्वात् इति मतं दृष्टान्तोपन्यासेन निराकर्तुं सूत्रमवतारयति, अत्रेति । —सुगमम् ॥ १२ ॥

सूक्ष्मदेहस्य आत्मत्वं निराकर्तुं सूत्रमवतारयति—सूक्ष्मदेह इति । मूर्त्तत्वेऽपि—

सङ्घातत्वात् मूर्त्तत्वात् परार्थः। तरणिवत् इति—यथा प्रकाशत्वेऽपि मूर्त्तत्वात् न आदित्यस्य आत्मत्वम्॥ १३ ॥

मनः आत्मा भविष्यति, इत्यत्राह,—

अणुपरिमाणं, तत्कृतिश्रुतेः ॥ १४ ॥

मनः अणुपरिमाणं, तत्क्रियायां श्रुतिदर्शनात्। अथ व्यापकस्य निरुपाधेः न इन्द्रियत्वम् इति उपाधिः वक्तव्यः। यदि कर्णशष्कुलीवत् नियतावयवस्य उपाधित्वं, तदा तावन्मात्रे वृत्तिलाभः, न अन्यत्र, इति श्रोत्रवत् प्रसज्येत। ततश्च देहमात्रम् उपाधिः वक्तव्यः। तथा च, तदवच्छेदेन वृत्तिलाभे 'शिरसि मे वेदना' 'पादे मे सुखम्' इति अव्याप्यवृत्तित्व-

सक्रियत्वेऽपि इत्यर्थः। अनेन सूक्ष्मदेहं प्रमाणमुक्तं, तथा च, सूक्ष्मदेहोऽपि न आत्मा, संहतत्वादित्यर्थः। संहतत्वस्य परार्थत्वव्याप्यत्वेन तादृशसंहतदेहातिरिक्त एव आत्मा इत्यर्थः। तरणिः प्रकाशः, प्रत्यक्षोऽपि संहतत्वेन यथा परार्थः, तथा प्रकृतेऽपि ज्ञेय इति भावः॥ १३ ॥

मनसः आत्मत्वं निरसितुं सूत्रमवतारयति—मनः इति। अणुपरिमाणं—परिच्छिन्नपरिमाणम्। तत्क्रियायां—मनसः क्रियावत्त्वे इत्यर्थः। श्रुतिदर्शनादिति—"असंशयं महाबाहो! मनो दुर्निग्रहं चलम्" [गीता ६ अध्या० ३५ श्लोकः] इत्यादिश्रुतिदर्शनादित्यर्थः। व्यापकस्येति—व्यापकस्य—विभोः उपाधिरहितस्य इन्द्रियत्वं न क्वचित् दृष्टचरं, तथा च, मनो यदि व्यापकतया अङ्गीक्रियते, तदा तस्य इन्द्रियत्वसिद्ध्यै आकाशस्य कर्णशष्कुलीवत् कश्चन उपाधिरवश्यम् अङ्गीकर्त्तव्यः। नन्वस्तु आकाशस्य कर्णशष्कुलीवत् देहान्तर्गतस्य कस्यचित् अवयवस्य तदुपाधित्वम्? इति शङ्कते—यदीति। दोषमाह, तदेति।—तावन्मात्रे—उपाधितया कल्पितेन तदवयवेन अवच्छिन्ने देहे इत्यर्थः। अत्र दृष्टान्तमाह, श्रोत्रवदिति।—तथा च, देहान्तर्गतस्य कस्यचिदवयवस्य उपाधित्वं तदतिरिक्तावयवावच्छेदेन ज्ञानवत्त्वस्यान्यथाऽनुपपत्त्या कल्पयितुमशक्यत्वम् इति भावः। नन्वस्तु देह एव उपाधिः? इत्याह—ततश्चेति। तदेतन्मतं दूषयति, तथा चेति।—तदवच्छेदेन—देहावच्छेदेन, वृत्ति-

प्रतीतिविरोधः। युगपज्ज्ञानानुत्पत्तेरपि मनसः अणुत्वम् आह। न्यायश्च अन्यत्र प्रपञ्चितः इति ॥ १४ ॥

हेत्वन्तरमाह,—

**तदन्नमयत्वश्रुतेः ॥ १५ ॥**

तस्य मनसः अन्नमयत्वे श्रुतिः अस्ति। अन्नमयत्वेन च सौम्यत्वं दर्शितम्। सौम्यत्वञ्च चन्द्ररूपत्वम् इति। न च आत्मा चन्द्रः। श्रुतिश्च "अन्नं वै प्राणाः"। प्राणश्च चन्द्र-मयः ज्ञेयः। चन्द्रमा मनसः जातः, तस्मात् अणु मनः, न आत्मा इति ॥ १५ ॥

पुरुषार्थं महदादीनां प्रवृत्तिः, संसृतिः किमर्थम्? इत्यत आह,—

**पुरुषार्थं संसृतिर्लिङ्गानां, सूपकारवद्राज्ञः ॥ १६ ॥**

यथा प्रवृत्तिः तथा संसृतिः। संसृतौ च मरणादुःखम् इति निर्विण्णः भवति। सूपकारवत् इति परार्थम् एव प्रवृत्तिः ॥ १६ ॥

विप्रतिपत्तौ सत्यां स्वपक्षमाह,—

---

लाभे—मनसो व्यापित्वलाभे। अव्याप्यवृत्तित्वप्रतीतिविरोध इति—अवयवविशेषाव-च्छेदेनैव सुखदुःखाद्यनुभवविरोधः इत्यर्थः। मनसः अणुत्वसिद्धौ प्रमाणान्तरं दर्शयति—युगपज्ज्ञानानुत्पत्तेरिति ॥ १४ ॥

मनसः अन्नमयत्वश्रुतेरपि नात्मत्वम् इत्युपपादयितुं सूत्रमवतारयति—हेत्वन्तर-मिति। "अन्नमयं हि सौम्य मनः" [छान्दो० उप० ६ अध्या० ५ खण्ड० ४ श्लोकः] इति श्रुतौ अवगतं सौम्यपदं न सम्बोधनार्थम्, अपि तु मनसो विशेषणम् इति वृत्तिकृदभिप्रायः। तथा च, किमितन्मनसः सौम्यत्वं स्यात्? तदेव निरूपयति—सौम्यत्वञ्चेति ॥ १५ ॥

प्रधानस्येव सूक्ष्मभूतानामपि प्रवृत्तिः पुरुषार्थैव इति दर्शयितुं सूत्रमवतारयति, पुरुषार्थमिति।—सुगमम् ॥ १६ ॥

तदेवं देहस्य उपादानविषयिण्यां विप्रतिपत्तौ स्वसिद्धान्तप्रदर्शनपरं सूत्रमव-तारयति— विप्रतिपत्त्याविति ॥ १७ ॥

**पाञ्चभौतिको देहः ॥ १७ ॥**

स्पष्टम् ॥ १७ ॥

का विप्रतिपत्तिः ? इत्यत आह,—

**चातुर्भौतिकमित्यन्ये ॥ १८ ॥**

आकाशपरित्यागेन चातुर्भौतिकं शरीरम् इति अन्ये ॥१८॥

मतान्तरमाह,—

**ऐकभौतिकमपरे ॥ १९ ॥**

पार्थिवं शरीरम इति ॥ १९ ॥

देहचैतन्यं निरस्यति,—

**न सांसिद्धिकं चैतन्यं, प्रत्येकादृष्टेः ॥ २० ॥**

पृथक्पृथक्कृतेषु चैतन्यादर्शनात् न स्वभावचैतन्यम्, अत एव मिलितानां च चैतन्यं न आशङ्कनीयम्। जन्तवः हि प्रत्येकं क्षुद्रजन्तुसंक्रमणशक्तिमन्तः, मिलिताः ते हस्तिनमपि संयमयन्ति ; न च एवं भूतानि इति न देहचैतन्यम् ॥ २० ॥

दूषणान्तरमाह,—

**प्रसुप्त्याद्यभावश्च ॥ २१ ॥**

---

विप्रतिपत्तेः स्वरूपं दर्शयितुं सूत्रमवतारयति—का विप्रतिपत्तिः ? इति। चातुर्भौतिकमित्यनेन केषां चतुर्णां भूतानां ग्रहणं कर्त्तव्यम् ? इत्यत आह—आकाशपरित्यागेनेति ॥ १८ ॥

अत्रैव मतान्तरं दर्शयितुं सूत्रमवतारयति—मतान्तरमिति। अपरे—नैयायिकाः ॥ १९ ॥

देहाकारपरिणतानां भूतानामेव चैतन्यं धर्मः इति चार्वाकमतं दूषयितुं सूत्रमवतारयति—देहचैतन्यमिति। सांसिद्धिकं—देहस्य स्वाभाविकं धर्मभूतमित्यर्थः; मिलितानां हि तदा भवेत् यदि प्रत्येकं किञ्चित् दृश्येत इति भावः ॥ २० ॥

देहचैतन्ये दूषणान्तरं दर्शयितुं सूत्रमवतारयति—दूषणान्तरमिति। अत्र “प्रपञ्चमरणाद्यभावश्च” इत्येवं सूत्रपाठं विज्ञानभिक्षुप्रभृतयः मन्यते। “प्रपञ्चस्याभावः” इति

देहस्य चेतनत्वे प्रपञ्चत्वस्य मरणस्य अभावः, चेतनस्य नित्यत्वात्॥ २१ ॥

अथ चेतनस्य अपि मरणं मुक्तिः इति दूषणान्तरमाह,—

**मदशक्तिवच्चेत्, प्रत्येकपरिदृष्टे सौक्ष्म्यात् सांहत्ये तदुद्भवः ॥ २२ ॥**

यथा मदशक्तिः प्रतिपुरुषे सूक्ष्मत्वेन दृष्टा सांहत्ये महच्छक्त्युद्भवात् बृहच्छिलामपि वहति। न च भूतेषु अपि प्रत्येकं सूक्ष्मचैतन्यं दृष्टं, येन सांहत्ये देहे चैतन्यं स्यात्। "न सांसिद्धिकम्" इति सूत्रे निषेधमुखेन दर्शितं भवति, इह सूत्रे विधिमुखेन इति न पुनरुक्तम्॥ २२ ॥

वैराग्यादीनां पारम्पर्य्येण मुक्तिसाधनत्वम् उक्तं, साक्षात् मुक्तिसाधनमाह,—

**ज्ञानान्मुक्तिः ॥ २३ ॥**

व्यक्तम्॥ २३ ॥

व्यतिरेकमाह,—

**बन्धो विपर्य्ययात् ॥ २४ ॥**

अज्ञानात्॥ २४ ॥

---

मन्ये। प्रपञ्चत्वस्येति वृत्तिकारसम्मतः पाठः। "प्रपञ्चस्य" इति पाठे—प्रपञ्चपदं धर्माधर्मयोः मरणस्य च उपलक्षकम्। वृत्तिकारमते तु प्रपञ्चत्वपदं मरणपरमेव॥२१॥

देहस्यैवास्तु चैतन्यं नैमित्तिकं, निमित्तापाये तु नैमित्तिकस्य चैतन्यस्य अपाय एव मुक्तिरस्तु इति मतं दूषयितुं सूत्रमवतारयति—अथेति। ननु एतस्य सूत्रस्य "न सांसिद्धिकम्" इत्यादिपूर्वोपात्तसूत्रेण गतार्थत्वमेव इत्याशङ्कायां समाधानमाह—न सांसिद्धिकमिति॥ २२ ॥

साक्षात् मुक्तिसाधनं निरूपयितुं सूत्रमवतारयति, वैराग्यादीनामिति।—स्पष्टम्॥२३॥

बन्धहेतुनिरूपणपरं सूत्रमवतारयति—व्यतिरेकमिति। विपर्य्ययपदं व्याचष्टे—अज्ञानादिति॥ २४ ॥

न ज्ञानमात्रात् मुक्तिः, कर्मणः अपि मुक्तिसाधनत्वात्; तथा च श्रुतिः,—"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" [बृह० उप० ४ अध्या० ४ ब्रा० २ मन्त्रः] इति। तत्राह,—

**नियतकारणत्वान्न समुच्चयविकल्पौ ॥ २५ ॥**

नियतम् एव कारणं, ज्ञानात् मुक्तिः, कर्मणः भुक्तिः। यत्र अपि अकामकर्मणः समुच्चयः श्रूयते, तत्र अपि ज्ञानार्थं, तस्मात् न समुच्चयः; नापि कदाचित् ज्ञानात्, कदाचित् कर्मणः इति विकल्पः। श्रुतिश्च—"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥" [श्वेता० उप० ३ अध्या० ८ मन्त्रः] ॥ २५ ॥

दूषणान्तरमाह,—

**स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य ॥ २६ ॥**

मायिकः,—स्वप्नः, अमायिकः,—जागरः। स्वप्नवत् कर्म, जागरवत् ज्ञानम्। तुल्यकालयोः हि समुच्चयः, न तु स्वप्नजागरयोः तुल्यकालत्वं, तस्मात् न ज्ञानकर्मसमुच्चयः ॥ २६ ॥

ज्ञानकर्मणोः व्यवस्थाप्रदर्शनपरं सूत्रमवतारयति, न ज्ञानमात्रादिति।—मुक्तिसाधनत्वात्—मुक्तिं प्रति परम्परया साधनत्वादित्यर्थः। तथा च, ज्ञानमेव मुक्तिहेतुः, कर्म न साक्षात् मुक्तिहेतुः, अतो मुक्तौ न ज्ञानकर्मणोः समुच्चयः, न वा विकल्प इति सूत्रार्थः ॥ २५ ॥

ननु माऽस्तु काम्यकर्मणा समुच्चयः, नित्येन तु स्यात्? इत्याशङ्कानिराकरणाय सूत्रमवतारयति, दूषणान्तरमिति।—मायिकं कर्म अमायिकं ज्ञानं, स्वप्नजागराभ्यामिव भिन्नकालाभ्यां ताभ्यां मिलिताभ्यां मुक्तिर्न सम्भवति, उभयोरेककालत्वे हि कथमपि समुच्चयः सम्भवेत्; नित्यकर्मापि चित्तशुद्धावेव साक्षादुपयुज्यते, न तु मुक्तौ इति सूत्रार्थः ॥ २६ ॥

प्रत्ययत्वात् स्वप्नप्रत्ययवत् जागरप्रत्ययस्यापि मिथ्यात्वम् इत्यत्राह,—

**इतरस्यापि नात्यन्तिकम् ॥ २७ ॥**

स्वप्नप्रत्ययस्यापि न आत्यन्तिकं मिथ्यात्वं खपुष्पवत्, न च स्वात्मनि अपि मिथ्यात्वम्, अन्यथा स्वप्न इत्येव न स्यात्। न च अत्यन्तादृष्टे स्वप्नः, किन्तु जाग्रद्दृष्टेऽर्थे ॥ २७ ॥

दृष्टकारणाभावात् सङ्कल्पमात्रेण योगिनां न सर्वा सिद्धिः इत्यत्राह,—

**सङ्कल्पितेऽप्येवम् ॥ २८ ॥**

न अस्मदादीनां सङ्कल्पात् सिद्धिः इति योगजधर्मोपगृहीतानां सिद्धानाम् अपि न भवितव्यम्; तस्मात् न मिथ्या इति ॥ २८ ॥

एतदेवाह,—

**भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् ॥ २९ ॥**

यथा महदादीनां पूर्वमपेक्ष्य कार्य्यकरणं, प्रकृतेस्तु न

---

कर्मणो माथिकत्वमेव न मिथ्यात्वमभिमतं, किन्तु अनात्यन्तिकफलकत्वमेव इति प्रदर्शयितुं सूत्रमवतारयति, प्रत्ययत्वादिति।—इतरस्यापि—कर्मणोऽपि, न आत्यन्तिकं फलम्, अतो मायिकत्वमुक्तम्। एतेन ज्ञानस्य अनात्यन्तिकफलकत्वाभावरूपम् अमायिकत्वं व्याख्यातम् ॥ २७ ॥

योगिनां सङ्कल्पमात्रेणापि सिद्धे पदार्थे न मिथ्यात्वम् इत्येतत् प्रदर्शयितुं सूत्रमवतारयति—दृष्टकारणेति। भवितव्यमिति, अस्मदादीनामिव न सङ्कल्पात् सिद्धिरिति पूरणीयम्; तेनैव भवितव्यमित्यस्यान्वयः ॥ २८ ॥

ननु क्लृप्तदृष्टकारणाभावे जायमानस्य कथं न मिथ्यात्वं भवेत्? इतीमामाशङ्कां निराकर्तुं सूत्रमवतारयति—एतदेवेति। शुद्धस्य, प्राणायामादिभिरिति शेषः; एतच्च अध्याहर्त्तव्यस्य योगिनः इति पदस्य विशेषणं, भावनायाः,—ध्यानस्य, उपचयात्—आधिक्यात् एवं सर्वं सम्पद्यते इति। न तत्र लोकसिद्धदृष्टकारणापेक्षा,तथा च,योगिनः

कार्य्यकरणे कस्यापि अपेक्षा, तथा दृष्टकारणाभावादपि योगिनां भावनोपचयात् सर्वं सम्पद्यते ॥ २९ ॥

भावनार्थं ध्यानमाह,—

**रागोपहतिर्ध्यानम् ॥ ३० ॥**

रागो रजोगुणात् चलितत्वं, तदुपहतिः निश्चलितत्वं ध्यानम् ॥ ३० ॥

तत्सिद्धिः कथम्? इत्यत आह,—

**वृत्तिनिरोधात् तत्सिद्धिः ॥ ३१ ॥**

वृत्तयः प्रमाणादयः पञ्च, तन्निरोधात् तत्सिद्धिः ध्यान-सिद्धिः ॥ ३१ ॥

तन्निरोधः कथम्? इत्यत आह,—

**धारणाऽऽसनस्वकर्मणा तत्सिद्धिः ॥ ३२ ॥**

धारणा—नाभ्यादिदेशे चित्तधारणम्। आसनं—स्वस्तिकादिः, स्वेन यमनियमप्राणायामप्रत्याहारा उपलक्षिताः।

---

अस्मदादिवत् न विलम्बसङ्कल्पा इति हृदयम्। प्रकृतिवदिति।—प्रकृतिर्यथा अनपेक्ष्यैव लोकसिद्धं पूर्वं कारणं महदादिकार्य्यमारभते तद्वत् योगिनोऽपि इति विज्ञेयम् ॥ २९ ॥

प्रसङ्गात् ध्यानलक्षणमाह, रागेति।—तथा च, रागस्य—रजोगुणस्य, तत्कार्य्यस्य चञ्चलत्वस्येत्यर्थः, उपहतिः,—निश्चलत्वं, सत्त्वगुणेनाभिभव इति भावः ॥ ३० ॥

तदुपायमाह, वृत्तिनिरोधादिति।—अत्र वृत्तिनिरोधपदेन ध्येयातिरिक्तविषयक-वृत्तिनिरोधरूपस्य सम्प्रज्ञातयोगस्य स्वरूपम् उक्तं भवति, इतरवृत्तिनिरोधे सत्येव विषयान्तरसञ्चाराद्यप्रतिबन्धापगमात् ध्येयसाक्षात्कारो भवतीति कृत्वा योगोऽपि ज्ञाने कारणं योगाङ्गध्यानादिवत् इत्यप्येव मन्तव्यम्, "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" [ कठ० उप० २ वल्ली० १२ श्लोकः ] इत्यादि श्रुतिस्मृत्योस्तदवगमात्। वृत्तिशब्दार्थमाह—वृत्तय इति। प्रमाणादयः इति—अत्र आदिपदेन विपर्य्ययविकल्पनिद्रास्मृतिरूपाणां वृत्त्यन्तराणां ग्रहणम् ॥ ३१ ॥

इदानीं क्रमप्राप्त वृत्तिनिरोधोपायं दर्शयितुं सूत्रमवतारयति—तन्निरोध इति। तत्र अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यम् अपरिग्रह इति यमाः। शौचसन्तोषतपःस्वाध्याये-

स्वकर्म—स्वजातिविहितकर्मानुष्ठानम्। इति वृत्तिनिरोधविधिः॥ ३२॥

नानाऽऽसनेषु स्वमतमासनमाह,—

**स्थिरसुखमासनम्॥ ३३॥**

येन स्थैर्य्यं सुखञ्च स्यात् तदासनमनुष्ठेयम्॥ ३३॥

अन्यं निरोधोपायमाह,—

**निरोधश्छर्दिविधारणाभ्याम्॥ ३४॥**

छर्दिः,—रेचकम्। विधारणं—कुम्भकम्, उपलक्षणमेतत्, पूरकोऽपि द्रष्टव्यः॥ ३४॥

किं तत् स्वकर्म? इत्यत आह,—

**स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम्॥ ३५॥**

स्पष्टम्॥ ३५॥

अन्यं वृत्तिनिरोधोपायमाह,—

**वैराग्यादभ्यासाच्च॥ ३६॥**

वैराग्यात् द्विविधात्, अपरात् अलम् इति प्रत्ययात्, परात्

---

श्वरप्रणिधानानि नियमाः। तत्र ईश्वरप्रणिधानन्तु तस्मिन् परमगुरौ परमेश्वरे सर्वकर्मसमर्पणम्, अत एवोक्तं—"शय्याऽऽसनस्थोऽथ पथि व्रजन् वा स्वस्थः परिक्षीणवितर्कजालः। संसारबीजक्षयमीक्षमाणः स्यान्नित्यमुक्तोऽमृतभोगभागी॥" स्वविषयसम्प्रयोगाभावे चित्तस्वरूपानुकार इवेति चित्तनिरोधे चित्तवन्निरुद्धानि इन्द्रियाणि न इतरेन्द्रियजयवत् उपायान्तरमपेक्षन्ते, यथा मधुकरराजं मक्षिका उत्पतन्तम् अनु उत्पतन्ति निविशमानमनु निविशन्ते, तथा इन्द्रियाणि चित्तनिरोधे निरुद्धानि इत्येष प्रत्याहारः इति॥ ३२॥

आसनमाह, स्थिरसुखमिति।—स्पष्टम्॥ ३३॥

वृत्तिनिरोधे उपायान्तरमाह, निरोध इति।—सुगमम्॥ ३४॥

स्वकर्म व्याचष्टे, स्वकर्मेति।—सुगमम्॥ ३५॥

वृत्तिनिरोधोपायान्तरमाह—वैराग्यादिति। वैराग्यस्य द्वैविध्यमाह—द्विविधा-

ज्ञानप्रसादमात्रात्। अभ्यासात् पौनःपुन्येन ध्यानात्। चः समुच्चये ॥ ३६ ॥

वृत्तीनामवान्तरभेदमाह,—

विपर्य्ययभेदाः पञ्च ॥ ३७ ॥

अविद्या मिथ्याज्ञानं, अस्मिता अभिमानः, रागः अनुरागः, द्वेषः क्रोधः, अभिनिवेशः त्रासः, इति विपर्ययेण विषयि ज्ञानम् उपलक्षितम् ॥ ३७ ॥

अशक्तिमाह,—

अशक्तिरष्टाविंशतिधा ॥ ३८ ॥

तुष्टिमाह,—

तुष्टिर्नवधा ॥ ३९ ॥

---

दिति। अपरवैराग्यस्य स्वरूपमाह, धर्मामिति।—सर्वेष्वेव विषयेषु उपेक्षास्वरूपादित्यर्थः। चः समुच्चये इति।—अत्र चकारः धारणां समुच्चिनोतीति भावः ॥ ३६ ॥

तदेवं ज्ञानात् मोक्षो व्याख्यातः। अतः परं "बन्धो विपर्य्ययात्" इति यदुक्तं, तत्र बन्धकारणस्य विपर्य्ययस्य स्वरूपं प्रदर्शयितुं सूत्रमवतारयति, वृत्तीनामिति।—अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च योगदर्शनोक्ताः बन्धहेतुविपर्य्ययस्य अवान्तरभेदा इत्यर्थः; तेन शुक्त्यादौ रजताविज्ञानरूपाणां विपर्य्ययाणाम् असङ्ग्रहेऽपि न क्षतिरिति द्रष्टव्यम्। तत्र अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरूपं मिथ्याज्ञानम् अविद्या इत्यर्थः। आत्मानात्मनोरेकताप्रत्ययः अस्मिता; स च शरीरादतिरिक्त आत्मा नास्ति इत्येवंरूपः, प्रागुक्ता तु अविद्या नैवंरूपा। त्रासः इति—मरणादित्रासः इत्यर्थः। विपर्ययेणेति—रागादिरूपविपर्ययेण, तद्विषयकं ज्ञानमपि अत्र उपलक्षितं भवति इति ज्ञेयम् ॥ ३७ ॥

अशक्तिं विभजते, अशक्तिरिति।—एतत्कारिकया एवं व्याख्यातम्—"एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुपदिष्टा। सप्तदश वधाः बुद्धेः विपर्य्ययात् तुष्टिसिद्धीनाम् ॥ तथा च—बाधिर्य्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा। मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमुग्धताः ॥" इत्येवम् एकादशेन्द्रियाणाम् एकादश अशक्तयः, बुद्धेश्च सप्तदश अशक्तयः इति मिलित्वा अष्टाविंशतिधा अशक्तिः ज्ञेया ॥ ३८ ॥

तुष्टिं विभजते, तुष्टिरिति।—सुगमम् ॥ ३९ ॥

सिद्धिमाह,—

**सिद्धिरष्टधा ॥ ४० ॥**

चतुर्थं विपर्य्ययभेदमाह,—

**अवान्तरभेदाः पूर्ववत् ॥ ४१ ॥**

पूर्ववदिति—पूर्वाचार्य्यैः उक्ताः द्वाषष्टिः विपर्य्ययभेदाः। प्रकृतिमहदहङ्कारपञ्चतन्मात्रेषु आत्मबुद्धिः अविद्या तमः अष्टविषयत्वात् अष्टधा। देवाः हि अणिमादिकम् आत्मीयत्वेन अभिमन्यन्ते, सा इयम् अस्मिता मोहः अष्टविषयत्वात् अष्टधा। शब्दादिषु तन्मात्रेषु पञ्चसु दिव्यादिव्यतया रागः महामोहः दशविषयत्वात् दशधा। शब्दादयः दश अणिमाद्यष्टैश्वर्य्योपधानेन सहिताः तं च अन्येन उपहन्यमानाः इति द्वेषः तामिस्रः अष्टादशविषयत्वात् अष्टादशधा। देवाः हि एतान् उपभुञ्जानाः असुरैः उपहन्यन्ते इति अभिनिवेशः त्रासः अन्धतामिस्रः अष्टादशविषयत्वात् अष्टादशधा। एवं द्वाषष्टिः इति ॥ ४१ ॥

---

सिद्धिं विभजते, सिद्धिरिति।—सुगमम् ॥ ४० ॥

उक्तानां विपर्ययाशक्तितुष्टिसिद्धीनां विशेषाकाङ्क्षायां क्रमेण सूत्रचतुष्टयं प्रवर्त्तते इति दर्शयन्नाह, चतुर्थं इति।—विपर्ययस्य अवान्तरभेदाः ये सामान्यतः पञ्च उक्ताः, ते पूर्ववत्—पूर्वाचार्य्यैः यथोक्ताः तथैव विशिष्य अवधार्य्या इति सूत्रार्थः। विपर्ययभेदानां द्वाषष्टिरूपतां पूर्वाचार्य्योक्तां व्याख्यातुमाह, प्रकृतीति।—तदयं निर्गलितार्थः,—अष्टसु अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु प्रकृतिषु आत्मबुद्धिः अविद्या-तमः अष्टधा भवति। कार्य्यकारणाभेदेन केवलविकृतिषु आत्मबुद्धेरपि अत्रैवान्तर्भावः। एवम् अविद्यायाः विषयभेदेन अष्टविधत्वात् तत्समानविषयकस्य अस्मिताख्यमोहस्यापि अष्टविधत्वम्। दिव्यादिव्यभेदेन शब्दादीनां विषयाणां दशत्वात् तद्विषयकः रागाख्यः महामोहः दशविधः। अविद्याऽस्मितयोः अष्टौ ये विषयाः, ये च रागस्य दश विषयाः, तद्विघातकेषु अष्टादशसु अष्टादशधा तामिस्राख्यो द्वेषः। एवं तेषामष्टादशानां विघातादिदर्शनात् अष्टादशधा अन्धतामिस्राख्योऽभिनिवेशः भयमिति। एतेषाञ्च तमआदि संज्ञा तद्धेतुत्वात् इति विज्ञानभिक्षुमतानुसृतं व्याख्यानम् ॥ ४१ ॥

अशक्तिभेदान् आह,—

**एवमितरस्याः ॥ ४२ ॥**

इतरस्याः अशक्तेः, एवम् अनेकधा अष्टाविंशतिधा। एकादश इन्द्रियवधाः,—

"बाधिर्य्यं कुष्ठिताऽन्धत्वं जड़ताऽजिघ्रता तथा।
मूकता कौण्यपङ्गुत्व क्लैव्योदावर्त्तमुग्धताः ॥"

एतद्विषया एकादश बुद्धेः। नव तुष्टयः, अष्ट सिद्धयः, तद्विपर्य्ययेण सप्तदश बुद्धेः। एवम् अष्टाविंशतिः इति ॥ ४२ ॥

तुष्टिभेदान् आह,—

**आध्यात्मिक्यादिभेदान्नवधा तुष्टिः ॥ ४३ ॥**

अनात्मनि आत्मबुद्ध्या प्रवर्त्तमाना आध्यात्मिक्यः चतस्रः। आदिशब्दात् बाह्याः पञ्च। प्रकृतिविवेकदर्शनात् चेत् मुक्तिः, सा एव उपास्या, किमात्मना? इति प्रकृत्याख्या एका तुष्टिः अम्भः इति उच्यते। विवेकज्ञानात् अपि न साक्षात्, अदर्श-

---

अशक्तिभेदं निरूपयितुं सूत्रमवतारयति—अशक्तीति। जड़ता नाम रसाज्ञानम्। कौण्यं—ग्रहणासामर्थ्यम्। उदावर्त्तः,—विसर्गासामर्थ्यम्। मुग्धता—विषयाग्रहणम् इत्येषां मिथो भेदः ॥ ४२ ॥

क्रमप्राप्तान् तुष्टिभेदान् निरूपयन् सूत्रमवतारयति, तुष्टिभेदानिति।—अयेदं ज्ञेयं—तुष्टयस्तावत् द्विधा एव भवन्ति, आध्यात्मिक्यः बाह्याश्च। तत्र प्रकृतिव्यतिरिक्तमात्मानम् अधिकृत्य याः खलु प्रवृत्ताः, ता तुष्टयः आध्यात्मिक्यः उच्यन्ते। ताश्च प्रकृत्युपादानकालभाग्यनामभिः प्रसिद्धाः चतस्र एव। तत्र प्रकृतितुष्टिः यथा—प्रकृतिव्यतिरिक्ते आत्मनि ज्ञाते विवेकसाक्षात्कारो नाम प्रकृतिपरिणामः, तच्च प्रकृतिरेव सम्पादयिष्यति इति तदर्थम् अलं तव ध्यानाभ्यासेन, तस्मात् एवमेव वत्स्य इत्युपदेशात् शिष्यस्य तुष्टिः प्रकृतितुष्टिरित्युच्यते; अस्या एव नामान्तरम् अम्भः इति। तदेतदाह वृत्तिकारः,—प्रकृतिविवेक इति। सैवोपास्येति—प्रकृतिरेव उपासनीया, तदुपासनमन्तरेण मोक्षलाभार्थं नात्मना कश्चित् प्रयत्नः अपेक्ष्यते इत्यर्थः। आत्मनेति—प्रकृत्युपासननिरपेक्षेण ध्यानादितत्परेण आत्मना न किमपि फलमित्यर्थः। उपादान-

नात्; व्रतग्रहणात् भविष्यति इति उपादानाख्या द्वितीया तुष्टिः सलिलम् उच्यते। व्रतात् अपि न साक्षात्, किन्तु कालात् भवति इति कालाख्या तृतीया तुष्टिः ओघः इति उच्यते। कालवशात् अपि न सर्वेषां मुक्तिः, किन्तु भाग्यात् एव इति भाग्याख्या चतुर्थी तुष्टिः वृष्टिः इति उच्यते। आत्मानम् अधिकृत्य इति आध्यात्मिक्यः। पञ्चधा विषयोपरमात् बाह्याः पञ्च। विषयार्जनदुःखात् उपरमे एका तुष्टिः पारम् उच्यते। रक्षणदुःखात् उपरमे द्वितीया तुष्टिः सुपारम्

---

तुष्टिमाह, विवेकेति।—तथा च, प्राकृत्यपि विवेकख्यातिः न प्रकृतिमात्रात् भवति, तस्याः सर्वान् प्रति अविशेषात् सर्वदा सर्वस्य विवेकख्यातिप्रसङ्गात्, अतः प्रव्रज्याहेतुकैव विवेकख्यातिरित्यङ्गीकरणीयम्; तस्मात् प्रव्रज्यामेव उपादधीयाः, कृतं ते ध्यानाभ्यासेन इत्युपदेशात् शिष्यस्य या तुष्टिः, सैव उपादानतुष्टिः इत्युच्यते; तस्याः सलिलमिति नामान्तरम्। वृत्तौ व्रतग्रहणपदेन प्रव्रज्यारूपव्रतग्रहणम् अध्यवसेयम्। तृतीयां तुष्टिमाह, व्रतादपीति।—प्रव्रज्याऽपि साक्षात् निर्वाणदा न भवति, किन्तु कालमपेक्ष्यैव इति कालादेव ते सिद्धिर्भविष्यति, अलं तवोत्कण्ठया, इत्युपदेशात् शिष्यस्य या तुष्टिः, सा तृतीया कालतुष्टिरिति तात्पर्य्यम्; अस्या एव नामान्तरम् ओघ* इति। चतुर्थीं तुष्टिमाह, कालवशादिति।—तथा च, कालादपि न सर्वेषां मुक्तिः, अपि तु भाग्यादेव कदाचित् कस्यचित्, दृष्टश्च मदालसापत्यानाम् अतिशैशवेऽपि स्वमातुरुपदेशमात्रादेव विवेकख्यातिलाभेन निराबाधं कैवल्यमभूत्, तस्मात् भाग्यमेव हेतुः, नान्यत् किमपि इत्युपदेशात् शिष्यस्य या तुष्टिः सा चतुर्थी तुष्टिः भाग्याख्या, तस्याः वृष्टिरिति नामान्तरम्। इदानीं बाह्याः पञ्च तुष्टीर्निरूपयिष्यन्नाह, पञ्चधेति।—बाह्यान् पञ्च अनात्मनः प्रकृतिमहदहङ्कारादीन् आत्मेत्यभिमन्यमानस्यैव विषयोपरमे सति या तुष्टयः सम्भवन्ति, ता एव बाह्या इत्युच्यन्ते। तथा हि, शब्दादिषु पञ्चस्वपि विषयेषु अर्ज्जन-रक्षण-क्षय-भोग-हिंसादोषदर्शनजन्मानः पञ्च उपरमाः भवन्ति, तेषु च पञ्च तुष्टयः भवन्ति। तत्र स्रक्चन्दनवनिताद्यर्जने दुःखपरम्परां भावयतो विद्यया उपरमे या तुष्टिः, सा प्रथमा बाह्या तुष्टिः, तस्याः पारमिति नामान्तरम्। तदेतदाह—विषया-

* तत्त्वकौमुद्याम् "ओघः" इत्यत्र "मेघः" इति पाठः। तदर्थस्तु—"अस्याश्च तुष्टेः मेघस्येव फलसिद्धिहेतुभूतवृष्टिसाधनत्वेन मेघतुल्यत्वम्" इति तर्कवाचस्पतिपादाः।

उच्यते। क्षयं भावयतः दुःखात् उपरमे तृतीया तुष्टिः पारपारम् उच्यते। भोगदोषं भावयतः दुःखात् उपरमे चतुर्थी तुष्टिः अनुत्तमाम्भः उच्यते। न अनुपहत्य भूतानि भोगसिद्धिः इति दुःखात् उपरमे पञ्चमी तुष्टिः उत्तमाम्भः उच्यते। एवं नवधा इति ॥ ४३ ॥

सिद्धेः भेदान् आह,—

**ऊहादिभिः सिद्धिरष्टधा ॥ ४४ ॥**

तत्र अध्ययनं प्रथमा सिद्धिः तारम् उच्यते। शब्दज्ञानं द्वितीया सिद्धिः सुतारम् उच्यते। ऊहः तर्कः, मननम् इति तृतीया सिद्धिः तारतारम उच्यते। गुरु-सब्रह्मचारिणां प्राप्तिः

---

र्जनात। द्वितीयामाह, रक्षणेति।—अर्जितमपि धनादिकं दस्युप्रभृतिभ्यः विनङ्क्ष्यति इति तद्रक्षणे महद्दुःखमिति भावयतः विषयोपरमे या तुष्टिः, सैव द्वितीया इत्यर्थः ; सुपारमिति तस्याः नामान्तरम। तृतीयां बाह्यतुष्टिमाह, क्षयमिति।—बहुतरायासेन अर्जितं सुरक्षितमपि धनं भुज्यमानं क्षीयते एवेति क्षयं भावयतः विषयोपरमे या तुष्टिः, सेयं तृतीया तुष्टिरित्युच्यते ; अस्या एव तुष्टेर्नामान्तरं पारपारमिति। चतुर्थीं बाह्यतुष्टिमाह, भोगदोषमिति।—तथा च, "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥" इत्युक्तनयात् भोगाभ्यासात् कामाः वर्द्धन्ते, ते चाभिलषितविषयाप्राप्तौ कामिनं पुरुषं नितरां दुःखयन्तीति भोगदोषं भावयतः विषयोपरमे या तुष्टिः, सा चतुर्थी, अनुत्तमाम्भः इति तस्याः नामान्तरम। पञ्चमीं बाह्यतुष्टिमाह, नानुपहत्येति।—तथा च, नानुपहत्य भूतानि उपभोगः सम्भवतीति हिंसादोषं भावयतः विषयोपरमे या तुष्टिः, सैव पञ्चमी बाह्यतुष्टिरित्यर्थः ; उत्तमाम्भः इत्यस्याः नामान्तरम ॥ ४३ ॥

ऊहादिभिरिति।—ऊहादिभेदैः सिद्धिरष्टधा भवति इति सूत्रार्थः। ते च ऊहः, शब्दः, अध्ययनं, त्रयो दुःखविघाताः, सुहृत्प्राप्तिः, दानञ्चेति। "पाठक्रमात् पदार्थक्रमः बलवान्" इत्यभिप्रेत्य क्रमान्तरेण व्याख्यायन्ते। तत्र आद्या सिद्धिः अध्ययनं नाम ; तच्च विधिवत् गुरुमुखात् अध्यात्मविद्यानाम अक्षरस्वरूपग्रहणं, तारमिति तस्या नामान्तरम। द्वितीया सिद्धिः शब्दः ; शब्द इत्यनेन तज्जनितार्थज्ञानं लक्ष्यते ; एतस्याः सिद्धेर्नामान्तरं सुतारम्। तृतीया सिद्धिः ऊहः इत्युच्यते, स च आगमाविरोधिन्यायेन आगमार्थपरीक्षणरूपः तर्क एव, एतदेव मननमित्युच्यते ; अस्या एव नामान्तरं तारतारम्।

चतुर्थी सिद्धिः रम्यकम् उच्यते। बाह्यान्तःशुद्धिः पञ्चमी सिद्धिः सदामुदितम् उच्यते। आध्यात्मिकदुःखविघातः षष्ठी सिद्धिः प्रमोदम् उच्यते। आधिभौतिकदुःखविघातः सप्तमी सिद्धिः मुदितम् उच्यते। आधिदैविकदुःखविघातः अष्टमी सिद्धिः मोदमानम् उच्यते। एवम् अष्टधा इति। प्राधान्येन विपर्य्ययाशक्तितुष्टिसिद्धिः इति चतुःप्रकारा अवान्तरभेदात् पञ्चाशत्॥ ४४॥

उत्तरेण पूर्वपरित्यागात् सिद्धिः इति आह,—

**नेतरादितरहानेन विना॥ ४५॥**

इतरात् अशक्तितः, इतरहानेन विपर्य्ययहानेन विना न सिद्धिः। एवं तुष्टितः अशक्तिहानेन विना न सिद्धिः। एवं तद्धानेन विना इति॥ ४५॥

सुहृत्प्राप्तिश्चतुर्थी सिद्धिः, न्यायेन परीक्षितमप्यर्थं न तावत् जनाः श्रद्दधते, यावत् गुरु-शिष्यसब्रह्मचारिभिः सह न संवादः क्रियते; तस्मात् सुहृदां गुर्वादीनां प्राप्तिः आवश्यकी इति सेयं चतुर्थी सिद्धिः रम्यकमित्युच्यते। दानं नाम पञ्चमी सिद्धिः; सा च विवेकज्ञानस्यैव, "दैप शोधने" इत्यस्मात् धातोः दानपदोत्पत्तेः। एतदेवाह भगवान् पतञ्जलिः,—"विवेकख्यातिरविप्लवा हानोपायः" [२ पा० २६ सू०] इत्यनेन सूत्रेण अविप्लवा शुद्धिः, सा च सवासनसंशयविपर्य्यासपरिहारेण विवेकसाक्षात्कारस्य स्वच्छ-प्रवाहे अवस्थानम्, इयन्तु न विनाऽऽदरनैरन्तर्य्यदीर्घकालसेविताभ्यासपरिपाकेण भवतीति दानेन कार्य्येण शुद्धिरूपेण सोऽपि सङ्गृहीतः, सेयं पञ्चमी सिद्धिः सदा-मुदितमित्युच्यते। इमाश्च पञ्च अमोघाः सिद्धयः हेतुत्वात् तन्नाम्ना व्यपदिश्यन्ते, तिस्रः पुनः फलत्वात् मोघाः: आध्यात्मिकदुःखविघातः, आधिभौतिकदुःखविघातः, आधि-दैविकदुःखविघातश्चेति तिस्रो मोघाः सिद्धयः क्रमेण प्रमोद-मुदित-मोदमाननामभिः व्यपदिश्यन्ते। तदेवं पञ्च विपर्य्ययभेदाः, अशक्तिरष्टाविंशतिधा, तुष्टिर्नवधा, सिद्धि-रष्टधा इति पञ्चाशत् पदार्थाः॥ ४४॥

विपर्य्ययाशक्तितुष्टयः हेया एव इत्याह, नेतरादिति।—तथा च, इतरासां —विपर्य्ययाशक्तितुष्टीनां, हानेन विना इतरस्मात्—अशक्तिरूपात् अहानात्, सिद्धी न भवतीति शेषः। विज्ञानभिक्षुस्तु सूत्रमिदम् अन्यथा व्याचख्यौ—तथा च, "इतरात्

सर्गे सति वैराग्यम्; कति सर्गभेदाः? इत्यत आह,—

**देवादिप्रभेदाः ॥ ४६ ॥**

आदिशब्दात् षड्भेदाः। तथा च,—

"देवादौ षड्विधश्च स्यात् संसारः कर्मसम्भवः।
सुरोऽसुरो नरः प्रेतास्तिर्य्यङ्नारक एव च॥"

स्थावराणां नारकेषु अन्तर्भावः ॥ ४६ ॥

प्रकृतेः प्रवृत्तिशीलत्वात् सर्वदा सृष्टौ न मुक्तिः इत्यत आह,—

**आ-ब्रह्मस्तम्बपर्य्यन्तं तत्कृते सृष्टिराविवेकात् ॥४७॥**

तत्कृते पुरुषकृते, मोक्षार्थं सृष्टिः। विवेकपर्य्यन्तं प्रकृतेः शीलम् इदं विवेकज्ञानं यावत् प्रवर्त्तते, स्वभावस्य अनपायित्वात् ॥ ४७ ॥

---

—ऊहनादिपञ्चकभिन्नात् तप आदेः तात्त्विकी सिद्धिर्न भवति, कुतः? इतरहानेन विना—यतः सा सिद्धिः इतरस्य—विपर्य्ययस्य हानं विनैव भवति, अतः संसाराप्रतिपन्थित्वात् सा सिद्ध्याभास एव, न तु तात्त्विकी सिद्धिरित्यर्थः" इति तद्व्याख्यानम्। इतरादिति आर्षम् ॥ ४५ ॥

वैराग्यं प्रति सृष्टिवैचित्र्यज्ञानस्य उपयोगित्वात् प्रसङ्गात् तदेव निरूपयितुं सूत्रमवतारयति—सर्गे इति। सौत्रम् आदिपदं व्याचष्टे—आदिशब्दादिति। नन्वेवं स्थावराणां सर्गाणां कुत्रान्तर्भावः? इत्यत आह—स्थावराणामिति। केचित्तु सौत्रमादिपदं तैर्य्यग्योन-मानुष्यभेदेन त्रिविधसर्गपरम् इत्याहुः। एतन्मते ब्राह्म-प्राजापत्य-ऐन्द्र-दैव-गान्धर्व-याक्ष-राक्षस-पैशाचाः इत्यष्टविधः दैवसर्गः। पशु-मृग-पक्षि-सरीसृप-स्थावराः इति पञ्चविधः तैर्य्यग्योनः, मानुष्यस्तु एकविध एव, ब्राह्मणत्वाद्यवान्तरजातिभेदस्य अविवक्षितत्वात्, तत्र संस्थानस्य चतुर्षु एव वर्णेषु अविशेषात् इति समासतः भौतिकः सर्गः ॥ ४६ ॥

प्रकृतेः प्रवृत्तिशीलत्वे अपवर्गासिद्धिरित्याशङ्क्य सूत्रमवतारयति, प्रकृतेरिति।—तथा च, पुरुषस्य भोगापवर्गौ एव प्रकृतेः प्रवृत्तिं प्रति नियामकौ इति मोक्षः नानुपपन्नः

कुत्र कथं सृष्टिः ? इत्यत्र आह,—

**ऊर्द्ध्वं सत्त्वविशाला ॥ ४८ ॥**

देवलोके ॥ ४८ ॥

नागलोके सृष्टिमाह,—

**तमोविशाला मूलतः ॥ ४९ ॥**

पाताले ॥ ४९ ॥

मर्त्यलोके सृष्टिमाह,—

**मध्ये रजोविशाला ॥ ५० ॥**

विशाला—उद्रिक्ता ॥ ५० ॥

ननु एकैकस्वगुणानाम् अन्योऽन्यमिथुनभावात् कथं प्रकृतेः सृष्टिवैचित्र्यम् ? इत्यत्र आह,—

**कर्मवैचित्र्यात् प्रधानचेष्टा, गर्भदासवत् ॥ ५१ ॥**

यथा गर्भदासः विचक्षणः विचित्रं कर्म कुरुते प्रभोः अर्थाय, तथा प्रधानं पुरुषार्थं विचित्रां सृष्टिं कुरुते कर्मवैचित्र्यात्—कर्मलाभात् ॥ ५१ ॥

इति तात्पर्य्यम् । तथा च, विवेकज्ञानपर्य्यन्तमेव प्रकृतिः सर्गाय प्रवर्त्तते स्वभावादिति फलितार्थः ॥ ४७ ॥

पुनः सृष्टेः वैचित्र्यं दर्शयन् त्रीणि सूत्राण्यवतारयति, कुत्रेति ।—तथा च, भुव-प्रभृति सत्यलोकान्ता सृष्टिः सत्त्वबहुला इत्युच्यते । मूलतः सृष्टिः पश्वादिस्थावरान्ता तमोबहुला । मध्ये धर्माधर्मानुष्ठानपरत्वात् दुःखबहुलत्वात् सृष्टिः रजोबहुला इत्युच्यते ॥ ४८—५० ॥

प्रकृतेः सृष्टिवैचित्र्यमुपपादयितुं सूत्रमवतारयति, नन्विति ।—एकैकस्वगुणानामिति—सत्त्वरजस्तमसामित्यर्थः । अन्योऽन्यमिथुनभावात—स्वकार्य्यजनने गुणान्तरगुणभावापेक्षत्वादित्यर्थः । तथा च, पुरुषभोगवैचित्र्यस्यैव प्रकृतेः सृष्टिवैचित्र्यं प्रति प्रयोजकत्वात् न किञ्चिदनुपपन्नमिति सूत्रतात्पर्य्यम् ॥ ५१ ॥

उत्तरोत्तरभूमिलाभात् कृतकृत्यस्य किं मोक्षेण? इत्यत आह,—

**आवृत्तिस्तत्रापि, उत्तरोत्तरयोनियोगाद्धेयः ॥५२॥**

उत्तरोत्तरविशिष्टजन्मलाभेऽपि संसारे आवृत्तिः, तस्मात् हेयः संसारः ॥ ५२ ॥

एतत् एव आह,—

**समानं जरामरणादिजं दुःखम् ॥ ५३ ॥**

आ-ब्रह्मस्तम्बपर्य्यन्तम् ॥ ५३ ॥

कारणे प्रकृतौ लयात् एव कृतकृत्यस्य किं मोक्षेण? इत्यत आह,—

**न कारणलयात् कृतकृत्यता, मग्नवदुत्थानात् ॥ ५४ ॥**

भवेत् एवं, यदि प्रकृतिलीनस्य न पुनः आवृत्तिः; न तु एवं, पुनरावृत्तिश्रुतेः। तथा च,—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकास्तु शतं पूर्णं, सहस्रं त्वाभिमानिकाः॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः।
पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः॥
निर्गुणं पुरुषं प्राप्य कालसङ्ख्या न विद्यते॥"

मोक्षस्य परमपुरुषार्थत्वमुपपादयितुं सूत्रमवतारयन्नाह, उत्तरोत्तरेति।—भूमिलाभात् इति—शुभकर्मवशेन उत्तरोत्तरोत्कर्षवत्-स्वर्गादिभोगभूमिलाभादित्यर्थः। तथा च, कर्मकृतस्य लोकस्य क्षयित्वादेव न तत्र विवेकिनां कृतकृत्यताबुद्धिः सम्भवतीति भावः ॥ ५२ ॥

कर्मजन्यभूमीनां हेयत्वे हेतुमुपपादयन् सूत्रमवतारयति, एतदिति।—सुगमम् ॥५३॥

ननु प्रकृतिलयादेव कृतकृत्यता, किं मोक्षेण? इत्याशङ्क्य समाधानाय सूत्रमव-

यथा स्नानार्थं मग्नस्य पुनः उत्थानं, तथा प्रकृतिलीनस्य इत्यर्थः ॥ ५४ ॥

नित्यत्वात् यथा न आत्मनः बन्धः, तथा प्रधानस्यापि इत्यत आह,—

**अकार्य्यत्वेऽपि तद्योगः, पारवश्यात् ॥ ५५ ॥**

अकार्य्यत्वम् अप्रयोजकं, किन्तु परतन्त्रत्वं, तच्च प्रकृतौ अस्ति इति ; तद्योगात् च बन्धयोगः ॥ ५५ ॥

परः आत्मा किंरूपः ? इत्यत आह,—

**स हि सर्ववित् सर्वकर्त्ता ॥ ५६ ॥**

प्रकृतिप्रतिविम्बितत्वात् एवम् अभिमानः ॥ ५६ ॥

तात्त्विकम् एव कर्त्तृत्वं भवतु, किं प्रतिविम्बकल्पनया ? तथा च न्यायाभिमतः एव ईश्वरः अस्ति ? इत्यत्राह,—

तारयति, कारणे इति ।—प्रकृतिलीनस्यापि पुनरावृत्तिश्रवणात् न प्रकृतिलयस्य विवेकिनां परमपुरुषार्थत्वं सम्भवतीति सूत्रतात्पर्य्यं सुगमम् ॥ ५४ ॥

नित्यत्वाविशेषेऽपि आत्मनो नास्ति बन्धः, अपि तु प्रधानस्यैव सः इति कथमुपपद्यते ? इत्याशङ्कानिराकरणाय सूत्रमवतारयति—नित्यत्वात् इति । अकार्य्यत्वं—नित्यत्वम्, अप्रयोजकं, बन्धराहित्यं प्रति इति शेषः । परतन्त्रत्वं, बन्धं प्रति प्रयोजकमिति भावः । तच्च—परतन्त्रत्वमित्यर्थः । तद्योगादिति—अत्र तत्पदेन पारार्थ्यापरपर्य्यायं परतन्त्रत्वमेव ग्राह्यम् ॥ ५५ ॥

प्रकृतेरचेतनायाः अधिष्ठाता चेतनः कश्चिदस्ति, स एव सर्ववित् सर्वकर्त्ता भवतु ? इति मतं दूषयितुं सूत्रमवतारयति, परः इति ।—तथा च, प्रकृतौ आत्मनः प्रतिविम्बितत्वात् तस्य सर्ववित्त्वं, सर्वकर्त्तृत्वञ्चेति धर्मद्वयम् औपाधिकं, न तु वास्तवमित्यर्थः । केचित्तु सूत्रे "सः" इत्यस्य प्रकृतिपदार्थः इत्यर्थं वर्णयन्ति । विज्ञानभिक्षुस्तु प्रकृतिलयात् पुरुषस्य उत्थाने प्रमाणप्रदर्शनपरं सूत्रमिदमित्याह । तन्मते "सः" इत्यस्य पूर्वसर्गे कारणलीनः पुरुष एव गृह्यते, स एव सर्गान्तरे सर्ववित्, सर्वकर्त्ता, ईश्वरः, आदिपुरुषः भवति, प्रकृतिलये तस्यैव प्रकृतिपदप्राप्तौचित्यात् इत्यर्थमुपदर्शितवान् ॥ ५६ ॥

नन्वेवं तात्त्विकमेव कर्त्तृत्वं पुरुषस्याङ्गीक्रियतां, किं प्रतिविम्बकल्पनया ? इत्या-

**इदृशेश्वरसिद्धिः सिद्धा ॥ ५७ ॥**

यदि अस्मदभिमतः आत्मा ईश्वरः, भवतु ; न्यायाभिमते च प्रमाणं नास्ति। एतच्च प्रथमाध्याये “ईश्वरासिद्धेः” इति सूत्रे वर्णितम्। द्वितीयाध्याये “विमुक्तविमोक्षार्थम्” इति सूत्रे स्वार्थं परार्थञ्च प्रधानप्रवृत्तिः इति उक्तम्। अत्र स्वार्थस्य गौणत्वम् ॥ ५७ ॥

परार्थत्वम् एव आह,—

**प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वात्, उष्ट्रकुङ्कुमवहनवत् ॥ ५८ ॥**

चेतनस्य अपि परार्थं प्रवृत्तिः दृश्यते, यथा उष्ट्रः कुङ्कुमं वहति। अचेतनायाः तु प्रकृतेः अभोक्तृत्वात् परार्थम् एव प्रवर्त्तनम् इति ॥ ५८ ॥

चेतनस्य प्रवृत्तिः दृष्टा, न अचेतनस्य, इत्यत्राह,—

**अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥५९॥**

यथा क्षीरम् अचेतनं वत्सार्थं प्रवर्त्तते, तथा प्रधानं पुरुषार्थं प्रवर्त्तते ॥ ५९ ॥

---

शङ्कायां समाधानसूत्रमवतारयति, तात्त्विकमिति।—तथा च, औपाधिकं सर्वविस्त्वं सर्वकर्तृत्वञ्च उपादाय जीव एव ईश्वरत्वं भजते, न तु तात्त्विकः कश्चन नित्यसिद्धः ईश्वरः अस्ति इति। सूत्रतात्पर्यं विवृण्वन्नाह—यदीति ॥ ५७ ॥

प्रधानसृष्टौ यत् पारार्थ्यस्य प्रयोजकत्वं प्रदर्शितं तदुपपादनाय सूत्रमवतारयति, परार्थत्वमिति।—परार्थे—पुरुषार्थम्। सूत्रे अपिरेवार्थे वर्त्तते, तथा च, स्वतः अभोक्तृत्वादेव स्वार्थः सम्पद्यते। परार्थप्रवृत्तौ दृष्टान्तमाह—यथेति ॥ ५८ ॥

चेतनस्यैव प्रवृत्तिरिति मतं दूषयितुं सूत्रमवतारयति, चेतनस्येति।—तथा च, वत्सविवृद्ध्यर्थम् अचेतनस्य क्षीरस्येव पुरुषभोगापवर्गार्थं प्रधानस्य प्रवृत्तिः नानुपपन्ना इति भावः ॥ ५९ ॥

दृष्टान्तान्तरमाह,—

कर्मवत् दृष्टेर्वा कालादेः ॥ ६० ॥

यथा कृषीवलेन कृतं कर्म धान्यरोपणादि कालात् एव फलति, न च वृक्षाः चेतनाः। आदिशब्दात् अदृष्टं ग्राह्यम् ॥ ६० ॥

उष्ट्रस्यापि ताड़नादिभयाभिसन्धानात् प्रवृत्तिः दृश्यते, न च अचेतनायाः प्रकृतेः अभिसन्धानम् अस्ति, इत्यत्राह,—

स्वभावाच्चेष्टितमनभिसन्धानात्, भृत्यवत् ॥ ६१ ॥

यथा गर्भदासो भृत्यः स्वामिनि अभिसन्धानशून्यः स्वभावात् एव चेष्टते अनभिसन्धाय कार्य्यं करोति, तथा प्रकृतिः इति ॥ ६१ ॥

पक्षान्तरम् आह,—

कर्माकृष्टेर्वाऽप्यनादितः ॥ ६२ ॥

अनादित्वात् संसारस्य धर्माधर्माकर्षणात् प्रधानं प्रवर्त्तते, यथा पुंसां कर्मवशात् अचेतनाः अपि वृक्षाः फलन्ति इति ॥ ६२ ॥

---

एतदेव मतं दृढ़यितुं दृष्टान्तान्तरप्रदर्शनपरं सूत्रमवतारयति—दृष्टान्तान्तरमिति। कृषीवलेन—कर्षकेण। सौत्रमादिपदं व्याचष्टे, आदिशब्दादिति।—अदृष्टं—पापपुण्य-रूपम ; तथा च, क्रियते उत्पाद्यते इति व्युत्पत्तियोगात कर्मपदम उप्यमानबीजादि-परम ; तथा च, कृषीवलेन उप्यमानं बीजादि वृष्टिं कालम् अदृष्टस्यापेक्ष्य यथा वृक्षादिरूपेण परिणमते तथा प्रधानमपि ॥ ६० ॥

उष्ट्रस्यापि ताडनाभिया कुङ्कुमवहनं घटते, प्रकृतेरचेतनत्वेन तु न स्वार्थानुसन्धानं सम्भवति इत्याशङ्कायां समाधानसूत्रमवतारयति—उष्ट्रस्यापीति। स्वामिनि अभि-सन्धानशून्यः—स्वामिकार्य्यकरणद्वारा स्वस्य पृथगभीष्टसिद्धिसन्धाननिरपेक्षः इत्यर्थः। तथा च, गर्भदासो हि स्वभावादेव अभ्यासादेव वा स्वामिकार्य्यं करोति, न तु स्वार्थ-मनुसन्धत्ते, प्रकृतिरपि तथा स्वभावादेव पुरुषार्थे प्रवर्त्तते इति तात्पर्य्यम् ॥ ६१ ॥

अत्रैव विषये उपपादनपरं सूत्रमवतारयति, पक्षान्तरमिति।—तथा च, अनादौ

युक्तिबहुत्वात् पुनर्वचनं न पुनरुक्ततादोषाय इत्यत आह,—

**विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य, सूदवत् पाके ॥ ६३ ॥**

पुरुषार्थं सृष्टिः । तन्निवृत्तिस्तु प्रकृतिपुरुषविवेकज्ञानात् ; यथा सूपकारः पाकं कृत्वा निवर्त्तते ॥ ६३ ॥

उपदेशात् विवेकज्ञानेऽपि मुक्तिः न दृश्यते, इत्यत आह,—

**इतर इतरज्जहाति, तद्दोषात् ॥ ६४ ॥**

न यथाकथञ्चिद्बोधमात्रात् मुक्तिः, किन्तु इन्द्रियात् इतरः आत्मा, इतरत् प्रधानं, जहाति ध्यानादिना पृथक्करोति, तद्दोषात् प्रकृतेः चलत्वादिदोषदर्शनात् ॥ ६४ ॥

मोक्षस्वरूपमाह,—

**द्वयोरेकतरस्य औदासीन्यम् अपवर्गः ॥ ६५ ॥**

द्वयोः,—प्रकृतिपुरुषयोः । प्रकृतेः औदासीन्यं—विवेकिनं

संसारे पूर्वपूर्वसर्गसञ्चितपुरुषधर्माधर्मप्रेरणयैव प्रधानं सर्गाय प्रवर्त्तते । अस्मिन्नेव विषये दृष्टान्तं दर्शयति—यथेति ॥ ६२ ॥

द्विरुक्तवचने पौनरुक्त्यं न दोषाय इति उक्तमप्यर्थं प्रयोजनानुरोधेन पुनरुपपादयितुं सूत्रमवतारयति—युक्तिबहुत्वादिति । विविक्तबोधात्—विवेकज्ञानादित्यर्थः । सुगममन्यत् ॥ ६३ ॥

विवेकज्ञानस्य यया रीत्या मोक्षहेतुत्वं, तामुपपादयितुं सूत्रमवतारयति—उपदेशादिति । "इतरवत्" इति पाठे—वक्ष्यमाणसूत्रार्थः योजनीयः, इतरः,—केवलविवेकज्ञानवानपि, इतरवत—विवेकज्ञानरहितवत्, तस्य—विवेकज्ञानस्य, दोषात्—संशयविपर्य्याससंवलिततत्स्वरूपात् ; तथा च, विवेकज्ञानस्य शुद्ध्यर्थं तत्त्वाभ्यासो यतनीयमिति भावः । "इतरज्जहाति" इति पाठे तु इतिकृतता प्रदर्शितः अर्थ एव ग्राह्यः ॥ ६४ ॥

इदानीं प्रसङ्गेन मोक्षस्वरूपं निरूपयितुं सूत्रमवतारयति—मोक्षस्वरूपमिति ।

प्रति अप्रवर्त्तनं, पुरुषस्य औदासीन्यं—प्रकृत्यनभिष्वङ्गः, एकतरस्य इति—आत्मनः, तस्यैव मुख्यत्वात् ॥ ६५ ॥

प्रकृतेः प्रवृत्तिशीलायाः औदासीन्ये सर्वमुक्तिप्रसङ्गः, इत्यत आह,—

**अन्यसृष्ट्युपरागेऽपि न विरज्यते, प्रबुद्धरज्जुतत्त्वस्यैवोरगः ॥ ६६ ॥**

न प्रवृत्तिशीलायाः औदासीन्यं, स्वभावत्यागदोषात् ; किन्तु विवेकिनं प्रति अप्रवर्त्तने, अज्ञान् प्रति सृष्ट्युपरागेऽपि सृष्टिकरणेऽपि, न विरज्यते—सृष्टौ प्रवर्त्तते । यथा रज्जौ सर्पभूते प्रबुद्धरज्जुतत्त्वस्य एव उरगः सर्पभ्रमः प्रवर्त्तते, न तु अज्ञातरज्जुतत्त्वस्य ॥ ६६ ॥

अत्र न्यायमाह,—

**कर्मनिमित्तयोगाच्च ॥ ६७ ॥**

विवेकिनं प्रति कर्मणः निमित्तस्य अभावात्, न वीजं विना अङ्कुरो भवति । श्रुतिः अपि,—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥"

इति [ मुण्ड० उप० २ मुण्ड० २ खण्ड० ८ मन्त्रः ] ॥ ६७ ॥

प्रकृत्यनभिष्वङ्ग इति ।—प्रकृतौ अनादिसञ्चितस्य संस्काररूपस्य स्वस्वामिभावस्य निवृत्तिरित्यर्थः । एकतरपदेन प्रकृतिः कथं न गृह्यते ? इत्यत आह, तस्यैवेति ।—तस्य—आत्मन इत्यर्थः ॥ ६५ ॥

प्रकृतेः औदासीन्ये सर्वमुक्तिप्रसङ्गं निराकर्त्तुं सूत्रमवतारयति, प्रकृतेरिति ।—तथा च, यस्य पुरुषस्य विवेकविज्ञानं, तं प्रत्येव प्रकृतेरौदासीन्यं, न तु अनुत्पन्नविवेकज्ञानं पुरुषं प्रति ; तदेतत् दर्शयितुं दृष्टान्तं विवृणोति—यथेति ॥ ६६ ॥

अदृष्टाख्यभावेनैव विरक्तपुरुषं प्रति प्रकृतेः प्रवृत्त्यसम्भवः इत्येतत् प्रतिपादयितुं न्यायप्रदर्शनपरं सूत्रमवतारयति—अत्रेति । विवेकज्ञानस्य सञ्चितादिकर्मध्वंसजनकत्वे प्रमाणभूतां श्रुतिमुपन्यस्यति—श्रुतिरपीति ॥ ६७ ॥

अदृष्टस्य बुद्धिकार्य्यत्वात् अहङ्कारायुत्पत्तौ भवतु अदृष्टसहायता, प्रकृतेः स्वकार्य्यकारणे क्व अदृष्टसहकारिता ? इत्यत आह,—

**नैरपेच्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ॥ ६८ ॥**

अदृष्टनैरपेच्येऽपि प्रकृतेः अविवेकः सहकारी इति ॥ ६८ ॥

प्रकृतिनिवृत्तिं दृष्टान्तेन आह,—

**नर्त्तकीवत् प्रवर्त्तकस्यापि निवृत्तिः, चारितार्थ्यात् ॥ ६९ ॥**

यथा नर्त्तकी परिषच्चारितार्थ्यात् निवर्त्तते, तथा प्रकृतिः अपि पुरुषस्य विवेकचारितार्थ्यात् सर्गात् निवर्त्तते ॥ ६९ ॥

निवृत्ता अपि प्रकृतिः कुतः अपि कारणात् प्रवर्त्तिष्यते ? इत्यत आह,—

**दोषबोधेऽपि नोपसर्पणं प्रधानस्य, कुलवधूवत् ॥ ७० ॥**

स्वदोषविज्ञानात् विवेकेन प्रकृतेः न उपसर्पणं, यथा कुलवधूः परपुरुषेण दृष्टा "न पुनः तद्दर्शनं मे भविष्यति" इति अवहित्थां कुरुते ॥ ७० ॥

---

नन्वेतत् पूर्वापरविरुद्धं, प्रथमेऽध्याये सृष्टौ अदृष्टस्य कारणत्वं यतः परिहृतं, तदेतद्विरोधपरिहाराय सूत्रमवतारयति—अदृष्टस्येति ॥ ६८ ॥

प्रकृतेर्निवृत्तिम् उपपादयितुं सूत्रमवतारयति, प्रकृतीति ।—तथा च, यथा नर्त्तकी सभ्यान् प्रति आत्मानं प्रदर्श्य नृत्यात् निवर्त्तते, तथा पुरुषविवेकानन्तरं प्रवृत्तिस्वभावमपि प्रधानं तं प्रति निवर्त्तते इति सूत्रतात्पर्य्यम् ॥ ६९ ॥

नर्त्तकीवत् पुनः कदाचित् प्रवर्त्तिष्यते ? इत्याशङ्कासमाधानाय सूत्रमवतारयति—निवृत्ता अपीति । अवहित्थाम्—आकारगुप्तिम् ॥ ७० ॥

यस्य बन्धः तस्य मोक्षः, न च पुरुषस्य तौ स्तः, इत्यत्र आह,—

**नैकान्ततो बन्धमोक्षौ पुरुषस्य, अविवेकादृते ॥७१॥**

प्रकृतिपुरुषाविवेकात् बन्धमोक्षौ इति अभिमानमात्रम् इति ॥ ७१ ॥

असत्यस्य सत्यपूर्वकत्वात् कस्य बन्धमोक्षौ सत्यौ? इत्यत्र आह,—

**प्रकृतेराञ्जस्यात् ससङ्गत्वात्, पशुवत् ॥ ७२ ॥**

आञ्जस्यात्—तत्त्वतः। ससङ्गत्वात्—गुणयोगात्। यथा पशुः सङ्गात्—गुणयोगात् बध्यते। तस्मात् प्रकृतेः बन्धमोक्षौ सत्यौ। अविवेकिनं प्रति प्रवर्त्तनम् एव बन्धः, मोक्षः पुनः विवेकिनं प्रति अप्रवर्त्तनम्; तेन च न स्वभावप्रच्युतिदोषः इति ॥ ७२ ॥

केन रूपेण प्रकृतिः आत्मानं बध्नाति? केन च विमोचयति? इत्यत आह,—

बन्धमोक्षौ पुरुषस्याविवेकादेव, न तु स्वाभाविकौ इति प्रदर्शयितुं सूत्रमवतारयति—यस्येति। एकान्ततः,—स्वाभाविकौ इत्यर्थः। अभिमानमात्रमिति।—तथा च, आभिमानिकावेव बन्धमोक्षौ, न तु तात्त्विकावित्यर्थः॥ ७१ ॥

प्रकृतेरेव स्वाभाविकौ बन्धमोक्षौ इत्येतत् प्रतिपादयितुं सूत्रमवतारयति, असत्यस्येति।—असत्यस्य—असतः, ध्वंसस्येत्यर्थः। सत्यपूर्वकत्वादिति—प्रतियोगित्वेन ध्वंसं प्रति तादात्म्येन कस्यचित् सतः कारणत्वादित्यर्थः। तथा च, बन्धनिवृत्तिरूपस्य मोक्षस्य ध्वंसरूपतया तत्प्रतियोगिना बन्धेन कस्यापि वास्तवधर्मेण भाव्यम्; यस्य सः, किं तत्? इत्याकाङ्क्षायां प्रकृतिरेव तस्य धर्मस्य बन्धरूपस्य वस्तुतः आश्रयः, इत्युत्तरं सूत्रार्थः। बन्धपदार्थं व्याचष्टे—अविवेकिनं प्रतीति। तेन—परिणामात्मिकायाः प्रकृतेः एव बन्धमोक्षस्वीकारेणेत्यर्थः। न स्वभावप्रच्युतिदोषः इति—पुरुषस्य अपरिणामिचैतन्यरूपस्य स्वभावस्य न हानिरित्यर्थः॥ ७२ ॥

**रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवत्, विमोचयत्येकेन रूपेण ॥ ७३ ॥**

रूपैः सप्तभिः धर्मवैराग्यैश्वर्य्याधर्माज्ञानावैराग्यानैश्वर्य्यैः बध्नाति। विमोचयति एकेन रूपेण ज्ञानेन ॥ ७३ ॥

काम्याकाम्यकर्मभ्यां भुक्तिः मुक्तिश्च इति, तत्त्यागे दृष्टहानिः इत्यत्राह,—

**निमित्तत्वमविवेकस्य इति न दृष्टहानिः ॥ ७४ ॥**

अदृष्टस्य ज्ञानद्वारेण परम्परया कारणत्वं मुक्तौ। संसारस्य तु कारणम् अविवेकः; तस्मात् न दृष्टहानिः ॥ ७४ ॥

विवेकश्च कथं स्यात्? इत्यत्राह,—

**तत्त्वाभ्यासान्नेति नेतीति त्यागात् विवेकसिद्धिः ॥ ७५ ॥**

स्पष्टम्। श्रुतिश्च—"स एष नेति नेत्यात्माऽगृह्यः, न हि गृह्यते, अशीर्य्यः, न हि शीर्य्यते" [ बृह० उप० ३ अध्या० ९ ब्रा० २६ मन्त्रः ] इत्यादि ॥ ७५ ॥

---

बन्धमोक्षयोः स्वरूपवैशद्यार्थं सूत्रमवतारयति—केन रूपेणेति। सुगममन्यत् ॥७३॥

ज्ञानमात्रस्य मोक्षं प्रति कारणत्वे विप्रतिपन्नस्य समुच्चयवादिनः शङ्कां निराकर्तुं सूत्रमवतारयति, काम्याकाम्येति।—तथा च, विवेकख्यात्यर्थं निरन्तरं ध्यानानुष्ठाने अपवर्गहेतुभूतकर्मणां त्यागात् मुक्तिर्न स्यात् इति पूर्वपक्षिणामाशयः। अत्रेदं तत्त्वं—संसारस्य तावत् कारणमविवेक एव, तन्निवृत्त्यै विवेकसाक्षात्कारार्थमेव मुमुक्षुभिः यत्नः कार्य्यः, तेन न दृष्टफलमुक्तिहानिर्भविष्यति। कर्मणान्तु चित्तशुद्धिद्वारैव मुक्तिं प्रति कारणत्वं, न साक्षात् इति ॥ ७४ ॥

विवेकसिद्धौ उपायस्वरूपनिर्णयाय सूत्रमुत्थापयति—विवेकश्चेति। तत्त्वाभ्यासादिति—देहेन्द्रियादिविलक्षणत्वेन आत्मनः पुनः पुनश्चिन्तनादित्यर्थः। सूत्रे सिद्धिपदं साक्षात्कारपरम्; तथा च, "नेति नेति" [ बृह० उप० २ अध्या० ३ ब्रा० ६ मन्त्रः ] इति तत्त्वाभ्यासात् कर्मफलसन्न्याससहितात् विवेकसाक्षात्कारः सिध्यति इति सूत्रार्थः ॥ ७५ ॥

यदि तत्त्वाभ्यासादिना मोक्षः, उपदेशानन्तरं सर्वशिष्याणां मुक्तिः स्यात्, अभ्यासस्य तुल्यत्वात् ; इत्यत्राह,—

**अधिकारिप्रभेदात् न नियमः ॥ ७६ ॥**

उत्तममध्यमाधमशक्तिभेदात् एकदा इति न नियमः ॥७६॥

यदि विवेकात् मुक्तिः, कथं विवेकिनो भोगदर्शनम् ? इत्यत्र आह,—

**बाधितानुवृत्तेर्मध्यविवेकतोऽप्युपभोगः ॥ ७७ ॥**

तीव्रविवेकस्य उपभोगः न अस्ति। मध्यविवेकस्य अपि उपभोगः, रागाभावात् अलम् इति ज्ञानेन बाधितत्वात् वासनाऽनुवृत्तिमात्रम्। उपारूढफलं कर्म उपभोगात् क्षिणोमि इति उपभुङ्क्ते इति ॥ ७७ ॥

मध्यविवेकिनः स्वरूपमाह,—

**जीवन्मुक्तश्च ॥ ७८ ॥**

मुक्तः इव मुक्तः, रागाभावात् धर्मानुत्पत्तेश्च । श्रुतिः अपि—

"आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ?"

इति [ बृह० उप० ४ अध्या० ४ ब्रा० १२ मन्त्रः ] ॥ ७८ ॥

---

सुगमम् ॥ ७६ ॥

विवेकस्य मुक्तिं प्रति कारणत्वे विवेकिनः भोगदर्शनम् अनुपपन्नमित्याशङ्का समाधानसूत्रमवतारयति—यदीति। मध्यत्वं नाम—विदेहमुक्तिप्रतिबन्धकप्रारब्धशेषवत्त्वं, तदभाव एव फलतस्तीव्रत्वम्। बाधितत्वादिति—हर्षविषादयोरप्रयोजकत्वादित्यर्थः। अनुवृत्तिपदं—प्रारब्धकर्मफलत्वेन आवश्यकत्वपरं, तथा च, विवेक्यविवेकिनोरुपभोगे अस्ति महान् भेद इति भावः ॥ ७७ ॥

क्रमप्राप्त मध्यविवेकिस्वरूपं बोधयितुं सूत्रमवतारयति—मध्यविवेकिन इति। जीवन्मुक्तौ श्रुतिं प्रमाणयन्नाह—श्रुतिरिति। अयमस्मि—प्रकृत्यादिभ्यो विविक्तस्वरूपोऽहमात्मा इत्यर्थः ॥ ७८ ॥

जीवतः मुक्तिः इति अनुपपत्तेः इदमाह,—

**उपदेश्योपदेष्टृत्वात् तत्सिद्धिः ॥ ७९ ॥**

तीव्रविवेकिनः बाह्यासंवेदिनः उपदेष्टृत्वम् एव न अस्ति, मन्दविवेकिनः अपि अज्ञानात् न उपदेष्टृत्वं, किन्तु सः उपदेश्यः। उपदेष्टा मध्यविवेकी। अतः तत्सिद्धिः जीवन्मुक्तसिद्धिः ॥ ७९ ॥

अत्र प्रमाणं दर्शयति,—

**श्रुतिश्च ॥ ८० ॥**

उवाच "जीवन्नेव हि विद्वान् हर्षामर्षाभ्यां विमुच्यते" इति ॥ ८० ॥

मन्दविवेकः अपि उपदेष्टा भविष्यति, इत्यत्राह,—

**इतरथाऽन्धपरम्परा ॥ ८१ ॥**

अज्ञानी गुरुः, किञ्च शिष्यः अज्ञाता इति ॥ ८१ ॥

उपदेशे हि ज्ञानात् मोक्षः, उपदेशानन्तरं मुच्येत, किं विलम्बेन ? इत्यत्राह,—

**चक्रभ्रमणवद्धृतशरीरः ॥ ८२ ॥**

यथा दण्डापगमे संस्कारवशात् चक्रं भ्रमति, तथा विवेकि-

---

जीवन्मुक्तिस्वरूपमेवोपपादयितुं सूत्रमवतारयति, जीवतः इति।—सुगमम् ॥७९॥

जीवन्मुक्तस्योपदेष्टृत्वे श्रुतिं प्रमापयन् सूत्रमवतारयति, श्रुतिरिति।—अत्र "समित्-पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" [ मुण्ड० उप० १ मुण्ड० २ खण्ड० १२ मन्त्रः ] इति "तस्मै स विद्वान् उपसन्नाय सम्यक्" [ मुण्ड० उप० १ मुण्ड० २ खण्ड० १३ मन्त्रः ] इति श्रुतिश्च अनुसन्धेया ॥ ८० ॥

विपक्षे बाधं दर्शयन् सूत्रमवतारयति—मन्दविवेक इति। इतरथा—मन्दविवेकस्य उपदेष्टृत्वे इत्यर्थः। अन्धपरम्परां व्याचष्टे—अज्ञानीति ॥ ८१ ॥

ज्ञानिनः शरीरं कथं तिष्ठतीति प्रतिपादयितुं सूत्रमवतारयति—उपदेशे इति।

नाम् अपि देहधारणकर्मणः अक्षीणत्वात् न तत्क्षणात् मुक्तिः, किन्तु उपभोगादिना कर्मक्षयात् इति । तथा च श्रुतिः,—

"दीक्षयैव नरो मुच्येत्तिष्ठेन्मुक्तोऽपि विग्रहे ।
कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेत् घटः ॥" ८२॥

तस्मात् अस्ति जीवन्मुक्तः, इति आह,—

**संस्कारलेशतस्तत्सिद्धिः ॥ ८३ ॥**

जीवन्मुक्तिसिद्धिः ॥ ८३ ॥

कदा परममुक्तिः ? इत्यत्राह,—

**विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यः, नेतरान्नेतरात् ॥ ८४ ॥**

निःशेषेण त्रिविधदुःखस्य अत्यन्तनिवृत्तौ कृतकृत्यः, परमुक्तिप्राप्तेः । नेतरात् कर्मणः इति । नेतरात् इति वीप्सा अध्यायपरिसमाप्तौ ॥ ८४ ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तौ वैराग्याध्यायस्तृतीयः ॥ ३ ॥

---

देहधारणकर्मणः,—देहारम्भकप्रारब्धकर्मणः इत्यर्थः । अक्षीणत्वात्—असमाप्तभोगफलकत्वात् । अस्यार्थमन्यत् । यथा दण्डेन भ्राम्यमाणं चक्रं निवृत्तेऽपि दण्डव्यापारे कियन्तं कालं भ्रमत्येव, एवं विवेकसाक्षात्कारिणं प्रति प्रधानस्य निवृत्तावपि प्रारब्धकर्मवशेन जातं शरीरं तत्कर्मफलभोगं यावत् तिष्ठत्येवेति भावः ॥ ८२ ॥

जीवन्मुक्तिप्रकरणोपसंहारपरं सूत्रमवतारयति, तस्मादिति ।—संस्काररागादीनां स एव लेशः,—रागाद्याभासः इत्यर्थः, ततः तत्सिद्धिः,—उपभोगसिद्धिः । अत एव विवेकिनां रागादिदर्शनेऽपि न तद्रागादि वास्तवं, किन्तु रागाद्याभास एव इति हृदयम् ॥ ८३ ॥

विदेहमुक्तिस्वरूपं निरूपयितुं सूत्रमवतारयति—कदेति । इतरादिति संज्ञापूर्वकविधेरनित्यत्वात् वा, छान्दस इति वा कथञ्चित् सङ्गमनीयम् ॥ ८४ ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तिटीकायाम् अमलाऽऽख्यायां
वैराग्याध्यायस्तृतीयः ।

---

## चतुर्थोऽध्यायः।



वैराग्यानन्तरं शिष्यप्रबोधाय आख्यायिकार्थं चतुर्थाध्यायारम्भः।

**राजपुत्रवत् तत्त्वोपदेशात् ॥ १ ॥**

कश्चित् राजपुत्रः गण्डस्थगजन्मा निःसारितः शबराधिपेन गृहीतः तत्पुत्रत्वेन तदाचारमात्रं जानाति। अथ अपुत्रस्य राज्ञः मरणे अमात्यैः आनीय प्रबोधितः "न त्वं शबरः, राजपुत्रः असि" इति उक्तः झटिति एव पूर्वसंस्कारवशात् राजपुत्राचारं गृहीतवान्। एवं मन्दानाम् अपि प्रबोधाय उपदेशः देयः इति ॥ १ ॥

आख्यायिकाऽन्तरमाह,—

**पिशाचवदन्यार्थोपदेशेऽपि ॥ २ ॥**

कश्चित् आचार्य्यः "विजने उपदेशं गृहाण" इति शिष्यम्

---

शास्त्रप्रसिद्धाऽऽख्यायिकासमूहप्रदर्शनमुखेन प्रधानपुरुषाविवेकज्ञानसाधनानि इदानीं प्रदर्शनीयानीति चतुर्थाध्यायः आरभ्यते. राजपुत्रवदिति।—गण्डस्थजन्मेति—

"अश्विनीमघमूलानां गण्ड आद्यास्त्रिनाडिकाः।
अन्त्याः पौष्णोरगेन्द्राणां पञ्चैव यवनाः जगुः॥
सन्ध्यारात्रिदिवाभागे गण्डयोगोद्भवः शिशुः।
आत्मानं मातरं तातं विनिहन्ति यथाक्रमम्॥
सर्वेषां गण्डजातानां परित्यागो विधीयते।
तातेनादर्शनं वाऽपि यावत् षाण्मासिको भवेत्॥"

इत्यादि ज्योतिषशास्त्रप्रसिद्धः गण्डः ज्ञेयः। तदाचारमात्रं—तस्य—शबरस्य, आचारं—पशुमारणादिरूपम् ॥ १ ॥

प्रसङ्गेन आत्मज्ञानात् मुक्तिरिति प्रतिपादयितुम् आख्यायिकाऽन्तरम् अवतारयति—आख्यायिकाऽन्तरमिति। अत्र विज्ञानभिक्षुः,—"अर्जुनार्थं श्रीकृष्णेन तत्त्वोपदेशे

आदाय अटवीं प्रविश्य उपदेशं दत्तवान् । गुल्मान्तरितेन पिशाचेन श्रुतं, तस्य अपि मुक्तिः अभूत् । प्रसङ्गेन अपि आत्मज्ञानात् मुक्तिः इति वाक्यार्थः ॥ २ ॥

अत्र विशेषमाह,—

**आवृत्तिरसकृदुपदेशात् ॥ ३ ॥**

तीव्रवैराग्याणां श्रुतिमात्रात् मोक्षो भवतु । मन्दानां निरन्तरोपदेशात् आवृत्तिः करणीया ॥ ३ ॥

आख्यायिकाऽन्तरमाह,—

**पितापुत्रवत्, उभयोर्दृष्टत्वात् ॥ ४ ॥**

कश्चित् ब्राह्मणः दारिद्र्यात् गुर्विणीं भार्य्यां तत्पितृगृहे निक्षिप्य प्रतिग्रहार्थं देशान्तरं गतः, बहुना कालेन गृहम् आगतः पुत्रं दृष्ट्वा न ज्ञातवान्, तन्माता भर्त्तारं पुत्रञ्च विज्ञापितवती, ततः उभयोः अपि ज्ञानम् अभूत् । गुरुं विना सुहृदुपदेशात् अपि तत्त्वज्ञानं भवति इत्यर्थः ॥ ४ ॥

आख्यायिकाऽन्तरमाह,—

**श्येनवत् सुखदुःखी, त्यागवियोगाभ्याम् ॥ ५ ॥**

केन अपि पुंसा श्येनशावकः प्राप्तः खण्डगुड़ादिना आहा-

---

क्रियमाणेऽपि समीपस्थस्य पिशाचस्य विवेकज्ञानं जातम्, एवमन्येषामपि भवेदित्यर्थः" इति सूत्रतात्पर्यं वर्णितवान् ॥ २ ॥

यदि च सकृदुपदेशात् ज्ञानं न जायते, तदा उपदेशावृत्तिः कर्त्तव्या इत्येतदुपपादयितुं सूत्रमवतारयति, अत्रेति ।—सुगमम् ॥ ३ ॥

न चोपदेशार्थं गुरुरावश्यकः इत्याह, पितापुत्रवत् इति सूत्रम् ।—उभयोः,—गुरुशिष्ययोः । दृष्टत्वात्—दृष्टार्थत्वात् । नात्र ज्ञाने गुर्व्वनियमः, किन्तु यस्मात्तस्मादेव उपदेशः कार्य्यः, अधिकारिणैव फलमाप्तव्यमिति भावः । तत्र दृष्टान्तः, पितापुत्रवत् इति । अन्यत् सुगमम् ॥ ४ ॥

सांसारिकसुखं दुःखाभिश्रितत्वात् हेयमित्याख्यायिकाऽन्तरमवतारयति, श्येन-

रेण समानेन च पुष्टः कालेन यौवनम् अवाप। "कथम् अहम् एनं दुःखिनं करोमि?" इति पुंसा वने त्यक्तः श्येनश्च बन्ध-त्यागात् सुखी, पुरुषवियोगात् दुःखी इति दुःखप्रबलत्वात् सुखस्य इयमपि हेयम् इति ॥ ५ ॥

आख्यायिकाऽन्तरमाह,—

**अहिनिर्लयनीवत् ॥ ६ ॥**

निर्लयनी—निर्मोकः। कश्चित् अहिः विवरद्वारे निर्मोकं त्यक्त्वा "ममेदम्" इति धूलोपङ्काक्तं दृष्ट्वा शोचति, स्नेहात् च न मन्यक्तवान्। निर्मोकानुसारात् केन अपि आहितुण्डिकेन गृहीतः। ममत्वस्नेहादयः न कर्त्तव्या इत्यर्थः ॥ ६ ॥

आख्यायिकाऽन्तरमाह,—

**छिन्नहस्तवद्वा ॥ ७ ॥**

कश्चित् मुनिः भ्रातुः आश्रमं प्रविश्य फलादिकम् आजहार। भ्राता अपि उक्तः, "स्तेयो त्वम्" इति। तेन उक्तं, "प्रायश्चित्तं वद"। भ्राता अपि उक्तं, "हस्तच्छेदात् अन्यत् प्रायश्चित्तं न अस्ति" इति। तेन च राज्ञे निवेद्य स्वहस्तौ

वदिति।—तथा च सर्वोऽपि जनः सुखवान् दुःखवांश्च दुःखमिश्रितसुखवानित्यर्थः। पुरुषवियोगादिति—दयालुपोषकपुरुषवियोगादित्यर्थः ॥ ५ ॥

ममत्वस्नेहादिरनर्थावहः इत्युपपादयितुम् आख्यायिकाऽन्तरमवतारयति—आख्यायिकाऽन्तरमिति। अत्र विज्ञानभिक्षुः सूत्रमिदमन्यथा व्याख्यातवान्; तथा च, तद्व्याख्यानं—"यथा अहिः जीर्णां त्वचं परित्यजति अनायासेन हेयबुद्ध्या, तथैव मुमुक्षुः प्रकृतिं बहुकालोपभुक्तां जीर्णां हेयबुद्ध्या त्यजेदित्यर्थः। तदुक्तं—जीर्णां त्वचमिवोरगः" इति ॥ ६ ॥

निषिद्धं कर्म सर्वथैव नानुष्ठेयं, प्रमादकृते च तस्मिन् अवश्यं प्रायश्चित्तमाचरणीयम् इत्येतत् प्रतिपादनपरम् आख्यायिकाऽन्तरमवतारयति, छिन्नेति।—सुगमम्। विज्ञानभिक्षुस्तु सूत्रमेतदप्यन्यथा व्याचष्टे यथा—"त्यक्तांश्च प्रकृत्यादिकां पुनः न स्वीकुर्यात्

छेदितौ। तस्मात् अकार्य्यं न कर्त्तव्यं, प्रमादकृते च तन्निष्कृतिः अवश्यं कर्त्तव्या इति ॥ ७ ॥

आख्यायिकाऽन्तरमाह,—

**असाधनानुचिन्तनं बन्धाय, भरतवत् ॥ ८ ॥**

भरतः नाम नृपः प्रत्यासन्नमोक्षः अपि तत्क्षणप्रसूतां हरिणीं दृष्ट्वा हरिणशावकं पुपोष। तं विहाय नान्यमनाः बभूव। मरणसमये तद्गतमनाः प्राणान् तत्याज। तत्सङ्गात् मुक्तिं न अवाप। अनिष्टचिन्तनं न कार्य्यम् इत्यर्थः ॥ ८ ॥

बहुभिर्मेलकं न कुर्य्यात्, इत्याह,—

**बहुभिर्योगे विरोधो रागादिभिः, कुमारीशङ्खवत् ॥ ९ ॥**

बहुभिः कलहः अवश्यम्भावी, यथा कुमारीशङ्खानाम् अन्योऽन्यं झणत्कारः परस्परसङ्घर्षात् ॥ ९ ॥

द्वाभ्यामपि न कुर्य्यात्, इत्याह,—

**द्वाभ्यामपि तथैव ॥ १० ॥**

सङ्घर्षनादिदोषात् ॥ १० ॥

इत्यवाह, छिन्नहस्तवद्वा इति।—यथा छिन्नं हस्तं पुनः कोऽपि नादत्ते, तथैव एतत् त्यक्तं पुनर्नाभिमन्येत इत्यर्थः। वा-शब्दोऽप्यर्थे" इति ॥ ७ ॥

विवेकस्य यदन्तरङ्गसाधनं न भवति, स चेत् धर्मोऽपि स्यात्, तथाऽपि तदनुचिन्तने अनुष्ठाने वा चित्तस्य तत्परत्वं न विधेयं, यतः तत् बन्धाय भवति इत्येतत् प्रतिपादयितुं भरताख्यानमवतारयति—आख्यायिकाऽन्तरमिति ॥ ८ ॥

मुमुक्षुणा बहुभिर्मेलकं परिहर्त्तव्यमित्युपपादयितुम् आख्यायिकाऽन्तरमवतारयति, बहुभिरिति।—तथा च, यथा कुमारीशङ्खवलयानां परस्परसङ्घर्षात् रणत्कारः, तथा बहूनां मेलने रागादिभिः परस्परं कलहो भवेदेव इति बहुभिर्मेलकं न कुर्य्यात् ॥ ९ ॥

सुगमम् ॥ १० ॥

आख्यायिकाऽन्तरमाह,—

**निराशः सुखी, पिङ्गलावत् ॥ ११ ॥**

पिङ्गला नाम वेश्या रत्यर्थं भुजङ्गागमनप्रतीक्षणात् उन्निद्रा दुःखम् अनुभूतवती। एकदा तु अत्यन्तदुःखनिर्विण्णा "पुनः न एवं करिष्यामि" इति निर्विण्णा बभूव। निराशा सुखं स्वपिति ॥ ११ ॥

गृहारम्भः दुःखाय, इत्याह,—

**अनारम्भेऽपि परगृहे सुखी, सर्पवत् ॥१२॥**

व्यक्तम् ॥ १२ ॥

शास्त्रे व्याख्यानपरोपासनादिकम् असारम् अस्ति, तत्परित्यजनीयम्, इत्याह,—

**बहुशास्त्रगुरूपासनेऽपि सारादानं, षट्पदवत् ॥ १३ ॥**

यथा भ्रमरः पुष्पं विहाय मधु समादत्ते, तद्वत् मोक्षार्थिना अविद्या त्याज्या इति ॥ १३ ॥

---

नैराश्यस्य सुखहेतुत्वे दृष्टान्तमवतारयति सूत्रेण—आख्यायिकाऽन्तरमिति। ननु आशानिवृत्त्या दुःखनिवृत्तिरेव सम्भाव्यते, सुखं तु कुतः साधनाभावात्? इति। उच्यते—चित्तस्य सत्त्वप्राधान्येन स्वाभाविकं यत् सुखम् आशया पिहितं तिष्ठति, तदेव आशाविगमे अभिव्यक्तं भवति, तेजःप्रतिबद्धजलशैत्यवत्; न हि तत्र साधनान्तरापेक्षा, एतदेव फलतः सुखमित्युच्यते ॥ ११ ॥

योगप्रतिबन्धकत्वात् आरम्भोऽपि भोगार्थं न कर्त्तव्यः अन्यथैव तदुपपत्तेः इत्येतत् प्रतिपादयितुं सूत्रमवतारयति—गृहारम्भ इति ॥ १२ ॥

शास्त्रेभ्यः गुरुभ्यः च सारः एव ग्राह्यः इत्युपपादयितुं सूत्रमवतारयति, शास्त्रे इति।—तथा च, "सर्वतः सारमादद्यात् अश्मभ्य इव काञ्चनम्" इति न्यायेन शास्त्रेभ्योऽपि सार एव ग्राह्यः, न तु परविजयाय अभिनिवेष्टव्यम्; किञ्च गुरुनिष्ठं शमदमादिकं आदरणीयं, न तु कादाचित्कं रागद्वेषादि इत्यर्थः। अत एवोक्तं मार्कण्डेये—

कस्य समाधिः भवति ? इत्यत्राह,—

**इषुकारवन्नैकचित्तस्य समाधिहानिः ॥१४॥**

यथा इषुकारः इषौ गतमनाः समीपे गच्छन्तं राजानं न बुद्धवान्, तथा एव एकाग्रमनसः न समाधिहानिः इति ॥१४॥

सत्त्वशुद्ध्यर्थं न व्रतादिभङ्गः कर्त्तव्यः, इत्याह,—

**व्रतनियमलङ्घनात् आनर्थक्यं, लोकवत् ॥ १५ ॥**

यथा लोके बहुभिः कृतसमयलङ्घनं सर्वे परित्यजन्ति, तथा व्रतादिलङ्घनात् वेदार्थवाह्यः भवति इति ॥ १५ ॥

तत्त्वज्ञानविस्मरणेन दुःखम् अवश्यं भवति, इत्याह,—

**तद्विस्मरणेऽपि, भेकीवत् ॥ १६ ॥**

कश्चित् नृपः मृगयां गतो वने सुन्दरीं कन्यामपश्यत्। तामपृच्छत् "का त्वम् ?" इति। सा प्राह "राजदुहिताऽहम्"। राजा प्राह "मां भजस्व"। सा प्राह "वाढ़, किन्तु समयं कुरु, त्वया जलं मम न दर्शनीयम्" इति। "एवम् अस्तु" इति उक्त्वा

"इदं श्रेयमिदं श्रेयमिति यस्तृषितश्चरेत्।
स तु कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात् ॥" इति ॥ १३ ॥

समाधिसिद्धये एकाग्रता आदरणीया इत्येतदुपपादयितुं सूत्रमवतारयति, इष्विति।—अत एवोक्तं—

"तद्वैवमात्मन्यवरुद्धचित्तो न वेद किञ्चित् बहिरन्तरं वा।
यथेषुकारो नृपतिं व्रजन्तं इषौ गतात्मा न ददर्श पार्श्वे ॥" सुगममन्यत् ॥ १४ ॥

चित्तशुद्ध्युपायं दर्शयन् सूत्रमवतारयति, सत्त्वेति।—तथा च, अङ्गीकृतानां नियमानां—शौचादीनां, लङ्घनात्—अननुष्ठानात्, आनर्थक्यं—नैष्फल्यं, तत्त्वज्ञान-सामग्र्या इति शेषः। लोकवदिति—लोके यथा कृतानां नियमानां—समयानां लङ्घने कृतलङ्घनकारिणं जनं सर्वे त्यजन्ति, एवम् अङ्गीकृतव्रतनियमाद्यननुष्ठायी तत्त्वज्ञानसामग्र्या विरहितो भवति ॥ १५ ॥

तस्याः पाणिं जग्राह। एवं गते काले क्रीड़या आयासिता "कुत्र जलम् ?" इति राजानं पप्रच्छ। राजा अपि सम्भ्रमात् समयं विस्मृत्य जलम् अदर्शयत्। सा च भेकराजदुहिता जलस्पर्शात् भेकी बभूव। राजा अपि जालादिना ताम् अन्विष्य अप्राप्य बहुदुःखम् अनुबभूव। तस्मात् तत्त्वाभ्यासविच्छेदो न कार्य्य इति ॥ १६ ॥

आख्यायिकाऽन्तरमाह,—

नोपदेशश्रवणेऽपि कृतकृत्यः परामर्शादृते, विरोचनवत् ॥ १७ ॥

न श्रवणमात्रात् मुक्तिः, किन्तु मननात् एव। यथा इन्द्र-विरोचनौ तत्त्वज्ञानाय ब्रह्मलोकं गतौ, ब्रह्मणा च उपदिष्टौ। विरोचनः तत्त्वज्ञानश्रवणात् स्वगृहम् आगतः न मननादि कृतवान्, अतः न अमुच्यत। इन्द्रस्तु ब्रह्माणम् आराधयन् बहुकालं मननम् अकरोत् ॥ १७ ॥

इन्द्रस्य किं वृत्तम ? इत्यत्राह,—

दृष्टस्तयोरिन्द्रस्य ॥ १८ ॥

तयोः मध्ये इन्द्रस्य बोधो दृष्टः। बहुकालाभ्यासेन ब्रह्म-प्रसादनात् मनननिदिध्यासनसाक्षात्कारात् सिद्धिः इति ॥ १८ ॥

---

तत्त्वज्ञानं न विस्मर्त्तव्यमित्युपपादयन्नाह, तत्त्वज्ञानेति।—सुगमम् ॥ १६ ॥

नोपदेशश्रवणमात्रेण कृतकृत्यता, अपि तु मननाद्यनुष्ठेयम इत्युपपादयितुं सूत्र-मवतारयति—आख्यायिकेति। परामर्शः—गुरुवाक्यतात्पर्य्यनिर्णायको विचारः, तं विना उपदेशवाक्यश्रवणेऽपि तत्त्वसाक्षात्कारो न भवति। प्रजापतेरुपदेशश्रवणेऽपि इन्द्र-विरोचनयोर्मध्ये विरोचनस्य परामर्शाभावेन भ्रान्त्यनिवृत्तिश्रुतेरित्यर्थः ॥ १७ ॥

परामर्शात् तत्त्वसाक्षात्कार इत्यत्र दृष्टान्तं दर्शयितुं सूत्रमवतारयति—इन्द्र-स्येति। तयोः—इन्द्र-विरोचनयोः, मध्ये इति शेषः। दृष्टः, कृतकृत्यभावः इति शेषः। सुगममन्यत् ॥ १८ ॥

ज्ञानप्राप्तिश्च कथम् ? इत्यत्राह,—

**प्रणतिब्रह्मचर्य्योपसर्पणानि कृत्वा सिद्धिर्बहु-कालात्, तद्वत् ॥ १९ ॥**

अप्रणतस्य अब्रह्मचारिणोऽनधिकारः । तद्वत्—इन्द्रवत् । यथा ब्रह्माऽऽराधनेन इन्द्रेण ज्ञानं प्राप्तं, तथा गुर्व्वाराधनेन अन्येन अपि ॥ १९ ॥

किं कालदेशनियमात् मुक्तिः, तथा च चिरक्षिप्रभावो न स्यात् ? इत्यत्राह,—

**न कालनियमः, वामदेववत् ॥२०॥**

आराधनार्थं कालनियमः, न मोक्षार्थं, वामदेवस्य तत्त्व-ज्ञानात् क्षिप्रं मुक्तिदर्शनात् ॥ २० ॥

ज्ञातं हि ध्यायेत्, न च आत्मा केनापि दृष्टः । दृष्टः चेत् किं ध्यानेन ? इत्यत आह,—

**अध्यस्तरूपोपासनात् पारम्पर्य्येण, यज्ञोपास-कानामिव ॥ २१ ॥**

---

ज्ञानप्राप्त्युपायं प्रकटयितुं सूत्रमवतारयति—ज्ञानप्राप्तिरिति । सूत्रतात्पर्य्यमाह, अप्रणतस्येति ।—तथा च, तत्त्वज्ञानार्थिना आचार्य्यप्रणतिपरेण ब्रह्मचारिणा च भाव्यम् ; अन्यथा तत्त्वज्ञानानुदयात् । सुगममन्यत् ॥ १९ ॥

मुक्तेः स्वरूपं कारणस्वरूपनिर्णयद्वारा प्रकटयितुं सूत्रमवतारयति, किमिति ।—यदि कालनियमात् देशनियमाद्वा मुक्तिः स्यात्, तदा कस्यचित् चिरेण, कस्यचित् क्षिप्रं मोक्षो भवतीति सिद्धान्तः न स्यादिति भावः । मोक्षोपयोगिवाक्येषु क्वचित् श्रुतः कालनियमः कथं तर्हि सङ्गच्छते ? इत्यत आह, आराधनार्थमिति ।—तथा च, चित्तशुद्धये नियतस्याराधनादेः कालनियमः सम्भवति, न तु तस्य साक्षात् मुक्तौ उप-योगित्वम् इति ध्येयम् ॥ २० ॥

आत्मध्यानविधौ प्रमाणाद्यनुपलब्धत्वम् अप्रामाण्यं शङ्कमानानां मतं निरसितुं

धर्मश्च केन दृष्टः? तथाऽपि धर्मलाभाय यज्ञोपासनं, पारम्पर्य्येण देवतोद्देशेन हविस्त्यागात्। अत्रापि गुरुणा यत् अध्यस्तं रूपं, तत्स्वरूपोपासनात् पारम्पर्य्येण तद्रूपं प्रकाशते। दृष्टश्च समानवस्तुचिन्तायां समानानुस्मरणम्। तथा च—

"सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः।
अतो नातिप्रसङ्गोऽस्ति स्वप्नादौ भावनाबलात्॥" २१॥

ब्रह्मादिलोकलाभात् कृतकृत्यस्य किम् आत्मज्ञानेन? इत्यत्राह,—

इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतः, जन्मश्रुतेः॥ २२॥

अग्निहोत्रादिना ब्रह्मलोकप्राप्तिः, कर्मजश्च क्षीयते इति

---

सूत्रमवतारयति, अतेति।—यथा अदृष्टस्यापि धर्मस्य लाभाय यज्ञोपासनं, तथा प्रकृतिविविक्तत्वेन अप्रत्यक्षीकृतस्यापि आत्मनोऽपरोक्षानुभूतये तद्ध्यानं शास्त्रविहितं कर्त्तव्यमेव। नातः ध्यानादिबोधकविधीनाम् अप्रामाण्यम्। अतो यज्ञोपासनवत् तदनुष्ठानपरम्। कथं तदनुष्ठानम्? इत्यपेक्षायामाह, पारम्पर्य्येणेति।—पारम्पर्य्यमत्र—शास्त्रबोधितेतिकर्त्तव्यतारूपं विज्ञेयम्। प्रकृते किम्? इत्यत आह, अत्रापीति।—अध्यस्तम—उपदेशवाक्यादिना मनसि आरोपितम्। अत्र "तत्सदृशोपासनात्" इति पाठो न सङ्गतः, "तत्स्वरूपोपासनात्" इत्ययमेव पाठः सङ्गतः। उपासनमत्र ध्यानात्मकं विज्ञेयम्। समानवस्तुचिन्तायाम् इति।—अत्र परोक्षत्वेनापरोक्षत्वेन च विरुद्धधर्मद्वयेन उपहितत्वात् एकस्यापि आत्मनः स्वस्मिन् साम्यं कथञ्चित् सङ्गमनीयम्। स्मृतिबीजस्य—संस्कारस्य इत्यर्थः। बोधकाः,—उद्बोधका इत्यर्थः। तथा सदृशवस्तुज्ञानम् अदृष्टविशेषः चिन्ता च इत्येवमाद्याः उपायाः स्मृतिहेतुभूतसंस्काराणाम् उद्बोधकाः भवन्ति इति श्लोकार्थः॥ २१॥

ननु मोक्षहेतुभूततत्त्वज्ञानेनालं, ब्रह्मलोकलाभेनापि कृतकृत्यतासम्भवात्? इति शङ्कां निराकर्त्तुं सूत्रमवतारयति—ब्रह्मादीति। इतरलाभे—मोक्षभिन्नब्रह्मलोकादिरूपफललाभे इत्यर्थः। आवृत्तिः, संसारे इति शेषः। तत्र प्रमाणाऽऽकाङ्क्षायामाह, पञ्चाग्नीति।—पञ्चाग्नियोगतः,—पञ्चाग्न्युपासनात्। जन्मश्रुतेरिति—"इमं मानवम्

पुनरावृत्तौ जन्मश्रुतिः,—"तद्यथेह कर्मजितो लोकः क्षीयते, एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इति [ छान्दो० उप० ८ अध्या० १ खण्ड० ६ मन्त्रः ], "न कर्मणा न प्रजया धनेन, त्यागेनैके अमृतत्वमानशुः" इति [महा० नार० १०।५] ॥२२॥

विरक्तस्य किं स्वरूपम्? इत्यत्राह,—

**विरक्तस्य हेयहानमुपादेयोपादानं, हंसक्षीरवत् ॥ २३ ॥**

यद्यपि सर्वेषां हेयहानम् उपादेयोपादानं, तथाऽपि प्रकरणविशेषात् हेयः संसारः, उपादेयो मोक्षः इति द्रष्टव्यम् ॥ २३ ॥

अत्र युक्तिमाह,—

**लब्धातिशययोगात्, तद्वत् ॥ २४ ॥**

हंसवत्, हंसस्य एव अतिशयशक्तिः, येन मिश्रितम् अपि क्षीरं पिबति, जलं त्यजति। तथा लब्धातिशयस्य पुंसः संसारः हेयः, उपादेयो मोक्षः इति ॥ २४ ॥

आवर्त्तं नावर्त्तन्ते" [ छान्दो० उप० ४ अध्या० १५ खण्ड० ६ मन्त्रः ] इति श्रुतौ इममिति विशेषणात् मानवान्तरे जन्मप्रतीतिरिति भावः। सुगममन्यत् ॥ २२ ॥

तत्र तत्त्वज्ञानं विरक्तस्यैव इति स्थितम्; इदानीं तस्यैव स्वरूपं प्रतिपादयितुं सूत्रमवतारयति—विरक्तस्येति। हेयहानं—प्रेयःपरित्यागः इत्यर्थः। उपादेयोपादानं—मोक्षरूपश्रेयसः उपादानमित्यर्थः। ननु जीवमात्रस्य हेयहानम् उपादेयोपादानं साधारणमिति, तेन विरक्तस्य न किञ्चित् वैलक्षण्यं प्रतिपाद्यते इति शङ्कते—यद्यपीति। सिद्धान्तमाह, तथाऽपीति।—प्रकरणविशेषात्—प्रेयःश्रेयसोः प्रकरणात् इत्यर्थः ॥ २३ ॥

युक्त्युपन्यासेन सूत्रोक्तहंसक्षीरदृष्टान्तं विशदयितुं सूत्रान्तरमवतारयन्नाह—अत्रेति। तद्वत् इति पदं व्याचष्टे—हंसवदिति। लब्धातिशयस्य—विरक्तस्य इत्यर्थः ॥ २४ ॥

सरागस्यापि मुक्तिः भविष्यति, इत्यत्राह,—

**न कामचारित्वं रागोपहते, शुकवत् ॥ २५ ॥**

रागोपहतस्य कामचारित्वमेव नास्ति, किं पुनः मुक्तिः ? इति । यथा व्यासस्य सरागस्य न मुक्तिः इति । तत्सुतस्य शुकस्य वीतरागत्वात् मुक्तिः भूता, एवम् ॥ २५ ॥

बन्धः कथम् ? इत्यत्राह,—

**गुणयोगात् बन्धः, शुकवत् ॥ २६ ॥**

यथा शुकः पक्षी गुणयोगात् बन्धम् आप्नोति, तथा गुणयोगात् पुमान् अपि बन्धम् आप्नोति ॥ २६ ॥

भोगादेव वैराग्यं कालवशात् भविष्यति, किं ज्ञानेन ? इत्यत्राह,—

**न भोगाद्रागशान्तिः, मुनिवत् ॥ २७ ॥**

न मुनेः अपि भोगात् रागशान्तिः, किं पुनः अन्यस्य ? यथा कण्वसौभरिप्रभृतयः ॥ २७ ॥

विषयिणां कथं वैराग्यं भविष्यति ? इत्यत्राह,—

**दोषदर्शनादुभयोः ॥ २८ ॥**

सत्यपि रागे भवतु मोक्षः, का क्षतिः ? इति भ्रान्तिनिराकरणाय सूत्रमवतारयति—सरागस्येति । दृष्टान्तं विशदीकरोति—यथेति ॥ २५ ॥

बन्धकारणस्वरूपनिरूपणाय सूत्रमवतारयति—बन्ध इति । सूत्रे गुणशब्दः श्लिष्टः; तथा हि, यथा मधुरभाषणादिगुणयोगात् शुकपक्षी बध्यते, एवं सत्त्वरजस्तम-आत्मक-गुणयोगात् जीवोऽपि बन्धमाप्नोति ॥ २६ ॥

वैराग्यकारणनिरूपणपरं सूत्रमवतारयति—भोगादेवेति । किं ज्ञानेनेति—अत्र ज्ञानपदं विषयदोषदर्शनपरम् । मुनिवत् इति दृष्टान्तं विशदयितुमाह—न मुनेरिति ॥ २७ ॥

कारणाभावप्रतिषेधानन्तरं सम्प्रति वैराग्यस्य कारणस्वरूपं प्रदर्शयितुं सूत्रमवतार-

उभयोः आत्मनः विषयस्य च। आत्मनः दोषः सङ्गात् नरकपातः गर्भवासादिश्च। विषयदोषः परिणतिविरसत्वादिः ॥ २८ ॥

उपदेशानधिकारिणं पुरुषमाह,—

**न मलिनचेतस्युपदेशवीजप्ररोहः, अजवत् ॥ २९ ॥**

यथा असंस्कृते क्षेत्रे न वीजप्ररोहः, तथा रागादिमलिन-चेतसि न उपदेशवीजप्ररोहः। अजवत् इति—अजनाम्नि नृपे भार्य्याशोकार्त्ते यथा वसिष्ठेन उपदेशः दत्तः न स्थिरो-बभूव ॥ २९ ॥

रागादिमलिने चेतसि न आभासज्ञानमपीत्याह,—

**नाभासमात्रमपि, मलिनदर्पणवत् ॥ ३० ॥**

यथा मलिने दर्पणे मुखाभासमपि न प्रतिभाति, तथा प्रधानप्रतिविम्बितत्वात् आत्मनः प्रधानकार्य्यम् आत्म-ज्ञानम् ॥ ३० ॥

ननु महान् एव कारणरूपत्वात् आत्मा अस्तु ? इत्यत्राह,—

---

यति—विषयिणामिति। सूत्रे उभयोरिति पदं व्याचष्टे—उभयोरिति ॥ २८ ॥

कं प्रति उपदेशः कर्त्तव्यः ? इति प्रतिपादनाय सूत्रमवतारयति—उपदेशेति। अजवत् इति दृष्टान्तं विशदयन्नाह, अजनाम्नीति।—भार्य्याशोकार्त्ते इति—दिवःपतितपारिजातमालासम्पर्कात् मृतायामिन्दुमत्यां शोकार्त्ते अजे इति भावः। वसिष्ठेनेत्यत्र शिष्यद्वारेणेति पदं योजनीयं, रघुवंशे तथा दर्शनात् ॥ २९ ॥

चेतसो रागमलिनत्वे ज्ञानोत्पत्त्ययोग्यत्वं दर्शयितुं सूत्रमवतारयति—रागादीति। दृष्टान्तं विशदयति—यथेति। प्रधानप्रतिविम्बितत्वादिति—प्रधाने—बुद्ध्यात्मना परिणते, प्रतिविम्बितत्वात्—चिदाभासरूपेणावच्छिन्नत्वात्। प्रधानकार्य्यं—बुद्धिरूपेण परिणतस्य प्रधानस्य वृत्तिरित्यर्थः। आत्मज्ञानम्—आत्मविषयिणी बुद्धिवृत्तिरित्यर्थः; तथा च, बुद्ध्यात्मना परिणतस्य प्रधानस्य रागाद्युपहतत्वेन मलिनस्य यथावत् स्वरूपात्मप्रतिविम्बग्रहणासामर्थ्यम् इति तात्पर्य्यम् ॥ ३० ॥

महतः आत्मत्वमस्तु इति शङ्कां निराकर्त्तुं सूत्रमवतारयति—नन्विति। यथा

**न तज्जस्यापि तद्रूपता, पङ्कजादिवत् ॥३१॥**

न कार्य्यमेव कारणं भेदात् । न हि पङ्कजः एव पङ्कः ॥३१॥

अणिमादिविभूतिसिद्धस्यापि न कृतकृत्यता, इत्याह,—

**न भूतियोगे कृतकृत्यता, उपास्यसिद्धिवत् उपास्यसिद्धिवत् ॥ ३२ ॥**

यथा गुरूपासनया तत्त्वज्ञानेन सिद्धस्य अनावृत्तेः कृतकृत्यता, तथा न भूतियोगेन, पुनरावृत्तेः । उपास्यसिद्धिवत् इति वीप्सा अध्यायपरिसमाप्तौ ॥ ३२ ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तौ आख्यायिकाऽध्यायश्चतुर्थः ॥ ४ ॥

---

पङ्काज्जातस्यापि कस्यचित न पङ्करूपता, तथा प्रकृतिजन्यस्यापि न संसाररूपत्वम्; तथा च, कार्य्यं कारणस्य भेदाभेद एव साङ्ख्यानामभिमतः ॥ ३१ ॥

अणिमादिविभूतिपर्य्यन्तत्वमेव पुरुषार्थनिष्ठायाः अस्तु, किमतःपरेण मोक्षेण फलं ? इत्याशङ्कां निराकर्त्तुं सूत्रमवतारयति—अणिमादीति । सिद्धस्य—मुक्तिं प्राप्तस्य । भूतियोगेन—अणिमाद्यैश्वर्य्ययोगेन, तथा हि, अणिमादिसिद्धीनां क्षयिष्णुत्वात् ताभिर्न पुरुषस्य कृतकृत्यता स्यादिति भावः ॥ ३२ ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रटिप्पण्यां टीकायाम् चतुर्थोऽध्याये ... [sic]

आख्यायिकाऽध्यायश्चतुर्थः ।

# पञ्चमोऽध्यायः ।

आख्यायिकाऽनन्तरं परपक्षनिरासार्थं पञ्चमाध्यायारम्भः ।

**मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्चेति ॥ १ ॥**

कृतेऽपि मङ्गले ग्रन्थापरिसमाप्तेः अकृतेऽपि समाप्तेः किं मङ्गलेन ? इति यैः उक्तं, तत् अनेन निरस्तम् ॥ १ ॥

पूर्वं सिद्धम् ईश्वरासत्त्वम् इदानीं न्यायेनाह,—

**नेश्वराधिष्ठिते फलसम्पत्तिः, कर्मणा तत्-सिद्धेः ॥ २ ॥**

---

आरम्भसूत्रे सूत्रकृता अथ-शब्दोपन्यासः कृतः, स च मङ्गलाय इति सूचितम् । तदेतत् ग्रन्थादौ मङ्गलाचरणमफलमिति नाचरणीयम् इति मन्वानानां मतं निराकर्तुं सूत्रमाह, मङ्गलेति ।—सूत्रे प्रयुक्तं शिष्टपदम्—इष्टसाधनत्वांशे भ्रमरहित-पुरुषपरम् ; तथा च,येषाम् इष्टसाधनता धीः न कदाऽपि व्यभिचरति,ते एवात्र शिष्टा इति ध्येयम् । शिष्टाचारदर्शनादेव मङ्गलस्य ग्रन्थादौ कृतस्य सफलत्वम् अनुमेयम् इति सूचयन्नाह, फलदर्शनादिति ।—फलदर्शनं—सफलत्वानुमानम् । तत्सफलत्वे प्रमाणान्तरं सूचयन्नाह,श्रुतित इति ।—श्रुतिः,—वेदः, शिष्टाचारानुमितमङ्गलनिष्ठेष्ट-साधनताबोधकवेद इति भावः । मङ्गलस्य ग्रन्थकृदभीप्सितसमाप्तिफलं प्रति न सम्भवति कारणत्वम्, उभयतो व्यभिचारात् इति पूर्वपक्षं प्रकटयन्नाह कृतौ, कृते-ऽपीति ।—तथा च, सत्यपि मङ्गले बहुषु पुस्तकेषु समाप्तिरूपफलादर्शनेनान्वयव्यभि-चारात्, अकृतमङ्गलस्यापि ग्रन्थस्य निर्विघ्नं परिसमाप्तिदर्शनेन व्यतिरेकव्यभि-चाराच्च न मङ्गलाचरणं समाप्तिफलकम् इति ग्रन्थादौ अथ-शब्दोपादानेन कृतं मङ्गलं निरर्थकमेवेति पूर्वपक्षिणामाशयः । अनेन—सूत्रेणेत्यर्थः, निरस्तमिति । अत्रायं-माशयः,—अङ्गवैकल्यकल्पनेन अन्वयव्यभिचाराशङ्का निराकरणीया, जन्मान्तरीय-मङ्गलकल्पनेन च व्यतिरेकव्यभिचाराशङ्का परिहरणीया इति भावः ॥ १ ॥

ईश्वरासिद्धिः पूर्वं सूचिता, इदानीं युक्तिभिस्तदव्यवस्थापनाय सूत्रमवतारयति—

यदि ईश्वरः स्वतन्त्रः कर्त्ता, कर्मणा विनाऽपि कुर्य्यात्? अथ कर्मसहकारी कुरुते, कर्मैव अस्तु, किम् ईश्वरेण? न च सहकारी प्रधानशक्तिं बाधते, स्वातन्त्र्यविघातात्। किञ्च स्वार्थपरार्थाभ्यां प्रवृत्तिः दृष्टा, न च ईश्वरस्य स्वार्थम् अस्ति; परार्थत्वे कारुणिकस्य दुःखमयसृष्ट्यनुपपत्तिः। न च परार्थप्रवृत्तिः, परोपकारादिनाऽपि स्वार्थलाभात् प्रवृत्तेः; तस्मात् कर्मैव जगत्कारणम् अस्तु? ॥ २ ॥

एतद्दूषयति,—

**स्वोपकारादधिष्ठानं, लोकवत् ॥ ३ ॥**

न च नित्यस्य स्वोपकारः सम्भवति ॥ ३ ॥

स्वोपकार एव भविष्यति, इत्यत्राह,—

**लौकिकेश्वरवदितरथा ॥ ४ ॥**

असर्वज्ञ इत्यर्थः ॥ ४ ॥

---

पूर्वसिद्धमिति। स्वतन्त्रः,—अदृष्टनिरपेक्षः इत्यर्थः। कुर्य्यात्, क्षित्यादिकमिति शेषः। कर्मैव इत्यत्र एवकारेण ईश्वरव्यवच्छेदः। अस्तु, कारणमिति शेषः। कर्मणः सहकारित्वाङ्गीकारे प्रकृतेः का हानिः स्यात्? इति प्रतिपादयितुमाह, न चेति।—तथा च,जीवादृष्टानाम् ईश्वरसहकारित्वाङ्गीकारे तस्य स्वातन्त्र्यं व्याहन्येत, अन्यानिरपेक्षकर्तृत्वस्यैव स्वातन्त्र्यव्यवहारप्रयोजकत्वादिति भावः। ननु कर्मसहकारित्वेऽपि नेश्वरस्य स्वातन्त्र्यहानिः, सिद्धसकलकार्य्यानुकूलज्ञानेच्छाप्रयत्नवत्त्वमेव ईश्वरस्य स्वातन्त्र्यम् अस्तु, तेनैव प्रकृतनिर्वाहात्? इत्यतः दोषान्तरम् ईश्वरसिद्धौ अवतारयति—किञ्चेति। ईश्वरस्य स्वार्थाङ्गीकारे तस्य ईश्वरत्वमेव जीववत् न सिध्येत् इत्याह—न चेति। परार्थे प्रवृत्तिरपि स्वार्थमन्तरेण चेतनस्यानुपपन्ना इत्याह, न चेति।—स्वार्थलाभादिति—सन्तोषसुखादिरूपस्वार्थलाभादित्यर्थः ॥ २ ॥

ईश्वरस्य स्वार्थासम्भवमेव द्योतयितुं सूत्रमवतारयति,एतदिति।—नित्यस्य सर्वशक्तिमतः स्वोपकारः स्वीकर्त्तुम् अनुचित इति भावः। स्वोपकारादिति फले हेतौ पञ्चमी॥३॥

कथमनुचितः? इति प्रतिपादयितुं सूत्रमवतारयति—स्वोपकार एवेति। इतरथा—स्वोपकारस्वीकारे, लौकिकेश्वरवत्, अनाप्तकामत्वापत्तिरिति शेषः ॥ ४ ॥

दूषणान्तरमाह,—

**पारिभाषिको वा ॥ ५ ॥**

प्रकृतिच्छायाऽऽपत्त्या तत्कर्तृत्वात् आत्मा एव कर्त्ता इति तस्य ईश्वरसंज्ञा इति परिभाषा इति ॥ ५ ॥

हेत्वन्तरमाह,—

**न रागादृते तत्सिद्धिः, प्रतिनियतकारणत्वात् ॥ ६ ॥**

अविनाभावस्य कारणत्वव्यभिचारे सर्वत्र अनाश्वासः। रागस्य प्रवृत्तिनिमित्तम् इति, तं विना कथं जगन्निर्मातृत्वम्? न च मुक्तस्य रागः अस्ति ॥ ६ ॥

रागः एव भविष्यति, इत्यत्राह,—

**तद्योगेऽपि न नित्यमुक्तः ॥ ७ ॥**

तद्योगेऽपि—रागयोगेऽपि ॥ ७ ॥

प्रधानशक्तियोगात् कर्तृत्वं भविष्यति, इत्यत्राह,—

---

लौकिकेश्वरवैलक्षण्ये पारिभाषिक एव ईश्वरो भवतु? इत्याशङ्कां निराकर्तुं सूत्रमवतारयति—दूषणान्तरमिति। सूत्रे वा-कारः एवार्थकः। फलितमाह—प्रकृतिच्छायाऽऽपत्त्या इति ॥ ५ ॥

कथं पारिभाषिकः? इति प्रकटयितुं सूत्रमवतारयति—हेत्वन्तरमिति। अविनाभावस्येति—कार्य्याव्यवहितप्राक्क्षणे कार्य्याधिकरणे नैयत्येन वर्त्तमानस्य इति भावः। तथा च, 'न विना भावो येन' इति व्यधिकरणबहुव्रीहिणा सिद्धम् अविनाभाव इति पदम् अत्र द्रष्टव्यम्। अत्रायमाशयः,—न रागात् ऋते कर्तृत्वसिद्धिः, कृतिरागयोः कार्य्यकारणभावात् ॥ ६ ॥

अथास्तु राग एव परमेश्वरस्य जगत्सृष्टौ कारणम्? इति शङ्कानिराकरणाय सूत्रमवतारयति—राग एवेति। सूत्रे तद्योगे इति पदं व्याचष्टे, रागयोगे इति।—अपिस्त्वर्थे; स्यादिति पदं पूरणीयम्; तथा च, रागयोगे अङ्गीकृते ईश्वरो न नित्यमुक्तः स्यादिति सूत्रार्थः ॥ ७ ॥

नन्वस्तु प्रधानशक्तियोगात् ईश्वरस्य कर्तृत्वम् इत्याशङ्कानिराकरणसूत्रमवतार-

**प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ॥ ८ ॥**

"असङ्गो ह्ययं पुरुषः" [ बृह० उप० ४ अध्या० ३ ब्रा० १५ मन्त्रः ] इति तद्विरोधापत्तिः ॥ ८ ॥

न प्रधानसङ्गः, किन्तु प्रधानसत्तामात्रेण कर्त्तृत्वं भविष्यति इत्यत्राह,—

**सत्तामात्राच्चेत्, सर्वैश्वर्य्यम् ॥ ९ ॥**

सर्वात्मनः प्रति प्रधानसत्तायाः अविशेषात् सर्वात्मनाम् ईश्वरत्वम् ॥ ९ ॥

ईश्वरसाधनानि सन्ति । तत् कथम् ? इत्यत्राह,—

**प्रमाणाभावान्न तत्सिद्धिः ॥ १० ॥**

प्रत्यक्षप्रमाणाभावात् ॥ १० ॥

अनुमानं भविष्यति इत्यत्राह,—

**सम्बन्धाभावान्नानुमानम् ॥ ११ ॥**

प्रत्यक्षपूर्वकत्वात् व्याप्तेः, तदभावात् कुतः सम्बन्धग्रहः ? न च असाधारणस्य सम्बन्धग्रहः ॥ ११ ॥

वृत्ति—प्रधानेति । अस्तु सङ्गापत्तिः, का क्षतिः ? इत्यत आह, असङ्गो ह्ययमिति ।— तथा च, प्रधाननिष्ठा या कर्त्तृशक्तिः, तद्योगात् यदि ईश्वरस्य कर्त्तृशक्तित्वम् अङ्गी-क्रियेत, तदा प्रधानेन सह तस्य सङ्गः प्रसज्येत ; स च अनिष्टः, "असङ्गो ह्ययं पुरुषः" इति श्रुतिविरोधादिति भावः ॥ ८ ॥

ननु मा भवतु प्रधानसङ्गः, किन्तु प्रधानशक्तिमात्रमेव ईश्वरस्य कर्त्तृत्वे प्रयोजक-मस्तु इत्याशङ्कां निराकर्त्तुं सूत्रमवतारयति—न प्रधानेति । सर्वैश्वर्य्यम्—अविशेषात् सर्वेषामेव जीवात्मनाम् ऐश्वर्य्यम्—ईश्वरत्वं, प्रसज्येत इति शेषः ॥ ९ ॥

ईश्वरसिद्धौ प्रमाणान्यपि दुरुपपादनीयानि इति दर्शयितुं सूत्रमवतारयति, ईश्वरेति ।—साधनानि—प्रमाणानि । सुगममन्यत् ॥ १० ॥

ईश्वरसिद्धौ अनुमानमपि न सम्भवतीति दर्शयितुं सूत्रमवतारयति—अनुमानमिति । प्रत्यक्षपूर्वकत्वात्—साध्यहेत्वोः सहचारादिदर्शनरूपप्रत्यक्षोपजीवकत्वादित्यर्थः । तद-

शाब्दं प्रमाणं भविष्यति इत्यत्राह,—

**श्रुतिरपि प्रधानकार्य्यत्वस्य ॥ १२ ॥**

"प्रधानात् जगत् उत्पद्यते" इति श्रुतिः अस्ति। तस्मात् ईश्वरसाधकप्रमाणानि आभासानि ॥ १२ ॥

अविद्यायोगात् आत्मनः कर्त्तृत्वम् इति केचित्। तत्र आह,—

**नाविद्याशक्तियोगो निःसङ्गस्य ॥ १३ ॥**

व्यक्तम् ॥ १३ ॥

दूषणान्तरमाह,—

**तद्‌योगे तत्सिद्धावन्योऽन्याश्रयत्वम् ॥ १४ ॥**

अविद्यया विना न सृष्टिः, सृष्ट्या विना न अविद्या, इति अन्योऽन्याश्रयत्वम् ॥ १४ ॥

अनादित्वात् बीजाङ्कुरवत् न अन्योऽन्याश्रयत्वम् इति आह,—

**न बीजाङ्कुरवत्, सादिसंसारश्रुतेः ॥ १५ ॥**

---

भावात्—तादृशसहचारदर्शनाभावात्। कुतः,—कस्मात् प्रमाणात्? सम्बन्धवद्धः,—व्याप्तिवद्धः। असाधारणस्य—सहचारग्रहाविषयस्य ॥ ११ ॥

माऽस्तु अनुमानं, शब्द एव तत्र प्रमाणमस्तु? इत्याशङ्कां निराकर्त्तुं सूत्रमवतारयति, श्रान्तिमिति।—श्रुतिर्जगतां नेश्वरकार्य्यत्वस्य प्रतिपादिका वर्त्तते, प्रत्युत "अजामेकाम्" इत्यादिप्रधानकार्य्यत्वस्यैव साधिका अस्ति इत्याशयः ॥ १२ ॥

अविद्याशक्तियोगात् ईश्वरस्य कर्त्तृत्वम् इति केषाञ्चित् मतं, तद्दूषणाय सूत्रमवतारयति—अविद्यायोगादिति ॥ १३ ॥

अविद्याशक्तियोगादसङ्गस्य आत्मनः कर्त्तृत्वाभ्युपगमे दोषान्तरं दर्शयितुं सूत्रमवतारयति—दूषणान्तरमिति। अन्योऽन्याश्रयत्वं, कर्त्तृत्वसिद्धौ अविद्यायोगादिसिद्धिः आपः ॥ १४ ॥

नासौ अन्योऽन्याश्रयः दोषावहः बीजाङ्कुरवत्, अविद्यायोग-कर्त्तृत्वयोरनादित्वात्

भवेत् एवं, यदि अनादिः संसारः। किन्तु सादिः संसारः। श्रुतिश्च—"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः॥" इति [शुक्ल० यजु० १७ अध्या० १९ क०]। तस्मात् प्रलये प्रवाहविच्छेदः इति॥ १५॥

अविद्यास्वरूपमाह,—

विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः॥ १६॥

विद्यातः अन्यत्वे—ब्रह्मणोऽपि विद्यातोऽन्यत्वे अविद्यात्वं स्यात्, ततश्च ब्रह्मत्वबाधः इति॥ १६॥

इतीमामाशङ्कां निराकर्तुं सूत्रमवतारयति, अनादित्वादिति।—संसारस्य अनादित्वं नास्मत्सिद्धान्तः, किन्तु तस्य सादित्वमेव इति भावः। तत्सादित्वे प्रमाणभूतां श्रुतिम् उपन्यस्यति, श्रुतिश्चेति।—नन्वेवम् इयमेव श्रुतिः ईश्वरस्य जगत्कर्तृत्वे प्रमाणं भविष्यति इति स्वपक्षोच्छ्रायात एव आपतित इति चेन्न, अस्याः श्रुतेः समष्टिमहदात्मना परिणता प्रकृतिरेव विशुद्धसत्त्वप्रधानतया देवपदवाच्या इत्यर्थाङ्गीकारात्। अत्र 'बाहुभ्याम्' इति पदं शुभाशुभकर्मणी प्रतिपादयति। 'पतत्रैः' इति पदं—साधनैरित्यर्थकं, तानि च साधनानि सत्त्वरजस्तमांसि एव। प्रथम 'सं'शब्दस्य 'धमति' इत्यनेनान्वयः, द्वितीय-'सं'शब्दस्य च 'जनयन्' इत्यनेनान्वयः; तथा च, समष्टिजीवोपाधिमहत्तत्त्वरूपेण परिणता सत्त्वप्राधान्येन द्योतनात्मिका प्रकृतिः सृज्यमानप्राणिनिचयशुभाशुभकर्मरूप-बाहुभ्यां संधमति—सृष्ट्यनुकूलवैषम्यरूपं शङ्खं वादयति इत्यर्थः। तदनन्तरं विक्षोभप्राप्तैः सत्त्वरजस्तमोभिः साधनैः सैव द्यावाभूमी जनयन्ती, सृष्टिं प्रसारयति इति शेषः। तस्मात्—प्रवाहस्य सादित्वादेव। प्रलये—महाप्रलये इत्यर्थः॥ १५॥

प्रसङ्गेन अविद्याया ब्रह्माभिन्नत्ववादं दूषयितुं तत्स्वरूपप्रदर्शनपरं सूत्रमवतारयति—अविद्यास्वरूपमिति। विद्यातः,—ज्ञानस्वरूपाद्ब्रह्मणः, अपि च अविद्यायाः भिन्नत्वे भेदप्रतियोगित्वानुयोगित्वरूपवस्तुपरिच्छेदापत्तिः इति सूत्रतात्पर्यम्। तत्र विद्यातोऽन्यत्वे इति सूत्रांशः,—ब्रह्मणोऽपि विद्यातोऽन्यत्वे इत्यर्थकः इति प्रदर्श्य तत्र दोषं दर्शयति, अविद्यात्वं स्यादिति।—तथा च, ब्रह्म एव विद्याभिन्नरूपाविद्यात्मकं स्यादिति अस्मिन् पक्षे दोष इत्याशयः। अस्तु तथैवेत्यत आह—ततश्चेति॥ १६॥

युक्त्यन्तरमाह,—

**अबाधे नैष्फल्यम् ॥ १७ ॥**

यदि विद्यया अविद्या न बाध्यते, विद्या एव न भविष्यति इति ॥ १७ ॥

बाध्यते एव इत्यत्राह,—

**विद्याबाध्यत्वे जगतोऽप्येवम् ॥ १८ ॥**

जगतोऽपि अविद्यात्वम् ॥ १८ ॥

अस्तु जगतोऽपि अविद्यात्वम् ? इत्यत्राह,—

**तद्रूपत्वे सादित्वम् ॥ १९ ॥**

अनादिः इयम् अविद्या। जगतः तद्रूपत्वे अविद्यायाः सादित्वम् ॥ १९ ॥

न कर्मणः जगत्कारणत्वं, स्वभावात् एव जगत् उत्पद्यते ? इत्यत्राह,—

**न धर्मापलापः, प्रकृतिकार्य्यवैचित्र्यात् ॥ २० ॥**

प्रकृतेः नित्यत्वात् स्वभावस्य एकत्वात् धर्माभावात विचित्र-

---

विद्यया अविद्याया अबाधो बाधो वा ? आद्ये निराकरणसूत्रमवतारयति, युक्त्यन्तरमिति।—न भविष्यति, फलाय इति शेषः ; तथा च, विद्यायाः नैष्फल्यमेव अस्मिन् पक्षे दोष इति ज्ञेयम ॥ १७ ॥

अन्त्यं निराकर्त्तुं सूत्रमवतारयति, बाध्यते इति।—अविद्याया इव जगतोऽपि बाधः स्यादित्यर्थः; तथा च, सत्तया जगतः प्रतीतिः अनुपपन्ना स्यादिति भावः ॥ १८ ॥

अस्तु जगतोऽपि बाध्यत्वं, का क्षतिः ? इत्यत: सूत्रमवतारयति—अस्त्विति। तद्रूपत्वे—जगतो बाध्यत्वे इत्यर्थः ; तथा च, बाध्यत्वं नाम—ध्वंसप्रतियोगित्वं, तच्चेत् अविद्याकार्य्यस्य जगतः, तदा अविद्याया अपि तथात्वं स्वीकरणीयम्। अस्तु, का क्षतिः ? इति चेत्, ध्वंसप्रतियोगिनः भावस्य अनादित्वानुपपत्तेः अविद्यायाः अनादित्व-प्रवादः व्याहन्येत इति न तथा भवाद्भिरङ्गीकर्त्तुम उचितमिति भावः ॥ १९ ॥

स्वभावादेव जगदुत्पद्यते इति नास्तिकमतं निराकर्त्तुं सूत्रमवतारयति, न कर्मण

कार्य्यानुत्पत्तिः, तस्मात् धर्मभेदेन कार्य्यवैचित्रम्; न धर्मापलापः ॥ २० ॥

धर्मसिद्धौ प्रमाणमाह,—

**श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥ २१ ॥**

श्रुतीति शाब्दं प्रमाणं दर्शितं, लिङ्गेति अनुमानम्, आदिशब्दात योगिप्रत्यक्षं दर्शितम्, एभिः धर्मसिद्धिः ॥ २१ ॥

यदि देशकालयोः न कारणत्वं, कथं काश्मीरे कुङ्कुमं, वसन्ते चूतमुकुलोत्पत्तिः ? इत्याह,—

**न नियमः, प्रमाणान्तरावकाशात् ॥ २२ ॥**

न अदृष्टम् एव कारणम् इति नियमः ; किन्तु अदृष्टं सह-कारिकारणम्, अन्येषाम् अपि कारणत्वं, प्रमाणसद्भावात् ॥ २२ ॥

दुःखमयसंसारदर्शनात् दुरितादृष्टम् एव अस्तु ? इत्यत्र आह,—

**उभयत्राप्येवम् ॥ २३ ॥**

सुखस्यापि दर्शनात् शुभादृष्टम् एव अस्तु ॥ २३ ॥

दुःखाभावे सुखाभिमानात् तत्र अदृष्टशब्दः मुख्यः, सुख-कारणे गौणः, इत्यत्राह,—

इति।—कर्मणः,—धर्माधर्मरूपस्य। कार्य्यवैचित्र्यं प्रकृतिमात्रेण न सम्भवति, तस्याः एकस्वभावत्वात्, अपि तु धर्मवैचित्र्येण इत्यवश्यमङ्गीकार्य्यमिति भावः ॥ २० ॥

धर्मस्य स्वरूपमेव असिद्धम् इति शङ्कां निराकर्त्तुं सूत्रमवतारयति—धर्मेति। सूत्रस्य तत्पदेन धर्मस्य ग्रहणम्। धर्मपदञ्चात्र—अदृष्टपरम्। शेषम् आदिपदं व्याचष्टे—आदिशब्दादिति ॥ २१ ॥

देशकालयोः कारणत्वव्यवस्थापनाय सूत्रमवतारयति—यदीति। नियमपदार्थं व्याचष्टे—नादृष्टमिति। प्रमाणसद्भावात्—अनुमानरूपप्रमाणस्य विद्यमानत्वात् ॥२२॥

जगती दुःखमयत्वदर्शनात् दुरितादृष्टमेव कारणमस्तु, किं शुभादृष्टेन ? इति शङ्कानिराकरणाय प्रतिबन्धीसूत्रमवतारयति—दुःखमयेति। सुगममन्यत् ॥ २३ ॥

जगती दुःखमयत्वमेव, दुःखाभावेनैव सुखाभिमानोपपत्तेः इति मतं निराकर्त्तुं

## अर्थात् सिद्धिश्चेत् समानमुभयोः ॥ २४ ॥

एतद्विपरीतसम्भवात् उभयोः तुल्यत्वम् इति ॥ २४ ॥

धर्मादीनाम् आत्मधर्मत्वं निषेधति,—

## अन्तःकरणधर्मत्वं धर्मादीनाम् ॥ २५ ॥

बुद्धिधर्मत्वम् । आत्मधर्मत्वे निःसङ्गत्वश्रुतिविरोधः ॥२५॥

अन्यधर्मस्य अन्यत्र कार्य्यादर्शनात् वरम् असत्त्वम् एव धर्मादीनाम् ? इत्यत्राह,—

## गुणादीनां नात्यन्तबाधः ॥ २६ ॥

यथा पृथिव्यादीनां दृष्टत्वात् न अत्यन्तबाधः, तथा गुणादीनां धर्मादीनाम् अपि । अन्यधर्मस्य अपि अन्यत्र कार्य्यकरणं चितिच्छायाऽऽपत्त्या इति उक्तम् ॥ २६ ॥

---

सूत्रमवतारयति, दुःखाभावे इति ।—तत्र—दुःखहेतुभूतदुरदृष्टे इत्यर्थः । सुखकारणे—दुःखानुत्पत्तिप्रयोजके । गौणः,—लाक्षणिकः । एतद्विपरीतसम्भवादिति—तुल्ययुक्त्या जगतः सुखमयत्वमभ्युपेत्य सुखानुत्पत्तिप्रयोजकेषु वस्तुषु दुःखकारणत्वप्रवादस्यापि गौणत्वोक्तिसम्भवादित्यर्थः ॥ २४ ॥

"धर्मादीनाम् आत्मधर्मत्वम्" इति नैयायिकमतं दूषयितुं सूत्रमवतारयति—धर्मादीनामिति । अत्र अन्तःकरणपदं—बुद्धिपरमित्याह, बुद्धिधर्मत्वमिति ।—आत्मधर्मत्वे, धर्मादीनामिति शेषः । निःसङ्गत्वश्रुतिः,—"असङ्गो ह्ययं पुरुषः" [ बृह० उप० ४ अध्या० ३ ब्रा० १५ मन्त्रः ] इति श्रुतिरिति भावः ॥ २५ ॥

बुद्धिधर्मेण अदृष्टादिना बुद्धिव्यतिरिक्तस्य आत्मनः भोगरूपकार्य्यासम्भवात् अस्तु धर्मादेरसत्त्वमेव इत्याशङ्कानिराकरणाय सूत्रमवतारयति—अन्यधर्मस्येति । दृष्टत्वात्—सत्त्वेन प्रतीयमानत्वात् । नन्वेवम् अन्यधर्मेण अन्यत्र कार्य्योत्पत्तिस्वीकारे अव्यवस्था स्यात् इत्यत आह, अन्यधर्मस्येति ।—चितिच्छायाऽऽपत्त्या—बुद्धौ चिदात्मनः प्रतिबिम्बसम्बन्धादित्यर्थः । तथा च, प्रतिबिम्बितरूपेणैव आत्मनि सुखदुःखादिभोगः सिध्यति, न स्वरूपेण । प्रतिबिम्बस्य बुद्धिगत एवेति तदविवेकात् बुद्धिधर्मेण धर्माधर्मादिरूपकर्मणा तत्प्रतिबिम्बितस्य चेतनस्य सुखदुःखादिभोगस्वीकारे नास्ति काचिदनुपपत्तिरिति भावः ॥ २६ ॥

दुःखाभावः सुखम् इति तत्प्रतिषेधार्थमाह,—

**पञ्चावयवयोगात् सुखसंवित्तिः॥ २७॥**

यद्यपि मानसप्रत्यक्षेण भावरूपं सुखम् अवसीयते, तथाऽपि परबोधाय प्रमाणमपि उक्तम्। पञ्चावयवयोगात् इति "द्व्यवयवम् अनुमानम्" इति निरस्तम्। प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनम् इति। अनेन पक्षधर्मत्वं, सपक्षसत्त्वं, विपक्षात् व्यावृत्तिः, असत्प्रतिपक्षत्वम्, अबाधितविषयत्वं सिद्धम्॥ २७॥

सकृद्दर्शनात् न व्याप्तिः, इत्याह,—

**न सकृद्ग्रहणात् सम्बन्धसिद्धिः॥ २८॥**

स्वप्रतीतिविरोधात्। तथा च, वह्निरासभयोः सकृद्दर्शनात् अनुमानं स्यात्; न एवं प्रतीयते इति॥ २८॥

---

सुखस्य दुःखाभावरूपता न सम्भवति इति प्रदर्शयितुं सूत्रमवतारयति—दुःखाभाव इति। सुखस्य स्वसंवेद्यसद्रूपतया सर्वानुभवसिद्धत्वेन तत्र दुःखाभावभिन्नत्वोपपादनमकिञ्चित्करमित्याशङ्कते—यद्यपीति। निराकरोति—तथाऽपीति। पञ्चावयवयोगात्—मानसप्रत्यक्षत्वरूपहेतुघटितानुमानप्रयोगादित्यर्थः। तत्रानुमानं पञ्चभिः अवयवैः साध्यते इति पञ्चावयवपदेन अनुमानमत्र गृह्यते इति वृत्तिकृतामाशयः। अनुमाने पञ्चावयवत्वकथनात् द्व्यवयववादिनां बौद्धानां मतं भङ्ग्या निराकृतम् इति सूचयति—पञ्चावयवेति। पञ्चावयवप्रयोगस्य परार्थानुमाने उपयोगित्वं प्रपञ्चयन्नाह, अनेनेति।—तथा च, पञ्चविधहेत्वाभासाभावप्रतिपादनद्वारा परार्थानुमाने पञ्चावयवप्रयोगस्य अस्त्येव उपयोगित्वम् इति तात्पर्य्यम्॥ २७॥

ननु व्याप्तिः किं सकृत् सहचारज्ञानात् प्रतीयते? अथवा भूयः? आद्ये वह्निरासभयोरपि व्याप्तिर्गृह्येत, न चैतदिष्टम्। नान्त्यः, भूयः सहचरितयोरपि पार्थिवत्वलौहलेख्यत्वयोः हीरके व्यभिचारात्, तस्मात् व्याप्तिग्रहणासिद्ध्या अनुमानं न प्रमाणपदवीम् आरोढुम् अर्हति इति केषाञ्चित् मतं निराकर्त्तुं सूत्रमवतारयति, सकृद्दर्शनादिति।—न सकृद्दर्शनं भूयोदर्शनं वा सहचारविषयकं व्याप्तिं ग्राहयतीति अस्माकं मतं, परन्तु व्यभिचारादर्शनसहकृतं सहचारदर्शनमेव व्याप्तिग्राहकम् इति नास्ति काचिदनुपपत्तिरिति वृत्तिकृतामाशयः॥ २८॥

का इयं व्याप्तिः ? इत्यत्राह,—

**नियतधर्मसाहित्यम् उभयोरेकतरस्य वा व्याप्तिः ॥ २९ ॥**

उभयोः इति समव्याप्तिकयोः कृतकत्वानित्यत्वयोः । एकतरस्य विषमव्याप्तिकस्य धूमस्य इति । तथा च,—

"यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥" इति ॥ २९ ॥

तत्त्वान्तरं व्याप्तिः इति । तत् निराकरोति,—

**न तत्त्वान्तरं, वस्तुकल्पनाप्रसक्तेः ॥ ३० ॥**

तत्त्वान्तरस्वीकारेऽपि अव्यभिचारः वक्तव्यः ; स एव अस्तु, किं वस्तुकल्पनया ? इति ॥ ३० ॥

सम्बन्धसिद्धिरित्यनेन सूचितम् अनुमानोपयिकं सम्बन्धं निरूपयितुं सूत्रमवतारयति —केयमिति । सूत्रे धर्मपदं—साध्यपरम् । समव्याप्तिकयोरिति ।—समा व्याप्तिः ययोः तयोः । कृतकत्वम्—उत्पत्तिमत्त्वे सति भावत्वम् । अनित्यत्वमपि—ध्वंसप्रतियोगित्वे सति भावत्वम् । यथाश्रुते प्रागभावे ध्वंसे च व्यभिचारः इति भावत्वम् उभयदले अवश्यं निवेशनीयम् इति ध्येयम् । विषमव्याप्तिकस्य—व्यापकत्वाभाववत्त्वे सति व्याप्यत्वरूपधर्मवतः । सूत्रे धर्म-पदस्य नियतमिति यद्विशेषणमुपात्तं, तदुपपादयितुं कारिकामवतारयति, तथा चेति ।—अव्यतिरेकित्वम्—अव्यभिचारित्वम् । शङ्क्यते—अप्रामाण्यशङ्काविषयीक्रियते इत्यर्थः । विपक्षस्येति—साध्यवदन्यत्वेन निश्चितस्य धर्मिणः अव्यतिरेकित्वं साधनाभाववत्त्वं यावत् सन्दिग्धं तावत् व्याप्तिधीः नैवोदेति इति फलितार्थः ॥ २९ ॥

व्याप्तेः पदार्थान्तरत्वम् इतिवादिनां मतं निराकर्तुं सूत्रमवतारयति, तत्त्वान्तरमिति ।—क्लृप्तपदार्थेभ्यः अतिरिक्तं व्याप्तिस्वरूपं किञ्चित् न, अङ्गीकर्त्तव्यम इति शेषः । वस्तुकल्पनाप्रसक्तेः,—निष्प्रमाणकपदार्थान्तरकल्पनाप्रसङ्गादित्यर्थः । क्लृप्तेनैव व्यभिचाराभावेन उपपत्तौ पदार्थान्तरकल्पनागौरवम् अनावश्यकम् इत्याह सूत्रकारः,—तत्त्वान्तरमिति ॥ ३० ॥

स्वमतमाह,—

**निजशक्त्युद्भवमित्याचार्य्याः ॥ ३१ ॥**

अस्ति वह्निधूमयोः निजा शक्तिः, सा द्वयोः दर्शनेन गृह्यते ; सा एव व्याप्तिः इति ॥ ३१ ॥

एकदेशिमतमाह,—

**आधेयशक्तियोग इति पञ्चशिखः ॥ ३२ ॥**

यदि निजा शक्तिः, अव्युत्पन्नस्य अपि वस्तुनः दर्शनात् "अत्र अयं शक्तः" इति ज्ञानं स्यात्। न च एवम् ; तस्मात् आधेयशक्तिः वाच्या इति ॥ ३२ ॥

युक्तिमाह,—

**न स्वरूपशक्तिनियमः, पुनर्वादप्रसक्तेः ॥ ३३ ॥**

यदि स्वरूपं शक्तिः, "शक्तः सक्तः" इति पुनरुक्तं स्यात् ॥३३॥

युक्त्यन्तरमाह,—

**विशेषणानर्थक्यप्रसक्तेः ॥ ३४ ॥**

शक्तः देवदत्तः इति प्रत्ययः न स्यात्, किन्तु देवदत्तः देवदत्तः इति ॥ ३४ ॥

साध्यसाधनयोः शक्तिविशेषः एव व्याप्तिः इति सिद्धान्तं प्रदर्शयितुं सूत्रमवतारयति—स्वमतमिति। आचार्य्याः,—साङ्ख्याचार्य्याः। तथा च, शक्ति-शक्तिमतोरभेदात् नैतस्मते पदार्थान्तरकल्पनाप्रसक्तिः इति भावः। एतदेव प्रतिपादयन्नाह—निजेति ॥३१॥

प्रसङ्गात् एकदेशिमतमवतारयति—एकेति। आधेयशक्त्या योगे—सम्बन्धे सति, साहित्यमिति शेषः ; तथा च, साहित्यम् आधेयशक्तिमदवमिति। पञ्चशिख इत्येकवचनेन परमतमेतदिति सूचितम ॥ ३२ ॥

पञ्चशिखमतेनैव शक्तेः सप्तपदार्थान्यतमरूपतां निराकर्त्तुं सूत्रमवतारयति, युक्तिमिति।—तथा च, "शक्तो सक्तः" इत्यत्र पुनरुक्ततापरिहाराय शक्ति-शक्तिमतोः भेदः अवश्यम् अङ्गीकर्त्तव्यः इति भावः ॥ ३३ ॥

युक्त्यन्तरमवतारयति, युक्त्यन्तरमिति।—तथा च, देवदत्तः देवदत्तः इतिवत् शक्तो देवदत्तः इति प्रयोगः अनर्थकः स्यादिति भावः ॥ ३४ ॥

अपरां युक्तिमाह,—

**पल्लवादिष्वनुपपत्तेः ॥ ३५ ॥**

पल्लवादिषु स्वरूपस्य तादवस्थ्यात् अप्रयुक्तेऽपि मन्त्रे विषापनोदनं स्यात् ॥ ३५ ॥

समाधानमाह,—

**आधेयशक्तिसिद्धौ निजशक्तियोगः समान-न्यायात् ॥ ३६ ॥**

निजा चासौ शक्तिश्चेति निजशक्तिः, न तु स्वरूपम् एव शक्तिः। तथा च, आधेयशक्तिसिद्धौ निजशक्तियोगः समान-न्यायत्वात्। तथा च, शक्तेः अविशेषात् आधेयशक्तियोगः वा निजशक्तियोगः वा इति समानः न्यायः। यत् च वस्तुग्रहणे प्रथमं न गृह्यते, चित्रशक्तित्वात् पदार्थानां, यथा स्थितोऽपि पितापुत्रसम्बन्धः विना उपदेशात् न गृह्यते। अत एव उक्तं "निजशक्त्युद्भवम्" ॥ ३६ ॥

युक्त्यन्तरमवतारयति, अपरामिति।—तथा च, पल्लवादिस्वरूपस्य मन्त्रप्रयोगात् पूर्वमपि विद्यमानतया ऋतेऽपि मन्त्रप्रयोगात् भुजगविषापनोदनादिकार्य्यं स्यादिति भावः ॥ ३५ ॥

अथ सिद्धान्तसूत्रमवतारयति, समाधानमिति।—आधेयशक्तेः व्याप्तित्वसिद्धौ निज-शक्त्युद्भवोऽपि व्याप्तित्वेन सिद्ध एव। समानन्यायात्—युक्तिसाम्यात् इत्यर्थः। सिद्धान्त निजशक्तिरिति पदं व्याचष्टे—निजा चेति। न तु स्वरूपमेवेति।—तथा च, शक्ति-शक्ति-मतोः भेदघटिताभेदाङ्गीकारात् न पुनरुक्तत्व-निरर्थकत्वादिदोषप्रसक्तिः अस्ति इति ज्ञेयम्। तात्पर्य्यं विवृणोति, तथा चेति।—अयं भावः,—शक्तेः व्याप्तित्वं चेत् अङ्गीकृतं, तदा आधेयशक्तेर्वा निजशक्तेर्वा व्याप्तित्वम् इत्युभयमतेऽपि दोषगुणयोः तुल्यतैव इत्यवश्य-मङ्गीकार्य्यम। आधेयशक्तिः नाम—विपक्षाद्या व्यनिश्चिते धर्म्मिणि विद्यमानस्य हेतोः अर्थ्यमाणसाध्यसाहचर्य्येण समुद्बोधिता शक्तिः; सा च फलतः साध्य-साधनयोः व्यभि-चाराभावघोतकहेतुसामानाधिकरण्यप्रतीतिव्यञ्जशक्तिरूपा निजशक्तिरेव फलतः पर्य्यव-स्यति इति पञ्चशिखमतेऽपि मञ्जा निजशक्तेरेव व्याप्तित्वं फलतः अङ्गीकृतमिति ॥ ३६ ॥

पदार्थयोः तादात्म्यं निषेधति,—

**वाच्यवाचकसम्बन्धः शब्दार्थयोः ॥ ३७ ॥**

तादात्म्यपक्षे घटोऽपि श्रोत्रग्राह्यः स्यात्, शब्दोऽपि चाक्षुषो भवेत्, अग्न्याद्युच्चारणे मुखदाहादिप्रसङ्गः इति ॥ ३७ ॥

अत्र हेतुमाह,—

**त्रिभिः सम्बन्धसिद्धिः ॥ ३८ ॥**

त्रिभिः प्रकारैः व्युत्पत्तिग्रहणात्। आप्तोपदेशात् यथा—"अयं घटः" इति। वृद्धव्यवहारात् यथा—"गामानय शुक्लां दण्डेन" इति। अत्र प्रयोजकवृद्धवाक्यात् प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा बालस्य। प्रसिद्धपदसामानाधिकरण्यात् यथा—"पक्षी आम्रं भक्षयति" इति श्रुत्वा आम्रभक्षणार्थं जानाति पक्षी इति तदानीं प्रतिपद्यते ॥ ३८ ॥

कार्य्ये व्युत्पत्तिः इति नियमं व्युदस्यति,—

---

प्रसङ्गात् शब्द-तदर्थयोः अभेदवादिनां मतं निराकर्तुं सूत्रमवतारयति, पदार्थयोः इति।—पदञ्च अर्थश्च इति पदार्थौ तयोरित्यर्थः। शब्दार्थयोः वाच्यवाचकसम्बन्धः यतो वर्त्तते तत एव शब्दार्थयोः तादात्म्यं न सम्भवतीत्युक्तिकम् इति सूत्रतात्पर्य्यम्। सुगममन्यत् ॥ ३७ ॥

प्रसङ्गात् वाच्यवाचकभावसम्बन्धज्ञानोपयोगि कारणं प्रतिपादयितुं सूत्रमवतारयति, अत्रेति।—अत्र इति—वाच्यवाचकभावे, हेतुपदं—ज्ञापकपरं, तथा च, सप्तमी अत्र विषयत्वबोधिका, सा च हेतुपदार्थैकदेशे ज्ञाने अन्वेति। त्रिभिः प्रकारैरिति—आप्तोपदेश-वृद्धव्यवहार-प्रसिद्धपदसामानाधिकरण्यरूपैः। तान् प्रकारान् यथाक्रमं दर्शयति—आप्तोपदेशादित्यादिना ॥ ३८ ॥

कार्य्यतावाचकपदघटितवृद्धव्यवहारादेव आद्यव्युत्पत्तिग्रहणदर्शनात् कार्य्यान्वितस्वार्थे एव पदानां शक्तिः इति-वादिनां मीमांसकानां मते कार्य्यतावाचकपदाघटितवाक्यात् शाब्दबोधानुदयेन "अष्टौ प्रकृतिः षोडश विकाराः" इत्यादिसाङ्ख्यसिद्धान्तोपजीव्यश्रुतिवाक्यानां स्वार्थे प्रामाण्याभावात् साङ्ख्यसिद्धान्तः न श्रौतः, अपि तु आनुमानिक एव इत्याशङ्कां निराकर्तुं कार्य्यतावाचकपदाघटितवाक्यस्यापि शाब्दबोध-

न कार्य्ये नियमः, उभयथा दर्शनात् ॥ ३९ ॥

कार्य्ये व्युत्पत्तिर्दृष्टा यथा—"अहरहः सन्ध्यामुपासीत" इति। सिद्धार्थे च दृष्टा यथा—"हरिर्देवाधिदेवः"। तथा हि, विध्यर्थवादमन्त्रात्मका वेदाः। विधौ कार्य्यतैकार्थसमवेतायाम् इष्टसाधनतायां प्रामाण्यम्। विधिशक्तेः उत्तम्भकत्वेन अर्थवादस्यापि पारम्पर्य्येण प्रवर्त्तकत्वात् प्रामाण्यम। विहित-स्मारकत्वेन मन्त्रस्यापि प्रामाण्यम्। यत्तु प्रवृत्तिनिमित्तत्वात् मन्त्रार्थवादयोः प्रामाण्यं, न तु प्रतिपादकत्वं, तन्न ; उत्पत्तौ अस्ति प्रवृत्त्यर्थत्वं, ज्ञप्तौ तु सिद्धार्थपरत्वमेव ; तस्मात् सिद्धार्थ-प्रतिपादकयोरपि अर्थवादमन्त्रयोः प्रामाण्यम् इति ॥ ३९ ॥

---

जनकत्वम इति व्यवस्थापयितुञ्च सूत्रमुत्थापयति—कार्य्ये इति। कार्य्ये व्युत्पत्तिर्दृष्टा इति।—अत्र व्युत्पत्तिपदम अन्वयबोधपरं, सिद्धार्थे व्युत्पत्तिः दृष्टा इत्यन्वयः। विध्यर्थ-वादमन्त्रात्मका इति।—अत्र विधिपदेन निषेधस्यापि ग्रहणम। अर्थवादपदं नामधेय-स्यापि उपलक्षणम इति ध्येयम्। कार्य्यतैकार्थसमवेतायामिति—कृतिसाध्यत्वसमानाधि-करणायामित्यर्थः। इष्टसाधनतायां—बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनतायाम ; तथा च, विधौ लिङ्-तव्यादिरूपे शब्दे कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वेष्टसाधनत्वरूप-पुरुषप्रवृत्तिप्रयोजकज्ञानविषयवस्तुवद्विषयकप्रमितिजनकत्वरूपं प्रामाण्यं फलतः पर्य्यव-स्यति। विधिशक्तेरुत्तम्भकत्वेनेति—विधेयार्थधर्मिकेष्टसाधनत्वरूपसौन्दर्य्यबोधकत्वेन तदनुष्ठाने पुरुषप्रवृत्तिं प्रति प्रयोजकत्वेन इत्यर्थः। अर्थवादस्यापीति—साक्षात् कार्य्यतावाचकपदाघटितवेदवाक्यस्य इत्यर्थः। पारम्पर्य्येण इति—इष्टसाधनताधीजनन-द्वारा इत्यर्थः। प्रवर्त्तकत्वात्—प्रवृत्तिसामग्रीप्रयोजकत्वात इत्यर्थः। प्रामाण्यं, विध्येक-वाक्यतया इति शेषः। विहितस्मारकत्वेनेति—यागादिरूपविधेयापेक्षितद्रव्यदेवतादि-स्मारकत्वेन इत्यर्थः। यत्त्विति।—अयमाशयः,—मन्त्राणां कर्मकाले पाठेन अदृष्टोत्पादकत्वात् अर्थवादानाञ्च लक्षणया एव प्राशस्त्य-निन्दितत्वरूपविधेयान्वयिपदार्थ-बोधनद्वारा प्रामाण्यं, न त्वेषां मन्त्राणाम अर्थवादानाञ्च स्वाभिधेयपरतया प्रामाण्यं सम्भवति इति एकदेशिनां मतं, तन्न समीचीनं, स्वार्थपरतायामपि एषां प्रामाण्यस्वीकारे क्षतिविरहात् इति। उत्पत्तौ—उच्चारणादिरूपानुष्ठानद्वारा अपूर्वोत्पत्तौ इत्यर्थः। प्रवृत्त्यर्थत्वं—प्रवृत्तिप्रयोजकत्वम्। ज्ञप्तौ—स्वार्थप्रतिपादने इत्यर्थः। अकार्य्यपराणा-

अतीन्द्रियत्वात् वेदार्थस्य कथम् उभयथा व्युत्पत्तिः ? इत्यत आह,—

**लोकव्युत्पन्नस्य वेदार्थप्रतीतेः ॥ ४० ॥**

“ये एव लौकिकाः, ते एव वैदिकाः” इति सामान्यात् इह अपि व्युत्पत्तिः इति ॥ ४० ॥

भवेत् एवं, यदि वेदस्य पौरुषेयत्वं स्यात्, न च एवम् इत्याह,—

**न त्रिभिः, अपौरुषेयत्वात् वेदस्य तदर्थस्याप्यतीन्द्रियत्वात् ॥ ४१ ॥**

ईश्वरस्य निराकृतत्वात्, अन्यस्य असम्भवात्, भ्रान्तेः पुरुषधर्मत्वेन आप्तत्वानिश्चयात् वेदस्य अप्रामाण्यापत्तेरिति । वेदाप्रामाण्ये यागादौ अनाश्वासः इति ॥ ४१ ॥

---

अपि मन्त्रार्थवादरूपवाक्यानाम् अनया दिशा सम्भवत्येव सिद्धार्थपरत्वम् इत्युपसंहरति —तस्मादिति ॥ ३९ ॥

अन्य एव लौकिकवाक्यार्थः, अन्य एव च वैदिकवाक्यार्थः, उभयोः मिथो वैलक्षण्येन एकजातीयार्थप्रतिपादकत्वाभावात् इत्याशङ्कायां समाधानसूत्रमवतारयन्नाह— अतीन्द्रियत्वादिति । इहापि—सिद्धार्थे इत्यर्थः, वेदवाक्यस्य इति शेषः ॥ ४० ॥

वेदस्य पौरुषेयत्वस्वीकारे एव तत्साम्यात् सिद्धार्थे प्रामाण्यं सम्भवति इति शङ्कां निराकर्तुं सूत्रमवतारयति, भवेदेवमिति ।—तथा च, वेदस्य पौरुषेयत्वं न सम्भवतीति सिद्धान्तः साङ्ख्याचार्य्याणाम् अनेन सूत्रेण प्रतिपाद्यते इति सूत्रकृतामाशयः । त्रिभिरिति पदं व्याचष्टे, ईश्वरस्येति ।—तथा च, ईश्वररूपस्य पुरुषस्य निराकरणेन, तदन्यस्य जीवस्य वेदकर्तृत्वासम्भवेन, पुरुषकृतत्वाङ्गीकारे च वेदस्य भ्रान्तिमूलकत्व-प्रसङ्गेन च इति त्रिभिः हेतुभिः वेदस्यापौरुषेयत्वं सुतरां सिध्यतीति सूत्रकृतामाशयः । आप्तत्वानिश्चयादिति ।—अबाधितार्थपरत्वमेव अत्र आप्तत्वं ज्ञेयम् । वेदस्याप्रामाण्ये का हानिः ? इत्याशङ्कायामाह, यागादाविति ।—तथा च, पौरुषेयत्वेन वेदे अनाप्तत्वशङ्कायां न कश्चित् तत्प्रतिपाद्ये बहुलाऽऽयास-धनव्ययादिसाध्ये यागादौ विश्वस्ततया प्रवर्त्तेत इति भावः ॥ ४१ ॥

वेदप्रामाण्यप्रतिपादनार्थमाह,—

**न यज्ञादेः स्वरूपतो धर्मत्वं, वैशिष्ट्यात् ॥४२॥**

वैशिष्ट्यं कालदेशपात्रापेक्षया, तन्निरपेक्षत्वे न स्वरूपतः धर्मत्वम्; अन्यथा अशुद्धकाले म्लेच्छदेशे महापातकिभिः कृताः यज्ञादयः धर्महेतवः स्युः; न च एवम् ॥ ४२ ॥

अज्ञस्य फलदर्शनात् वेदप्रामाण्यम् इति व्युत्पत्त्या किं क्रियते ? इत्यत्राह,—

**निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते ॥ ४३ ॥**

अयं शब्दः अत्र वाचकत्वेन मुख्यः, अत्र गौणः इति व्यवच्छिद्यते ॥ ४३ ॥

व्युत्पत्तिसिद्धिः कथं ज्ञायते ? इत्यत्राह,—

**योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः ॥ ४४ ॥**

---

ननु धर्मो वेदार्थः, स च यागः दध्यादिद्रव्यशोक्लयादिगुणसम्पाद्यः त्यागादिरूपक्रियाविशेष; नातीन्द्रियः, इति कुतः वेदस्य अतीन्द्रियार्थे प्रामाण्यम् ? इति शङ्कां निराकर्तुम् अतीन्द्रिये पदार्थे वेदस्य प्रामाण्यप्रतिपादनाय सूत्रमवतारयति, वेदेति।— न यागादिमात्रं धर्मः, शूद्रकृतयागादेरपि धर्मत्वापत्तेः, किन्तु स्वर्गसाधनत्वावच्छिन्नयागादिरेव, स च अतीन्द्रिय एव इति सूत्रार्थः। कुतः ? इत्यत आह, वैशिष्ट्यादिति।—तथा च, अधिकारिदेशकालादिवैशिष्ट्यं स्वर्गसाधनत्वांशे एव उपयोगि, न तु यागादिस्वरूपे इति सूत्रतात्पर्य्यम्। यागादेः स्वरूपतो धर्मत्वाङ्गीकारे का हानिः ? इत्याशङ्कामपनेतुं प्राह वृत्तिकारः, अन्यथेति।—अशुद्धकाले—पर्य्युदस्तकाले इत्यर्थः। म्लेच्छदेशे—अयज्ञियदेशे। महापातकिभिः,—अनधिकारिभिः इत्यर्थः ॥ ४२ ॥

व्युत्पत्तेरुपयोगं दर्शयितुं सूत्रमवतारयति, अज्ञस्येति।—अज्ञस्य—वेदार्थमजानतः, अधिकारिणः इति शेषः। फलदर्शनात्—यागाद्यनुष्ठानेन स्वर्गादिफलं भवतीति विज्ञानात् इत्यर्थः। माऽस्तु अज्ञस्य अधिकारिणः वेदार्थानुष्ठानं प्रति तदर्थज्ञानस्य साक्षादुपयोगित्वं, तथाऽपि अज्ञेयव्युत्पन्नपुरुषप्रत्ययेन तस्य तादृशानुष्ठानं प्रति वेदार्थज्ञानस्य परम्परया उपयोगित्वम् अस्त्येव इति भावः ॥ ४३ ॥

व्युत्पत्तिस्वरूपं कथं सिध्यति ? इति निरूपयितुं सूत्रमवतारयति—व्युत्पत्ति-

प्रसिद्धाप्रसिद्धेषु लौकिकवैदिकपदार्थेषु ज्ञानजनकत्वात् व्युत्पत्तिसिद्धिः ॥ ४४ ॥

वेदनित्यत्वं निराकरोति,—

**न नित्यत्वं वेदानां, कार्य्यत्वश्रुतेः ॥ ४५ ॥**

श्रुतिः तावत् "नाहरासीन्न रात्रीरासीत्" "स तपोऽतप्यत, तस्मात् तपस्तेपानात् त्रयो वेदा अजायन्त" इति। अनुमानञ्च वेदोऽनित्यः कृतकत्वात् इत्यादि। प्रत्यक्षेणापि उच्चरित-प्रध्वंसिनः वर्णाः इति गृह्यन्ते। यस्तु "स एवायं क-वर्णः" इति प्रत्ययः, स सामान्यविषयः ॥ ४५ ॥

अनित्यत्वात् पौरुषेया: वेदाः इति, तत्राह,—

**न पौरुषेयत्वं, तत्कर्त्तुः पुरुषस्याभावात् ॥ ४६ ॥**

निराकृतः ईश्वरः इति अभिसन्धिः ॥ ४६ ॥

---

सिद्धिरिति। प्रसिद्धाप्रसिद्धेषु—ऐन्द्रियिकातीन्द्रियार्थेषु इत्यर्थः। ज्ञानजनकत्वादिति।—अयमाशयः,—ज्ञानस्य स्वतः प्रामाण्यं सांख्यसिद्धान्तः, तच्चेत् ज्ञानम् उत्पद्यमानं करणदोषार्थान्यथात्वरूपबाधकेन रहितं भवति, तदा तस्य प्रमात्वं ज्ञानान्तरानिरपेक्षं स्वतः एव भासते; वेदस्य च अपौरुषेयतया करणदोषाज्ञानेन तज्जनितार्थज्ञानस्य अप्रामाण्यशङ्कोदयासम्भवेन, अतीन्द्रियविषयकतया च तज्जनित-ज्ञानस्य लौकिकप्रत्यक्षादिभिः बाधासम्भवेन च अर्थप्रतिपादकत्वमेव वेदस्य प्रामाण्यं फलतः पर्य्यवस्यति इति आस्तिका मन्यन्ते ॥ ४४ ॥

वेदानां नित्यत्ववादिनां कर्मीमांसकानां मतं निराकर्तुं सूत्रमवतारयति—वेद-नित्यत्वमिति। वेदस्य अनित्यत्वे श्रुतिरेव प्रमाणमित्याह—श्रुतिस्तावदिति। अनुमानमपि तत्र अनुकूलमिति दर्शयति—अनुमानमिति। प्रत्यक्षेणापि वर्णात्मकस्य वेदस्य ध्वंसदर्शनम् इत्याह—प्रत्यक्षेणेति। नन्वेवं "स एवायं क-कारः" इत्यादि प्रत्यभिज्ञायाः का गतिः? इत्यत आह,—यस्त्विति। सामान्यविषय इति।—तथा च, प्रत्यक्षादिविरोधेन तथाविधप्रत्यभिज्ञायाः कत्वादिजातिविषयकत्वेनैव कथञ्चित् प्रामाण्यम् उपपादनीयम् इति भावः ॥ ४५ ॥

अनित्यत्वे पौरुषेयत्वापत्तिरिति शङ्कां निराकर्तुं सूत्रमवतारयति—अनित्यत्वा-

अन्यः एव कर्त्ता भविष्यति, इत्यत्राह,—

**न मुक्तामुक्तयोः, अयोग्यत्वात् ॥ ४७ ॥**

मुक्तस्य निःसङ्गत्वात् कर्त्तृत्वायोगात्, अमुक्तस्य युगपत् उपादानानभिज्ञत्वादिति ॥ ४७ ॥

अपौरुषेयत्वात् तर्हि नित्यत्वम ; अतः आह,—

**नापौरुषेयत्वान्नित्यत्वम्, अङ्कुरादिवत् ॥ ४८ ॥**

स्पष्टम् ॥ ४८ ॥

अङ्कुरादीनाम् अपि सकर्त्तृकत्वं कार्य्यत्वात्, इति पक्षे मुक्तस्य कर्त्तृत्वम्, इत्यत्राह,—

**तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥४९॥**

अङ्कुरादीनां कर्त्तुः अदृश्यत्वात् प्रत्यक्षबाधः। अयोग्यस्य कर्त्ता नास्तीति उक्तम्। आदिशब्दात् व्याप्यत्वासिद्धिः दर्शिता ॥ ४९ ॥

दिति। ननु ईश्वररूपपुरुषकृतत्वादेव वेदस्य पौरुषेयत्वमस्तु इत्यत आह, निराकृत इति।—"ईश्वरासिद्धेः" [ १ अध्या० ९२ सू० ] इति सूत्रेण इति शेषः ॥ ४६ ॥

माऽस्तु ईश्वरस्य कर्त्तृत्वं, जीवस्य तत्स्वीकारे का हानिः ? इत्याशङ्क्य सूत्रमवतारयति—अन्य एवेति। निःसङ्गत्वात—कर्त्तृत्वप्रयोजकाभिमानराहित्यादित्यर्थः। युगपदिति—संसारकालीनमित्यर्थः। उपादानानभिज्ञत्वात्—स्वर्गाद्यनुकूलसर्वजीवादृष्टाद्यनभिज्ञत्वात् इत्यर्थः ॥ ४७ ॥

अपौरुषेयत्वेन नित्यत्वमस्तु वेदानाम इत्याशङ्कायां निराकर्त्तुं सूत्रमवतारयति—अपौरुषेयत्वादिति। न हि अपौरुषेयत्व-नित्यत्वयोः व्याप्यव्यापकभावः अस्तु, का क्षतिः ? इत्यतः आह, अङ्कुरादिवदिति।—छिन्नाङ्कुरादौ व्यभिचारदर्शनात् इति भावः ॥ ४८ ॥

छिन्नाङ्कुरादौ कार्य्यत्वात सकर्त्तृकत्वमेवानुमेयम इति वैशेषिकमतं निराकर्त्तुं सूत्रमवतारयति—अङ्कुरादीनामिति। सूत्रे "तद्योगे" इत्यस्य—कर्त्तृयोगे इत्यर्थः। दृष्टस्य अकर्त्तृकत्वस्य बाधः इति दृष्टबाधशब्दार्थः। अत्र आदिशब्दात अदृष्टस्य सकर्त्तृकत्वस्य कल्पनं ग्राह्यम। नन्वेवं कार्य्यत्वहेतोः का गतिः ? इति चेत, अप्रयोजकत्वम इति गृह्यताम्। कर्त्तुरदृश्यत्वात् इति।—अदृश्यत्वात्—शरीराद्यसम्भवेन प्रमाणबाधित-

अनित्यत्व-पौरुषेयत्वयोः व्याप्तिः नास्ति, इत्याह,—

**यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते, तत् पौरुषेयम् ॥ ५० ॥**

यथा घटादिकं, न तु वृक्षादिषु। अदृष्टेऽपि इति—कर्त्तरि अदृष्टेऽपि। न कार्य्यमात्रं सकर्तृकं, किन्तु कार्य्यविशेषः ॥ ५० ॥

परतः प्रामाण्यं दूषयति,—

**निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ॥ ५१ ॥**

निजशक्तिज्ञानजनकसामग्रीमात्राधीनं प्रमाणानां प्रामाण्यं, न तु अधिकं गुणम् अपेक्षते उत्पत्तिपक्षे। ज्ञप्तिपक्षेऽपि औत्सर्गिकी ज्ञानग्राहकाणां प्रामाण्यबोधशक्तिः ; तदभिव्यक्तेः स्वतः प्रामाण्यं, झटिति प्रवृत्तेश्च। यत्रापि शङ्कानिवृत्तये प्रामाण्य-

---

त्वात् इत्यर्थः। व्याप्यत्वासिद्धेरिति—कार्य्यत्वस्य हेतोः सकर्तृकत्वव्याप्यत्वासिद्धिः इत्यर्थः ॥ ४९ ॥

सत्यपि अनित्यत्वे पुरुषकृतिजन्यत्वं किमिति नाङ्गीक्रियते ? इत्याशङ्कायां निराकरणसूत्रमवतारयति—अनित्यत्वेति। यस्मिन् अदृष्टेऽपि—कृतिमत्पुरुषजन्यत्वेन अप्रत्यक्षीकृतेऽपीत्यर्थः। कृतबुद्धिः,—कृतिजन्यमित्याकारिका बुद्धिः उपजायते इत्यर्थः। पौरुषेयं—सकर्तृकम्। फलितमाह—न कार्य्यमात्रमिति ॥ ५० ॥

प्रामाण्यज्ञानं प्रमितिजनककरणादिगतगुणज्ञानजन्यम् इति मतं दूषयितुं सूत्रमवतारयति—परत इति। निजेति।—निजशक्त्यैव—स्वजनकसामग्रीमात्रादेव, अभिव्यक्तेः,—ज्ञानस्य प्रामाण्यप्रतीतेः। प्रामाण्यं स्वतः,—स्वाश्रयजनकसामग्रीज्ञानविषय एव इत्यर्थः। उत्पत्तौ निजशक्तीति ज्ञानजनकसामग्रीविशेषणम्। मात्रपदं गुणज्ञानादिव्यावर्त्तकम्। एतदेव विवृण्वन्नाह, न त्वधिकमिति।—तथा च, ज्ञानसामग्री स्वकार्य्योत्पत्तौ यथा करणादिगतगुणज्ञानं गुणं वा नापेक्षते, तद्वेव स्वजन्यज्ञानगतप्रामाण्याभिव्यक्तौ इति शेषः। ज्ञानग्राहकाणां—स्वप्रकाशज्ञानजनकसामग्र्या इत्यर्थः, प्रामाण्यबोधशक्तिः,—स्वजन्यज्ञाननिष्ठप्रमात्वप्रकाशसामर्थ्यम्, औत्सर्गिकी—सामग्र्यघटकगुणज्ञानादिनिरपेक्षा इत्यर्थः। तदभिव्यक्तेः,—विषयप्रकाशस्य इति भावः। झटिति

जिज्ञासार्थं प्रमाणानुसरणं, तत्रापि कारणदोषोत्सारणाय, न गुणाय ; अत एव अप्रामाण्यं परतः, तत्र दोषस्यापि कारणत्वादिति ॥ ५१ ॥

बौद्धमतं दूषयति,—

**नासतः ख्यानं, नृशृङ्गवत् ॥ ५२ ॥**

"इदं रजतम्" इति असत् एव शुक्तिरजततादात्म्यं प्रतिभाति ; तन्न, असतः अर्थक्रियाविरहात् ज्ञानजनकत्वानुपपत्तेः, यथा मनुष्यशृङ्गस्य ॥ ५२ ॥

प्राभाकरमतं दूषयति,—

**न सतो बाधदर्शनात् ॥ ५३ ॥**

"इदं रजतम्" इति, "इदम्" इति पुरोवर्त्तिविषयं, "रजतम्"

---

प्रवृत्त्येति—उत्पन्नस्य ज्ञानस्य परीक्षणेन प्रमात्वानुमानम् अनपेक्ष्यैव भ्रान्तानां रज्जुसर्पादिज्ञाने जाते अनुपदमेव तस्मात् स्थानात् पलायनादिप्रवृत्तेः सर्वानुभवसिद्धत्वादिति भावः। नन्वेवं यत्र उत्पन्नस्य ज्ञानस्य प्रमात्वपरीक्षणाय परीक्षकाणां प्रवृत्तिर्लोके दृश्यते, तत्र का गतिः स्वतः प्रामाण्यस्य ? इत्याशङ्कायामाह, यत्रापीति।—शङ्कानिवृत्तये—बाधदर्शनकारणदोषसम्भावनाजन्यम् अप्रामाण्यसंशयं निराकर्तुम् इत्यर्थः। तदेव विवृणोति, प्रामाण्यनिश्चयार्थमिति।—प्रमाणानुसरणम्—अप्रमात्वशङ्काविघटकसामग्र्यन्वेषणम्। एतदेव विशदयन्नाह—तत्रापीति। तथा च, एतन्मते अप्रामाण्यमेव परतो ज्ञेयं प्रामाण्यं बाधराहित्येन इत्याह—अत एवेति। तत्र—अप्रामाण्यज्ञाने। दोषस्यापि—दोषज्ञानस्यापीत्यर्थः। अपिः समुच्चयार्थकः, स च प्रमाणान्तरजन्यं बाधज्ञानं समुच्चिनोति ॥ ५१ ॥

असत्ख्यातिवादिनं बौद्धं निराकर्तुं सूत्रमवतारयति—बौद्धमतमिति। तन्मतमाह वृत्तिकृत्—इदमिति। निराकरोति—तन्नेति। असतोऽर्थक्रियाविरहादिति—असत्त्वयाऽभिमतस्य शुक्तौ रजततादात्म्यादेरित्यर्थः। अर्थक्रियाविरहादित्यस्य स्वयमेवार्थमाह—ज्ञानेत्यादि ॥ ५२ ॥

अत्रैव प्रसङ्गेन अख्यातिवादिनं प्राभाकरं दूषयितुं सूत्रमवतारयति, प्राभाकरमतमिति।—अत्रेदं तत्त्वं—प्राभाकरैः शुक्तौ रजतमित्यादिबुद्धेः शुक्तिरजततादात्म्याव-

इति स्मरणम्। द्वे इमे संवित्ती। भेदाग्रहात् प्रवृत्तिः। न, अभेदग्रहणात् प्रवृत्तिदर्शनात्, "नेदं रजतम्" इति बाधाच्च। न च सम्यग्ज्ञानस्य बाधः अस्ति, तथा सति "अयं घटः" इति ज्ञाने जाते "नायं घटः" इति ज्ञानं स्यात्॥ ५३॥

वेदान्तिमतं दूषयति,—

**नानिर्वचनीयस्य, तदभावात्॥ ५४॥**

"इदं रजतम्" इति असत्त्वे अपरोक्षज्ञानाभावात्, सत्यत्वे

---

नाधिक्यं नाङ्गीक्रियते, परन्तु तत्र "इदं रजतम्" इति विशिष्टव्यवहारोपपत्तये भेदाज्ञान-सहकृतं शुक्तिरिति प्रत्यक्षं, रजतमिति स्मरणमिति ज्ञानद्वयमेव अङ्गीक्रियते, तद्बलेनैव विशिष्टव्यवहारस्य उपपत्त्या निरर्थकं वैशिष्ट्यावगाहि भ्रमात्मकं ज्ञानं कल्प्यम् इति सर्वं समञ्जसम्। तदेतत् मतं प्रतिपादयन् आह वृत्तिकारः,—इदमिति। नन्वेवं इद-मिति, रजतमिति ज्ञानद्वयं चेत्, वैशिष्ट्यावगाहि ज्ञानमेकं, कथं तदा रजतार्थिनः तत्र प्रवृत्तिरुपपद्यते? इत्यत आह, भेदाग्रहादिति।—भेदोऽत्र इदम्प्रतीतिविषयस्य पुरोवर्त्तिनः द्रव्यस्य रजताद्भेदो ग्राह्यः, तस्य च अग्रहात्—करणदौर्बल्यादिना अग्रहणात् इत्यर्थः। तदेतत् मतं दूषयति—नेति। अभेदग्रहणादिति।—तथा हि, रजतार्थिनाम् इदन्त्वावच्छिन्ने यावत् रजतस्याभेदो न गृह्यते, तावत् तस्य तद्ग्रहणाय प्रवृत्तिः नोपपद्यते इति सर्वैरङ्गीकरणीयम्, अन्यथा सर्वत्रैव तादात्म्याग्रहेऽपि धर्मिधर्मविषयकपृथग्ज्ञानद्वयादेव प्रवृत्तिरापद्येत इति भावः। युक्त्यन्तरमाह, न चेति।—शुक्तौ "इद रजतम्" इत्यादि भ्रमव्यवहारस्य प्रमात्मकज्ञानद्वयादेव जननसम्भवे "नेदं रजतम्" इति बाधस्य तद्बाधकत्वं सर्वानुभवसिद्धं न कथञ्चिदपि उपपत्तिमर्हेत् इति भावः। एतदेव विवृण्वन्नाह—तथा सतीति॥ ५३॥

अनिर्वचनीयख्यातिवादिनां वेदान्तिनां मतं दूषयितुं सूत्रमवतारयति—वेदान्तीति। तत्र प्रथमं तन्मतं व्यवस्थापयति, इदमिति।—अयमभिप्रायः,—यदिदम् "इदं रजतम्" इत्यादि अपरोक्षज्ञानं भ्रमात्मकं, तत् अन्यथाख्यातिरूपं वैशेषिकसम्मतं न सम्भवति; तथात्वे रजतस्य इन्द्रियासन्निकृष्टतया प्रत्यक्षत्वाभावानुप-पत्तेः। न च ज्ञानलक्षणस्यापि सन्निकर्षत्वं सम्भवति, तत्सम्भवे वा "रजतं चक्षुषा प्रत्यक्षीकरोमि" इति सार्वजनीनानुभवविरोधात्, चाक्षुषत्वेन अनुभूयमानस्य रजतस्य ज्ञानलक्षणसन्निकर्षजन्यविषयताऽनाश्रयत्वस्यैव औचित्यात्। नन्वेवं चाक्षुषत्वेन अङ्गीक्रियमाणस्य रजतस्य व्यवहारागोचरतया असन्निकृष्टस्य कुतश्चानुपपत्त्यविषयता

बाधाभावात्, अतः सदसद्विलक्षणानिर्वचनीयत्वम् । तथा च,—

"न सत्त्वे बाधसंवित्तिर्न भानमसतोऽपि च ।
न द्वयात्मत्व विरुद्धत्वादतस्तत्त्वान्तरं कुतः ? ॥
मायामयत्वसिद्धौ तु प्रपञ्चस्य प्रमाणतः ।
प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यवहारिकम् ॥
अद्वैतागमवाक्यन्तु तत्त्वावेदनलक्षणम् ।
प्रमाणभावं भजते बाधवैधुर्य्यहेतुतः ॥

इति चेत् ? नैवं, व्यवहारागोचरस्यापि तस्य प्रतिभासकालीनस्य इदन्त्वावच्छिन्ने समुत्पन्नस्य व्यवहारिक-पारमार्थिकविलक्षणप्रातिभासिकसत्त्वस्वीकारात् इति । एवं मतं प्रपञ्चयन्नाह वृत्तिकारः,—इदमिति । अपरोक्षेति—चाक्षुषत्वेन अनुभूयमान-प्रत्यक्षज्ञानविषयता न स्यादिति भावः । सत्त्वे—व्यवहारिकत्वे इत्यर्थः । बाधा-भावात—ब्रह्मप्रमाऽतिरिक्तप्रमाबाध्यत्वानुपपत्तेरित्यर्थः । सदसद्विलक्षणेति ।—सत्त्व-मत्र—व्यवहारिकत्वम, असत्त्वञ्च—तुच्छत्वलक्षणम ; तथा च, पारमार्थिकब्रह्मभिन्न-त्वेनाङ्गीकृतस्य तस्य शुक्तिरूप्यादेः यत सत्त्वं, तन्न व्यवहारिकं, न वा तुच्छत्वलक्षणम, अपि तु तद्विलक्षणम् अनिर्वचनीयत्वरूपम। तदेतन्मतस्य समर्थनाय वृद्ध-कारिकाः उदाहरति, तथा चेति ।—सत्त्वे—सत्यत्वे, व्यवहारिकपारमार्थिकरूपत्वे इत्यर्थः । बाधसंवित्तिः,—संसारदशायां "नेदं रजतम" इत्यादिबाध्यत्वप्रतिभासः इत्यर्थः । द्वयात्मत्वम—एकस्य सदसदुभयात्मकत्वम । विरुद्धत्वात्—एकस्मिन् धर्मिणि मिथो विरोधात इति भावः । अतः,—अस्मादेव हेतुद्वयात । कुतः अनिर्वचनीयं तत्त्वान्तरं सिध्यति इति सद्वादिनं प्रति पूर्वपक्षं निराकर्त्तुम अनिर्वचनीयतावादि-कारिकामवतारयति, मायामयत्वेति ।—प्रपञ्चस्य—ब्रह्मभिन्नतया प्रमितस्य विश्वस्य, प्रमाणतः,—अनुमानादिना, मायामयत्वसिद्धौ—ब्रह्मसाक्षात्कारजन्यध्वंसप्रतियोगित्वे निर्णीते इत्यर्थः, व्यवहारिकं प्रामाण्यमिति—व्यवहारमात्रोपयिकं ब्रह्मप्रमाऽति-रिक्तज्ञानजन्यबाधाप्रतियोगित्वविषयकत्वरूपं प्रामाण्यमित्यर्थः । तत्त्वावेदनलक्षणं—पारमार्थिकत्वविषयकं प्रमाणमित्यर्थः, अद्वैतागमवाक्यं—"तत्त्वमसि श्वेतकेतो ! अहं ब्रह्मास्मि" इत्यादि श्रुतिवाक्यम इत्यर्थः, प्रमाणभावं—पारमार्थिकप्रमाणत्वम् इति यावत, बाधवैधुर्य्यहेतुतः,—कालत्रयेऽपि बाधरहितत्वरूपहेतुतः इत्यर्थः,

तस्मान्मायामयत्वेऽपि युक्ता ब्रह्मणि मानता ।

अद्वैतागमवाक्यानामिति तावत् व्यवस्थितम्" ॥

तन्न, "इदं रजतम्" इत्यनेन एव निर्वचनीयत्वात् "न सन्नासत्" इति अनिर्वचनीयत्वेन निर्वचनीयत्वाच्च ॥ ५४ ॥

न्यायमतं दूषयति,—

**नान्यथाख्यातिः, स्ववचोव्याघातात् ॥ ५५ ॥**

"इदं रजतम्" इति शुक्तिः एव रजतात्मना अवभासते इति न ; अन्यत् अन्यात्मना अवभासते इति संविहितत्वम् ॥ ५५ ॥

आरोपितरजतमेव तत्र अवभासते, इति स्वमतमाह,—

**सदसत्ख्यातिर्बाधाबाधात् ॥ ५६ ॥**

"इदं रजतम्" इति पुरोवर्त्तिविषयतया सत्, अबाधनात् ।

---

मायामयत्वेऽपि, प्रपञ्चस्य इति शेषः. व्यवस्थितमिति—घटपटादिविषयाणां व्यवहारिकत्वं, सच्चिदानन्दरूपस्य ब्रह्मणस्तु पारमार्थिकत्वम् इति व्यवस्था इति भावः। तदिदं मतं दूषयति, तन्नेति।—सर्वथाऽपि अनिर्वचनीयत्वेनाङ्गीक्रियमाणस्य शुक्तिरूप्यादेः "इदं रजतम्" इत्यनेनैव व्यवहारेण निर्वचनीयत्वात् अनिर्वचनीयत्ववादो निर्युक्तिकः इति वृत्तिकृतामाशयः इति भावः ॥ ५४ ॥

"शुक्तिरेव रजतात्मना अवभासते" इत्यन्यथाख्यातिवादिनां नैयायिकानां मतं दूषयितुं सूत्रमवतारयति—न्यायमतमिति। स्ववचोव्याघातादिति—अन्यत्र अन्यरूपस्य धर्मविधानतुल्यत्वम् अन्यथाशब्देनोच्यते ; अन्यथा च तस्य भानमुच्यते इति स्ववचः एव व्याहतम् इत्यर्थः। अत्रायमाशयः,—पुरोवर्त्तिनि आरोपितस्य अविद्यमानत्वेन, अन्यत्र सत्त्वस्य तज्ज्ञानाप्रयोजकत्वेन च नान्यथाख्यातिवादः युक्तिपथमारोढुम् अर्हति ; न च सर्वत्र असतः पदार्थस्य भाने सामग्र्या असम्भवात्, सन्निकर्षाद्यसम्भवाच्च न तदङ्गीकर्त्तुमुचितम्, इत्यतः आरोप्यमाणस्य क्वचित् सत्तामात्रमेव अपेक्षणीयम् ; तथा च, ज्ञानलक्षणसन्निकर्षवशेनैव सत्त्वस्यैव तस्य अन्यत्र प्रत्यक्षावभास इति वाच्यम्, अनादिवासनाधाराया एव तादृशभ्रमहेतुत्वस्यौचित्यात् इति ॥ ५५ ॥

ख्यातिविषये परमतानि निराकृत्य इदानीं स्वमतम् उपपादयितुं सूत्रमवतारयति, आरोपितेति।—तथा च, सदसत्ख्यातिरेव साङ्ख्यानां सिद्धान्तः। अत्रायमाशयः,—

रजतविषयतया तु असत्, बाधात्, तस्मात् सदसतो तत्त्वम् ॥ ५६ ॥

स्फोटं निराकरोति,—

**प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥ ५७ ॥**

प्रतीतिः वर्णेषु, अप्रतीतिः स्फोटे, तस्मात् न स्फोटात्मकः शब्दः । यदि वर्णाः किञ्चिदपि न प्रतिपादयन्ति, स्फोटप्रतिपादनम् अपि कुतः ? अथ प्रतिपादयन्ति, किम् अन्तर्गडुना स्फोटेन ? वर्णाः एव प्रतिपादकाः सन्तु । नानात्वात् अपि न स्फोटसिद्धिः ॥ ५७ ॥

प्रत्यक्षबाधात् वेदस्य अनित्यत्वम् उक्तम् । इदानीं वर्णानाम् अनित्यत्वं प्रतिपादयति,—

**न शब्दनित्यत्वं, कार्य्यताप्रतीतेः ॥ ५८ ॥**

प्रत्यक्षादेः शब्दश्रवणानन्तरं नास्ति इति प्रतीतेः ; अन्यथा घटस्यापि नित्यत्वं स्यात् ॥ ५८ ॥

---

सर्वेषामेव भावानां स्वरूपेण नैव बाधः सम्भवति, नित्यत्वात् ; संसर्गतस्तु बाधः स्वीकरणीयः । अत्र बाधो नाम—पुरोवर्त्तितया गृह्यमाणे अधिष्ठाने निषेधधीविषयत्वं, तदेव च असत्त्वं प्रकृते अभिप्रेतम् ॥ ५६ ॥

प्रसङ्गेन स्फोटं निराकर्त्तुं सूत्रमवतारयति, स्फोटमिति ।—पदघटकीभूतप्रत्येकवर्णेभ्यः अतिरिक्तं घटः पटः इत्यादिरूपं निरवयवम् एकं पदरूपं शब्दात्मकं वस्तु स्फोट इति शाब्दिकैः अभ्युपगम्यते । स्फुटति—प्रतीतिविषयताम् आपद्यते अर्थोऽनेन इति व्युत्पत्त्या स्फोटशब्दः परेषु रूढः, उच्चरितप्रध्वस्तानां वर्णानां मेलनासम्भवेन अर्थप्रतीतिजनकत्वानुपपत्तेः । तदेतत् मतं दूषयितुं वृत्तिकारः प्रपञ्चमारचयति, प्रतीतिरिति ।—वर्णेषु इत्यत्र सप्तम्याः विषयत्वमर्थः, तथा च "घटः" इत्याद्युक्ते घकाराकारटकाराकाराणामेव प्रतीतेः सर्वानुभवसिद्धतया, अखण्डस्य पदात्मकस्य शब्दस्य च कस्याप्यनुभवेनाविषयीकरणात् निष्प्रमाणकः स्फोटरूपशब्दः इति भावः ॥ ५७ ॥

वेदस्य अनित्यत्ववत् शब्दस्य वर्णानामपि अनित्यत्वं प्रतिपादयितुं सूत्रमवतारयति,

प्रकृतिपुरुषात् अन्यत् सर्वं कार्य्यम् इति प्रतिपादनार्थं प्रकृते,—

**पूर्वसिद्धसत्त्वस्याभिव्यक्तिः, दीपेनेव घटस्य ॥ ५९॥**

यथा अन्धकारस्थः घटः दीपेन अभिव्यज्यते, तथा वर्णाः ध्वनिभिः व्यज्यन्ते । तदभावात् न सन्ति इति प्रतिभानं, न तु असत्त्वात् ॥ ५९ ॥

समाधानमाह,—

**सत्कार्य्यसिद्धान्तश्चेत् सिद्धसाधनम् ॥ ६० ॥**

अभिव्यक्तिम् आश्रित्य नित्यत्वम् उच्यते, ततः सत्कार्य्य-सिद्धान्तश्चेत्, सिद्धसाधनम् ॥ ६० ॥

एकः एव आत्मा, तथा च—

"सितनीलादिभेदेन यथैकं दृश्यते नभः ।

भ्रान्तदृष्टिभिरेवात्मा तथैकः सन् पृथक् पृथक् ॥" इति ।

तत् निराकरोति,—

**नाद्वैतमात्मनः, लिङ्गात्तद्भेदप्रतीतेः ॥ ६१ ॥**

प्रत्यभिज्ञेति ।—"स एवायं क-कारः" इत्यादि प्रत्यभिज्ञानादेव वर्णानां नित्यत्वं न सम्भवति, "उत्पन्नः कः विनष्टो गः" इत्यादि सार्व्वजनीनानुभववलेन तेषाम् अनित्यत्वसिद्धेः प्रत्यभिज्ञायाः जातिविषयकत्वेनापि प्रामाण्योपपत्तेरित्यर्थः ॥ ५८ ॥

ननु पूर्वसिद्धसत्ताकस्यैव शब्दस्य कण्ठताल्वाद्यभिघातेन याऽभिव्यक्तिः, सैव शब्दानाम् उत्पत्तिरस्तु, इति शङ्कां सूत्रेणावतारयति—प्रकृतेरिति ॥ ५९ ॥

एवञ्चेत् तेषां स्वपक्षे एव प्रवेशः स्यात् इति समाधानसूत्रमवतारयति—समाधानमिति । सिद्धसाधनं, साङ्ख्यमते इति भावः । इदम् उपलक्षणं, शब्दनित्यतावादिनां मीमांसकानां मते दोषान्तरमपि दोष इत्यूहनीयम् ॥ ६० ॥

प्रसङ्गात् एकात्मवादं निराकर्तुं सूत्रमवतारयति, एक एवेति ।—यथा एकं नभः आरोपितेन सितनीलादिपृथिव्यादिरूपभेदेन भ्रान्तदृष्टिभिः पृथक् पृथक् प्रतीयते, तथा एक एव आत्मा अन्तःकरणादिरूपोपाधिभेदेन प्रतिदेहं पृथगिव अवभासते इति

जरामरणादिलिङ्गनियमात्। पूर्वञ्च सिद्धवत् उक्तम्, इदानीं साध्यते इति अपौनरुक्त्यम्॥ ६१॥

मा भूत् सजातीयाद्वैतम्, अनात्मानः भविष्यन्ति; घटादयः तु आत्मरूपाः, इति विजातीयाद्वैतं भविष्यति, इत्यत्राह,—

**नानात्मनाऽपि, प्रत्यक्षबाधात्॥ ६२॥**

न अनात्मना घटादिना आत्मनः एकत्वं, घटादीनां बाह्यत्वेन भेददर्शनात्। एकत्वे घटादीनाम् आत्मत्वम्, आत्मनश्च परिणामित्वम् इति॥ ६२॥

सजातीयविजातीयाद्वैतं भविष्यति, इत्यत्राह,—

**नोभाभ्यां तेनैव॥ ६३॥**

अबाधितप्रत्ययेन एव भेददर्शनात्॥ ६३॥

एवम् अद्वैतश्रुतिविरोधः, इत्यत्राह,—

**अन्यपरत्वमविवेकानां तत्र॥ ६४॥**

अज्ञानां तच्छ्रुतिः अन्यपरत्वं सामान्यपरत्वम्॥ ६४॥

---

श्लोकार्थः। ननु इदं सूत्रं प्रथमाध्यायोक्तसूत्रेणैव गतार्थम्, इह तु अस्य पुनरुपन्यासः निरर्थकः, अत आह—पूर्वञ्च इति॥ ६१॥

अनात्मना घटादिना अपि विजातीयेन आत्मनः अभेदः अद्वैतवादिभिरङ्गीकृतः न सम्भवति प्रत्यक्षबाधात्, इति प्रतिपादयितुं सूत्रमवतारयति—मा भूदिति। आत्मत्वं—चेतनत्वम्। परिणामित्वं—जड़त्वम्। तथा च, एतन्मते चिज्जड़भेदव्यवस्था सर्वानुभवसिद्धा न स्यादेवेति भावः॥ ६२॥

सजातीयेति।—तेनैव—प्रत्यक्षबाधेन इत्यर्थः इति केचित्। उभाभ्याम्—आत्मानात्मभ्याम्; "त्वं सुखी, अहं दुःखी, घटोऽयम्" इत्यादि अबाधितप्रत्यया एव आत्मैक्यबाधकाः इति भावः॥ ६३॥

वास्तवात्मभेदे अद्वैतश्रुतिविरोधं निराकर्तुं सूत्रमवतारयति—एवमिति। तत्र—आत्मैक्यश्रुतौ, आत्मैक्यप्रतिपादिकायामित्यर्थः, अविवेकानां—मूढानाम्, अन्यपरत्वम्—आत्मैक्यपरत्वं, प्रतिभातीति शेषः। श्रुतौ सामान्यशब्दस्य—एकत्वम् अर्थो ज्ञेयः॥ ६४॥

एकात्मवादिनां जगदुपादानकारणमपि नास्ति, इत्याह,—

**नात्माऽविद्या नोभयं जगदुपादानकारणं, निःसङ्गत्वात् ॥ ६५ ॥**

कूटस्थत्वात् न आत्मा कारणम्। अविद्यायाः असत्यत्वात् न कारणत्वम्; सत्यत्वे अद्वैतहानिः; सम्बन्धाभावात् न उभयं कारणम् ॥ ६५ ॥

चिदानन्दस्वरूपः आत्मा, इत्यत्राह,—

**नैकस्याऽऽनन्दचिद्रूपत्वे, द्वयोर्भेदात् ॥६६॥**

आनन्दः,—सुखम्। चित्—ज्ञानम्। आनन्दचिद्रूपत्वे द्वैतत्वापत्तिः। न च "आनन्दः न विषयजं सुखं, चितिः वा वृत्तिज्ञानं, किन्तु अन्यदेव अलौकिकम्" इति वाच्यम्, अलौकिकत्वेन अप्रामाणिकत्वात्। प्रामाणिकत्वे प्रमाणसत्त्वेन एव द्वैतत्वम्। किञ्च, आत्मनः आनन्दरूपत्वम्? आनन्दधर्मत्वं वा? आनन्दधर्मत्वे द्वैतापत्तिः, निर्गुणत्वादिश्रुतिविरोधश्च। आनन्दरूपत्वे संसारावस्थायां कथम् आनन्दः न अनुभूयते? अविद्यातिरोधानात् इति चेत्? अमूर्त्तत्वात् अविद्यायाः न

वास्तवात्मैक्यवादिनां जगत्सृष्टिरपि नोपपद्यते, इति प्रतिपादयितुं सूत्रमवतारयति—एकात्मेति। कूटस्थत्वात्—अपरिणामित्वात्। कारणम—उपादानकारणं,भवितुमर्हतीति शेषः। सत्यत्वे, अविद्याया इति शेषः। सम्बन्धाभावादिति—सदसतोः सम्बन्धानुपपत्तेः अविद्योपहितं ब्रह्म न जगदुपादानं भवितुमर्हतीति भावः ॥ ६५ ॥

चित्सुखयोः आत्माऽभिन्नत्वमतं निराकर्तुं सूत्रमवतारयति, चिदानन्देति।—आनन्दचैतन्ययोः एकत्वं भिन्नत्वं वा भवदभिप्रेतम? आद्ये—प्रतीतिविरोधः। द्वितीये त्वाह, आनन्दचिद्रूपत्वे इति।—आनन्दस्य विषयजन्यसुखरूपत्वमेव सर्वानुभवसिद्धं, तदतिरिक्तस्य आनन्दस्य प्रतीतिविरोधेन निष्प्रमाणकत्वेन च अनङ्गीकारात् इति प्रतिपादयितुं प्रपञ्चमारचयति—न चेति। प्रामाणिकत्वे, प्रपञ्चस्य इति शेषः। आत्मनः आनन्दरूपत्वम आनन्दाश्रयत्वं वा इत्युभयमपि न सम्भवति इत्याह—किञ्चेति। अविद्यातिरोधानादिति।—अस्ति, न भाति इति व्यवहारप्रयोजकत्वमेव अत्र तिरोधानं

तथा कुड्यवत् तिरोधानसम्भवः। अथ अभिभवः तिरोधानशब्दार्थः ? नित्यस्य विभोः न अभिभवः। अविद्यायाः मिथ्यात्वात् आत्मनः सत्यत्वात् न अनयोः सम्बन्धः, वस्त्ववस्तुनोः सम्बन्धाभावात्, सम्बन्धे वा निःसङ्गादिश्रुतिविरोधः। आनन्दानुभवे च कर्मकर्त्तृविरोधः। किञ्च, आनन्दात्मत्वे किं प्रमाणम् ? किं प्रमाणानुसरणेन, स्वयम् एव प्रमाणरूपत्वात् आत्मनः इति चेत् ? तन्न, प्रमाणव्यवस्थार्थं प्रमेयस्वीकारात्। प्रमेयाभावात् किं प्रमाणेन परिच्छेत्तव्यम् ? प्रमित्युपधानाभावात् च प्रमाणत्वम् एव नास्ति। चिद्रूपत्वस्य

विज्ञेयम्। अमूर्त्तत्वादिति—अदृश्यत्वादिति भावः। कुड्यादिकं हि द्रव्यं घटादेर्व्यवधायकं नास्ति न भाति इति व्यवहारं प्रयोजकतया लोके दृष्टम्। तद्वैधर्म्यात् नाविद्या विपरीतज्ञानरूपा तज्जनितसंस्काररूपा वा आनन्दात्मकस्य ब्रह्मणः तिरोधानहेतुः भवितुम् अर्हति इति तात्पर्य्यम्। तिरोधानशब्दस्य अर्थान्तरं शङ्कमान आह, अथेति।—अभिभवः,—विपरीतगुणोदयेन प्रकृतगुणविषयकज्ञानाभावप्रयोजकत्वम्। नित्यस्येति—अपरिणामिनित्यस्य, निर्गुणस्य इत्यर्थः। मिथ्यात्वात्—अतुल्यसत्ताकत्वात्; तथा च, समानसत्ताकयोरेव वस्तुनोः सम्बन्धः लोके दृष्टः, तदभावात् न प्रकृते आत्मनः अविद्यया सम्बन्धः सम्भवतीति भावः। आनन्दानुभवे इति—स्वस्वरूपस्य आनन्दस्य स्वेनैवानुभवे इत्यर्थः। आत्मनः आनन्दरूपत्वे प्रमाणं पृच्छति—किमिति। प्रतिवादी आह, किं प्रमाणानुसरणेन इति।—आत्मनः आनन्दानुभवे आत्मनः एव प्रमाणत्वात् निरर्थकं प्रमाणान्तरानुसरणम् इति भावः। एतदेव विवृणोति—स्वयमेवेति। प्रमेयस्वीकारात्—प्रमेयभेदस्वीकारादित्यर्थः। तथा च, अनुभूयमानस्य प्रमेयभेदस्य अबाधितस्य व्यवस्थोपपत्तये प्रमाणव्यवस्था लोके अङ्गीक्रियते इति दर्शनात् इत्यर्थः। यद्येवं प्रमेयं वस्तुतो नास्ति तदा फलाभावात् प्रमाणस्वरूपे तद्व्यवस्थायां वा प्रयोजनं न सिध्यति इति जगति प्रमाणप्रमेयव्यवहारः सर्वानुभवसिद्धः विलोप्येत इति भावः। परिच्छेत्तव्यमिति—विषयीकरणीयमित्यर्थः। प्रमित्युपधानाभावादिति—आनन्दचैतन्ययोः एकत्वे प्रमाणस्वरूपघटकीभूतप्रमितेः जन्यत्वेन भेदनियततायाः उच्छेदापत्तेः प्रमाणत्वमेव असम्भवदुक्तिकं स्यात् इत्यर्थः। लौकिकसुखज्ञानयोः मिथो भिन्नत्वेऽपि अलौकिकस्यानन्दस्य अलौकिकचिद्रूपतास्वीकारे नास्ति कोऽपि विरोधः इति शङ्कते—चिद्रूपत्व-

न आनन्दरूपत्वं, द्वयोः भेदात्। तयोः अलौकिकत्वेन अभेद-सिद्धिः इत्यपि न, अलौकिकत्वात् एव व्याप्तिग्रहणाभावात्। ततः न आत्मनः द्विरूपत्वम् इति। यदि च मुक्तौ आनन्दः न अनुभूयते, किं तेन ? अनुभूयते चेत्, अनुभवित्रनुभवानुभव-नीयाः वाच्याः। यथा च यावद्देहभावित्वेन आत्मसाक्षात्कारात् अपि समाधिः इति उच्यते, देहपातानन्तरम् आत्मनः स्थितिः इति क्व समाधिः ? तथा च "समाधौ सकलदुःखनिवृत्तिः आनन्दलाभः" इति अभिमन्यते। देहाभावात् समाधिनाशे क्व आनन्दानुभवः ? एवञ्च मुक्तौ आनन्दानुभवः भ्रान्तः इति ॥६६॥

मिति। परिहरति—नेति। अलौकिकत्वात्—प्रमाणागोचरत्वात् इत्यर्थः। व्याप्ति-ग्रहणाभावात् इति—चिदात्मकस्य आनन्दस्य सर्वप्रमाणागोचरतया तत्सहचरितत्वेन कस्यापि हेतोः ग्रहणासम्भवात् सहचारग्रहोपजीवकव्याप्तिग्रहणासम्भवेन तन्मूलकानु-मानेनापि चिदात्मकस्यात्मनः आनन्दाभेदसिद्धेः असम्भवात् इत्यर्थः। उपसंहरति—ततः इति। किं तेनेति।—अननुभूयमानस्य आनन्दस्य अपुरुषार्थत्वमेव, तथाविधस्य आनन्दस्य अभ्युपगमः मोक्षदशायां निष्प्रयोजनकः इति भावः। मुक्तिदशायाम् आनन्दानु-भवाङ्गीकारपक्षे दोषम् उद्घाटयितुं शङ्कते, अनुभूयते इति।—आनन्द इति शेषः। दोषमाह, अनुभवित्रनुभवेति।—तथा च, मोक्षदशायाम् आनन्दः अनुभूयते इति पक्षे द्वैतापत्तिरेव दोष इति भावः। सिद्धान्तं विशदयितुं प्रपञ्चयति—यथा चेति। याव-द्देहभावित्वेनेति।—अत्रायमाशयः,—वेदान्तिभिः जाग्रत्-स्वप्न-सुषुप्तिषु आत्मनः साक्षात्-कारस्य अविच्छेददर्शनेन तस्य नित्यत्वं स्वप्रकाशत्वञ्च अङ्गीक्रियते। न चैतत् आत्मनः स्वप्रकाशत्वसाधकमपि नित्यत्वसाधनाय अलम् आत्मनः साक्षात्कारस्य जाग्रदाद्यवस्था-त्रयेषु नियतमुपलभ्यमानस्य देहसम्बन्धकालत्वनियमेन देहपातानन्तरं तथावस्थाने तत्-सत्तायां प्रमाणाभावेन बाधसम्भवात् इति आत्मनो नित्यत्वे तत्साक्षात्कारस्य न साध-कता सम्भवति इति "यथा च" इत्यादिकस्य "क्व समाधिः" इत्यन्तस्य ग्रन्थस्य पर्य्यवसितार्थः विज्ञेयः। तत्र समाधिपदम्—आत्मनित्यताविषयकसमाधानापरपर्य्यायं सिद्धान्तमेव प्रतिपादयति। अनयैव युक्त्या समाधौ वृत्तिनिरोधरूपे आत्मसुखरूपतासिद्धान्तं निराकरोति वृत्तिकारः,—"तथा च" इत्यादिना "क्वानन्दानुभवः" इत्यन्तेन ग्रन्थेन। फलितमाह, एवमिति।—तथा च, समाध्यवस्थायाम् अनुभूयमानत्वेन अङ्गीक्रियमाणः

अथ आनन्दश्रुतिः का वार्त्ता ? तथा च,—

"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन।
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" ॥

इति [ तैत्ति० उप० २ वल्ली० ४।८ अनु० ]। अत्राह,—

**दुःखनिवृत्तेर्गौणः ॥ ६७ ॥**

व्यक्तम् ॥ ६७ ॥

प्रकारान्तरमाह,—

**विमुक्तिप्रशंसा मन्दानाम् ॥ ६८ ॥**

मन्दानां—तामसानाम्। विमुक्तिप्रशंसा—प्रवर्त्तनार्थं प्रोत्साहनम् इति ॥ ६८ ॥

मनोवैभवं निराकरोति,—

**न व्यापकत्वं मनसः, करणत्वादिन्द्रियत्वाद्वा, वास्यादिवच्चक्षुरादिवच्च ॥ ६९ ॥**

यच्च "शिरसि मे वेदना" "पादे मे सुखम्" इति ज्ञानं मनसः विभुत्वं प्रतिपादयति, तत् आशुसञ्चारित्वात् क्रमाग्रहणनिमित्तम्; न अनेन विभुत्वसिद्धिः ॥ ६९ ॥

आनन्दः यथा फलतः दुःखाभावे एव पर्य्यवस्यति, तथैव मुक्तावपि दुःखाभाव एव स इत्यङ्गीकृत्य सन्तोषः आश्रयणीयः इति साङ्ख्यसिद्धान्तः वृत्तिकारेणात्र सूचित इति ध्येयम ॥ ६६ ॥

तमिमं सिद्धान्तं दृढयितुं सूत्रमवतारयति, अथ आनन्दश्रुतेरिति।—का वार्त्ता—कथं प्रामाण्यमुपपादनीयमित्यर्थः ॥ ६७ ॥

मुक्तौ आनन्दव्यवहारम् अन्यथाऽप्युपपादयितुं सूत्रमवतारयति—प्रकारान्तरमिति। तामसानामिति उपलक्षणं, राजसतामसानामित्यर्थः ॥ ६८ ॥

प्रसङ्गात् मनोविभुत्ववादं निराकर्त्तुं सूत्रमवतारयति—मनोवैभवम् इति। सूत्रे वा-कारः समुच्चयार्थकः। मनसो विभुत्वसाधिकायाः युक्तेः आभासत्वं दर्शयति—यच्चेति। विभुत्वमत्र—अणुभिन्नत्वरूपं विज्ञेयम् ॥ ६९ ॥

दूषणान्तरमाह,—

**सक्रियत्वाद्गतिश्रुतेः ॥ ७० ॥**

सक्रियत्वात् इति अनुमानं दर्शितम् । गतिश्रुतेः इति शब्दः दर्शितः ॥ ७० ॥

अणुत्वेऽपि कारणाभावात् नित्यं भविष्यति, इत्यत्राह,—

**न निर्भागत्वं, तद्योगाद्घटादिवत् ॥ ७१ ॥**

न निर्भागत्वं—न अकारणवत्त्वम् । तद्योगात्—भाग-योगात् । किम् अस्य कारणम् ? अहङ्कारः । षट्केन युगपत् योगात् परमाणूनां सभागत्वसिद्धिः ; तस्मात् घटादिवत् अनित्यं मनः ॥ ७१ ॥

नित्यानित्यविभागमाह,—

**प्रकृतिपुरुषयोरन्यत् सर्वमनित्यम् ॥ ७२ ॥**

स्पष्टम् ॥ ७२ ॥

मनोविभुत्वे दोषान्तरं दर्शयितुं सूत्रमवतारयति—दूषणान्तरमिति ॥ ७० ॥

अणुत्वेऽपि मनसो न निरवयवत्वं वैशेषिकादिवत् अस्माभिरभ्युपेयते इति दर्शयितुं सूत्रमवतारयति, अणुत्वेऽपीति ।—अणुत्वेऽपि—अणुत्वेनेत्यर्थः । अस्य—भागयोगस्य, सावयवत्वस्य इत्यर्थः । कारणं—ज्ञापकरूपम् । अहङ्कारः,—अहमित्याकारिका वृत्तिः ; तथा च, निरवयवस्य वस्तुनः वृत्तिरूपपरिणामासम्भवेन तदन्यथाऽनुपपत्तिरेव मनसः सावयवत्वसाधिका इति भावः । षट्केन—पूर्वापरपश्चिमदक्षिणोर्द्ध्वाधोरूपदिक्षट्केन इत्यर्थः । सभागत्वसिद्धिः,—सावयवत्वसिद्धिः इत्यर्थः । केचित्तु सूत्रस्यार्थम् अन्यथा वर्णयन्ति, यथा—मनसो नाकारणकत्वं कारणयोगात्, किमस्य कारणमिति चेत् अहङ्कार इति गृहाण इति ॥ ७१ ॥

नैयायिकैर्नित्यत्वेनाङ्गीक्रियमाणानां दिक्कालादीनां साङ्ख्यसिद्धान्ते अनित्यत्वमेव इति व्युत्पादयितुं सूत्रमवतारयति—नित्यानित्येति । प्रकृतिपुरुषयोः,—प्रकृतिपुरुषाभ्याम् इत्यर्थः । अनित्यत्वं—सृष्टिकालावृत्तिध्वंसप्रतियोगित्वम् ॥ ७२ ॥

दिक्कालादीनां नित्यत्वात् कथं सर्वम् अनित्यम्? इत्यत्राह,—

**न भागलाभो भागिनो निर्भागत्वश्रुतेः ॥७३॥**

न कारणलाभः । भागिनः,—जगत्कारणस्य प्रधानस्य । निर्भागत्वश्रुतेः "मूलकारणत्वात् न अस्य कारणान्तरम्" इति श्रुतेः ॥ ७३ ॥

आनन्दाभिव्यक्तिः मुक्तिः इति । तत् दूषयति,—

**नानन्दाभिव्यक्तिर्मुक्तिः, निर्धर्मकत्वात् ॥७४॥**

मुक्तौ धर्मधर्मिभावाभावात् । सा अभिव्यक्तिः किं सर्वदा अस्ति? संसारदशायामपि मुक्तिप्रसङ्गः । अथ मुक्तौ क्रियते । कार्य्यभावस्य अवश्यं नाशात् पुनः अनिर्मोक्षः इति ॥ ७४ ॥

विशेषगुणोच्छित्तिः मोक्षः इति दूषयति,—

**न विशेषगुणोच्छित्तिः, तद्वत् ॥ ७५ ॥**

विशेषनिषेधात् सामान्यगुणस्वीकारः । तथा च, गुणयोगात् अनिर्मोक्षः ॥ ७५ ॥

---

जडेषु प्रकृतेरेव अकारणकत्वात् दिक्कालादीनां जडानां न नित्यत्वं सम्भवति इति युक्तिप्रदर्शनपरं सूत्रमवतारयति—दिक्कालादीनामिति । भागिनः,—भागिनः एव इत्यर्थः । तथा च, श्रुत्या जगत्कारणस्य प्रधानस्यैव अकारणकत्वप्रतिपादनात् तद् बलेनैव दिक्कालादीनां सकारणकत्वं विज्ञेयम । इदमुपलक्षणम्;"दिशं भूमिञ्च निर्ममे" इत्यादि श्रुतेः कालोपाधित्वेन अङ्गीक्रियमाणानां अन्यानामेव कालत्वाङ्गीकारेण एव अन्यव्यवस्थासम्भवात् च कालस्यापि अनित्यत्वम इति ज्ञेयम । प्रधानस्यापि माऽस्तु अकारणकत्वम्, इति शङ्कां निराकरोति, मूलकारणत्वादिति ।—तथा च, प्रधानस्य अकारणकत्वास्वीकारे अनवस्थैव दोषः इति भावः ॥ ९३ ॥

नित्यसुखाभिव्यक्तिः मुक्तिः इतिवादिनां भाट्टानां मतं दूषयितुं सूत्रमवतारयति, आनन्दाभिव्यक्तिरिति ।—किम आत्मस्वरूपः आनन्दः? उत तद्विशेषणः? प्रथमे संसारावस्थायामपि मोक्षप्रसङ्गः, द्वितीये कार्य्यस्य भावरूपस्य नाशावश्यम्भावात मुक्तस्यापि पुनः बन्धप्रसङ्गः इति दूषितमाशयो विज्ञेयः ॥ ७४ ॥

प्रसङ्गेन मोक्षस्य विशेषगुणात्यन्ताविरहरूपतां निराकर्त्तुं सूत्रमवतारयति,

देहपरिमाणः आत्मा, तस्य देहमात्रात् गतिः एव मुक्तिः इति। तत् दूषयति,—

**न विशेषगतिर्निष्क्रियस्य ॥ ७६ ॥**

न ऊर्द्ध्वगत्या मुक्तिः, "निर्गुणनिष्क्रियनिर्धर्मकः आत्मा" इति श्रुतेः। कुतः मुक्तिः? हस्तिकृमिदेहपरिमाणत्वेन सङ्कोच-विकासाभ्यां सावयवत्वेन अनित्यस्य स्यात् ॥ ७६ ॥

बौद्धमुक्तिं दूषयति,—

**नाकारोपरागोच्छित्तिः, क्षणिकत्वादि-दोषात् ॥ ७७ ॥**

सः किमाकारः? ज्ञानस्वरूपः; तथा च, ज्ञानस्य अपि उच्छेदः इति कस्य मुक्तिः? अथ धर्मः; क्षणिकत्वात् सर्वदा तन्नाशे संसारिणाम् अपि मुक्तिः स्यात्। अथ वासनावशात् तदा न मुच्यते, वासनोच्छित्तिः एव मोक्षः अस्तु, किमाकारोप-रागोच्छित्त्या? आदिशब्दात् स्वच्छसंवित्प्रवाहस्य अपि नश्वर-त्वात् कस्य मुक्तिः? इति ॥ ७७ ॥

---

विशेषेति।—विशेषगुणाभावस्य मोक्षत्ववादिनां मते मोक्षावस्थायाम् आत्मनि सामान्यगुणसद्भावस्य स्वीकारात् आत्मनो निर्गुणत्वश्रुतिविरोधेन नायं पक्षः स्वीकर्त्तुम् उचित इति भावः ॥ ७५ ॥

आर्हतं मतं दूषयितुं सूत्रमवतारयति, देहपरिमाण इति।—आत्मनो देहपरि-माणत्वे हस्तिकृमिदेहप्रवेशे अवयवोपचयापचययोः आवश्यकत्वेन सावयवत्वं प्रसज्यते, तदिष्टापत्तौ च अनित्यता स्यात; अतो व्यापकत्वम् आत्मनः अवश्यम् अङ्गीकार्य्यम्; ततश्च निष्क्रियत्वात् तस्य मोक्षदशायाम् ऊर्द्ध्वगमनं परैरङ्गीकृतं न कथञ्चिदपि प्रमाण-पदवीमारोढ़ुम् अर्हति इति भावः ॥ ७६ ॥

संसारदशायां विषयोपरक्ततया प्रतिभासमानस्य विज्ञानसन्तानस्य तदुपराग-निवृत्तिरेव मोक्षः, इति विज्ञानवादिबौद्धमतं दूषयितुं सूत्रमवतारयति—बौद्धमुक्ति-मिति। आकारस्य ज्ञानाभेदाङ्गीकारे आकारोच्छेदे ज्ञानस्यापि आत्मनः उच्छेदः इत्याह—स किमाकारः इति। आकारस्य ज्ञानधर्मत्वे दोषमाह—अथ धर्मः

बौद्धविशेषस्य मुक्तिं दूषयति,—

**न सर्वोच्छित्तिः, अपुरुषार्थत्वादिदोषात् ॥७८॥**

स्पष्टम् ॥ ७८ ॥

शून्यं मुक्तिः इति दूषयति,—

**एवं शून्यमपि ॥ ७९ ॥**

अपुरुषार्थत्वादेः। आदिशब्दात् अनुष्ठानाभावः सूचितः। यदि आत्मा स्वीक्रियते, तदा तत्परिपन्थिनि द्वेषः, तदनुकूले च स्नेहः इति तयोः बन्धहेतुत्वात् अनिर्मोक्षः स्यात्। मा एवम्। न हि रागद्वेषमात्रात् बन्धः, किन्तु तद्विशेषात्। यथा बौद्धपक्षे एव न संवित्सन्तानमात्रात् बन्धः, स्वच्छसंवित्-सन्तानस्य मोक्षाङ्गत्वात्, तथा कैवल्यात्मपरिपन्थिनि द्वेषात् निरुपहितात्मस्थितौ रागात् न बन्धः, प्रत्युत मोक्षहेतुत्वम् एव इति ॥ ७९ ॥

---

इत्यादिना। वासनोच्छित्तिरेव मोक्षः, नाकारोच्छित्तिः इति बौद्धमतान्तरं निराकर्त्तुम् आदिपदतात्पर्य्यमाह—यथेति ॥ ७७ ॥

आत्मादिनिखिलसर्वपदार्थोच्छेदः मुक्तिः इति बौद्धविशेषमतं दूषयितुं सूत्रमवतार-यति—बौद्धविशेषस्य इति ॥ ७८ ॥

शून्यवादिनो बौद्धस्य मतं निरसितुं सूत्रमवतारयति—शून्यमिति। एवमित्यस्य अर्थमाह—अपुरुषार्थत्वादेरिति। अत्र शून्यवादी प्रत्यवतिष्ठते, यदीति।—आत्मा स्थिरः कश्चन भावः यदि स्वीक्रियते इत्यर्थः। तत्परिपन्थिनि—तत्प्रतिकूले, दुःखजनके इति भावः। तदनुकूले—तस्य सुखोत्पादके इत्यर्थः। तयोः,—अनुकूलप्रतिकूलयो-रित्यर्थः। बन्धहेतुत्वात—रागद्वेषादिद्वारेण संसारकारणत्वात। तदेतन्मतं दूषयति—मैवमिति। तद्विशेषात्—तयोः,—रागद्वेषयोः, विशेषात—अज्ञानसहकृतत्व-प्रयुक्तोत्कृष्टरूपविशेषादित्यर्थः। संवित्सन्तानमात्रात्—विज्ञानप्रवाहरूप-आत्मसद्भाव-मात्रादित्यर्थः। स्वच्छसंवित्सन्तानस्येति—समाधिजनितरागद्वेषाभावसहकृतनिर्विषयक-विज्ञानप्रवाहस्य इत्यर्थः। एतदेव प्रपञ्चयन्नाह—तथेति। प्रत्युत इति—बन्धसाधन-वैलक्षण्येन इत्यर्थः ॥ ७९ ॥

कालदेशकर्मविशेषात् मुक्तिः इति। तत् दूषयति,—

**संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि ॥ ८० ॥**

देशसंयोगस्य वियोगान्तत्वात् पुनः संसारः। आदिशब्दात् कालकर्मणोः अपि परिग्रहः। कालयोगस्य अपि एवम्। कर्मणः च क्षयित्वात् पुनः संसारः इति ॥ ८० ॥

भागस्य जीवात्मनः भागिनि ब्रह्मणि योगः मुक्तिः इति। तत् दूषयति,—

**न भागियोगो भागस्य ॥ ८१ ॥**

न ब्रह्मणः भागः जीवात्मा, ब्रह्मणः भागाभावात्। योगस्य वियोगान्तत्वात् पुनः बन्धप्रसङ्गः। अथ संसारकारणाभावात् न वियोगः इति, एवञ्च स एवास्तु, किं भागयोगकल्पनया? ॥८१॥

अणिमादिसिद्धिः एव मुक्तिः इत्यत्राह,—

**नाणिमादियोगोऽप्यवश्यम्भावित्वात्तदुच्छित्तेः, इतरवियोगवत् ॥ ८२ ॥**

लोकान्तरदेशे कालविशेषे यागादिविधेयकर्मजनितादृष्टविशेषेण लोकोत्तरस्रक्चन्दनवनितादिलाभ एव मुक्तिरिति कर्ममीमांसकानां मतं दूषयितुं सूत्रमुत्थापयति—कालदेशेति। देशसंयोगस्येति।—तथा च, संयोगमात्रस्यैव वियोगान्तत्वध्रौव्येण संयोगरूपकारणोच्छेदे पुनर्बन्धप्रसङ्गस्य एतस्मिन्मते दुर्निवारत्वमेवेति वृत्तितात्पर्य्यम ॥ ८० ॥

भागस्य—जीवस्य, भागिनि—ब्रह्मणि पुनर्योग एव मुक्तिः इतिवादिनां मतं दूषयितुं सूत्रमुत्थापयति, भागस्येति।—एवंविधमुक्तिस्वीकारे आत्मनः अभागत्वबोधिका श्रुतिरेव बाधिका इति फलितम्। दोषान्तरमाह—योगस्येति। कारणाभावेन भागिनः—ब्रह्मणः, भागस्य—जीवस्य न पुनः प्रच्युतिसम्भवः इति शङ्कते—अथेति। शङ्कां निराकरोति, एवमिति।—स एव—संसारकारणाभाव एव। अस्तु, मोक्ष इति शेषः। भागयोगकल्पनया, प्रमाणरहितया इति भावः ॥ ८१ ॥

तेषाम् अपि कार्य्यत्वात् अनित्यत्वम्। आदिशब्दात् लघिमा, गरिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वं, वशित्वं, यत्र-कामावसायित्वम् इति ॥ ८२ ॥

परमैश्वर्य्यपदप्राप्तेः एव मुक्तिः, इत्यत्राह,—

**नैन्द्रादिपदयोगोऽपि, तद्वत् ॥ ८३ ॥**

अनित्यत्वात् ॥ ८३ ॥

भौतिकानि इन्द्रियाणि इति। तत् निरस्यति,—

**न भूतप्रकृतित्वमिन्द्रियाणाम्, आहङ्कारिकत्वश्रुतेः ॥ ८४ ॥**

तथा च,—

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥" इति।

भूतप्रकृतित्वम् इति तु येन इन्द्रियेण यद्भूतकारणं तन्मात्रं गृह्यते, तस्य तत्प्रकृतित्वाभिमानात् व्यपदेशः ॥ ८४ ॥

षट्पदार्थज्ञानात् मुक्तिः, इत्यत्राह,—

**न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ॥ ८५ ॥**

---

योगाद्यधीन ऐश्वर्य्यलाभ एव मोक्षः इतिवादिनां योगिनां मतं निरसितुं सूत्र-मुत्थापयति—अणिमादीति। आदिपदं व्याचष्टे—लघिमेत्यादि ॥ ८२ ॥

सुगमम् ॥ ८३ ॥

इन्द्रियाणां भौतिकत्वम् इति मतं निराकर्त्तुं सूत्रमुत्थापयति—भौतिकानीति। सूत्रे भूतप्रकृतित्वमित्यत्र भूतानि—पृथिव्यादीनि प्रकृतयः येषाम् इति बहुव्रीहिणा भूत-प्रकृतिशब्दो निष्पन्नो ज्ञेयः। इन्द्रियाणां सात्त्विकाहङ्कारकार्य्यत्वे पुराणवचनं प्रमाणत्वेनोदाहरति, एतस्मादिति।—एतस्मात्—सात्त्विकाहङ्कारादित्यर्थः। भूत-प्रकृतित्वमिति।—अयं भावः,—इन्द्रियाणां भूतप्रकृतित्वमिति लौकिकव्यपदेशस्तु येनेन्द्रियेण यद्भूतकारणं तन्मात्रं गृह्यते, तस्य तत्प्रकृतित्वाभिमानकृत इति विज्ञेयम् ॥ ८४ ॥

षडेव पदार्थाः, षोडश वा; तज्ज्ञानादेव मुक्तिरिति वैशेषिक-नैयायिकयोः मतं

द्रव्यगुणकर्मसामान्यविशेषसमवायाः इति। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि इति द्रव्याणि। रूपरसगन्धस्पर्शाः सङ्ख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च गुरुत्व-द्रवत्व-स्नेह-संस्कारधर्माधर्मशब्दाः गुणाः। उत्क्षेपणावक्षेपणाऽऽकुञ्चनप्रसारणगमनानि कर्माणि। परम् अपरञ्च सामान्यम्। नित्यद्रव्यवृत्तयः अन्त्याः विशेषाः। अयुतसिद्धानां यः सम्बन्धः इहप्रत्ययहेतुः समवायः इति नास्ति नियमः अनियतपदार्थवादित्वात् साङ्ख्यानाम्। न च तद्बोधात् मुक्तिः, आत्मज्ञानात् एव मुक्तेः॥ ८५॥

षोड़शपदार्थज्ञानात् मुक्तिः इत्यत्राह,—

## षोड़शादिष्वप्येवम्॥ ८६॥

"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्व-

दूषयितुं क्रमेण सूत्रद्वयमवतारयति—षट्पदार्थेति। षट्पदार्थवादिनां वैशेषिकाणां मतं प्रपञ्चयति,—द्रव्येति। दूषयति, न चेति।—तद्बोधादिति—द्रव्यादिरूपषट्पदार्थज्ञानादित्यर्थः। आत्मज्ञानादेवेति।—एवकारः मुक्तौ आत्मव्यतिरिक्तद्रव्यादिज्ञानस्य अहेतुत्वं सूचयति॥ ८५॥

षोड़शपदार्थतत्त्वज्ञानात् मुक्तिरितिवादिनां नैयायिकानां मतं दूषयितुम् उपन्यस्तस्य सूत्रस्य व्याख्याप्रसङ्गेन तेषां षोड़शपदार्थानां स्वरूपं निरूपयितुम् आरभते वृत्तिकारः, प्रमाणेति।—एतच्च गौतमीयन्यायदर्शनस्य आदिमं सूत्रम्। अत्र च सर्वपदार्थप्रधानो द्वन्द्वसमासो ज्ञेयः। यद्यपि भेदे द्वन्द्वविधानात् अत्र च बहूनां पदार्थानामभेदात् नास्ति द्वन्द्वस्यावसरः, तथाऽपि पदार्थभेदवत् पदार्थताऽवच्छेदकभेदेऽपि द्वन्द्वसमासस्य व्युत्पत्तिसिद्धत्वात्। तथा च, प्रमाणानि च प्रमेयञ्च संशयश्च प्रयोजनञ्च दृष्टान्तश्च सिद्धान्तश्च अवयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलञ्च जातयश्च निग्रहस्थानानि च इति विग्रहाकारः। नव्यमते तु सर्वत्र प्रथमोप-

ज्ञानात् निःश्रेयसाधिगमः" इति । "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" । "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः प्रमेयम्" । "समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः" । "यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम्" ।"लौकिकपरीक्षकाणां यस्मिन् अर्थे बुद्धिसाम्यं स दृष्टान्तः" । "तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः" । सः चतुर्विधः,—"सर्वतन्त्र-प्रतितन्त्राधिकरणाभ्युपगम-संस्थित्यर्थान्तरभावात्" । "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः" । "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" । "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" । "प्रमाणतर्कसाधनोपालम्भः

---

स्थितैकवचनेनैव विवक्षा बोध्यः इति वृत्तिकारः । अत्र तत्त्वं ज्ञायते अनेन इति व्युत्पत्त्या तत्त्वज्ञानपदं शास्त्रपरं, तस्मात्—शास्त्रात् परम्परया निःश्रेयसस्य—आत्यन्तिकदुःखनिवृत्तिरूपस्य, अधिगमः,—प्राप्तिः, आत्मतत्त्वसाक्षात्कारद्वारा इति शेषः । एवं षोड़शपदार्थानां प्रत्येकस्वरूपनिर्णयाय यथाक्रमं न्यायसूत्राण्यवतारयति, प्रत्यक्षेति ।—तत्र अपवर्गस्य न्यायमतेऽपि दुःखात्यन्तनिवृत्तिरूपतया साङ्ख्यसिद्धान्तरूपत्वात् न तत्प्रतिपादकं गौतमीयं सूत्रम् अत्र प्रयोजनाभावात् पृथक् उपन्यस्तम् इति ध्येयम् । तत्र प्रत्यक्षं नाम—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम् ; तच्च निर्विकल्पकं सविकल्पकमिति च द्वेधा । अनुमानं नाम—व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानम् ; तत्करणञ्च व्याप्तिज्ञानम् अनुमीयते अनेनेति व्युत्पत्तियोगात् अनुमानपदवाच्यं भवति ; तच्च व्याप्तिज्ञानं केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि चेति त्रिधा विज्ञेयम् । उपमानं तावत्—प्रसिद्धसाधर्म्यात् साध्यसाधनरूपम् इति सूत्रकारः ; तदर्थस्तु—प्रसिद्धस्य—पूर्वप्रमितस्य गवादेः साधर्म्यात्—सादृश्यात्, तज्ज्ञानादित्यर्थः, साध्यस्य—गवयादिपदवाच्यत्वस्य, साधनं—सिद्धिः, उपमारूपप्रमितिः, तत्करणञ्च सादृश्यज्ञानम् उपमितिकरणरूपमुपमानम् इति बोद्धव्यम् । शब्दोऽत्र—आप्तोपदेशरूपो बोध्यः, तत्र "आप्तः खलु—साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयोक्ता उपदेष्टा" इति वात्स्यायनभाष्यं, तस्य उपदेशः,—वाक्यमित्यर्थः । अत्र प्रमाणपदं—विशेष्यावृत्त्यप्रकारकज्ञानपरम् ; तथा च, प्रमीयते—तथाविधं ज्ञानं जन्यते अनेन इति व्युत्पत्त्या प्रमाणपदं—प्रमाकरणपरं बोद्धव्यम् । प्रमेयं विभजते लक्षयति च—आत्मेति ।

यद्यपि प्रमाविषयवस्तुमात्रबोधकतया प्रमेयशब्दः लोके प्रसिद्धः, तथाऽप्यत्र प्रमेयपदं न तथाविधलोकप्रसिद्धार्थकं, किन्तु संसारहेतुभूतमिथ्याज्ञानविषयत्वं मोक्षहेतुधीविषयत्वं वा अत्र प्रमेयपदार्थताऽवच्छेदकतया अभिमतं शास्त्रम्। ते च पदार्थाः आत्मशरीरादिरूपाः सूत्रे निर्दिष्टाः, तत्र आत्मपदम् इच्छाद्यन्यतमविशेषगुणवत्परम्। चेष्टेन्द्रियार्थाश्रयः शरीरमिति सौत्रं शरीरलक्षणम्। ईप्सितं जिहासितं वा अर्थमधिकृत्य ईप्साजिहासाप्रयुक्तस्य पुंसः तदुपायानुष्ठानलक्षणा या खलु समीहा, सैवात्र चेष्टापदप्रतिपाद्या। अत्र इन्द्रियाश्रयत्वञ्च अवच्छेदकताऽऽख्यस्वरूपसम्बन्धविशेषेण चक्षुराद्यन्यतमेन्द्रियवत्त्वमेव ज्ञेयम्। एवम् अत्र अर्थपदं सुखदुःखान्यतरपरं, तदाश्रयत्वमपि शरीरे अवच्छेदकताऽऽख्यस्वरूपसम्बन्धविशेषेण विज्ञेयं, शरीरावच्छेदेनैव आत्मनि सुखदुःखोत्पत्तेः। अत्र चेष्टावत्त्वम् इन्द्रियवत्त्वम् अर्थवत्त्वञ्चेति पृथक् त्रीण्येव शरीरलक्षणानि इति ध्येयम्। इन्द्रियाणि—घ्राणरसनचक्षुस्त्वक्श्रोत्राणि। पृथिव्यापस्तेजो वायुराकाशमिति भूतानि; भूतत्वमत्र बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्; तथा अर्थपदम्—अर्थ्यते—सुखसाधनत्वेन इष्यते इति व्युत्पत्तियोगात् शब्दस्पर्शरूपरसगन्धप्रत्यायकम्। बुद्धिः,—ज्ञानम्। ज्ञानकरणत्वे सति अणुत्वम् इति मनसो लक्षणम्। प्रवृत्तित्वं—रागजन्यताऽवच्छेदकजातिमत्त्वम्, ईश्वरकृतेरपि लक्ष्यत्वे यत्नत्वमेव तदिति ज्ञेयम्। दोषपदेन—रागद्वेषमोहाः गृह्यन्ते, तल्लक्षणञ्च प्रवृत्तिजनकत्वमेव। प्रेत्यभावो नाम—पुनरुत्पत्तिः, मृत्वा पुनर्जन्म इति भावः। फलं—सुखदुःखोपभोगः। दुःखं—बाधनालक्षणं, बाधनापदेन—पीडा ज्ञेया। एकधर्मिणि विरोधेन भावाभावप्रकारकं ज्ञानं संशयः। प्रयोजनं नाम—प्रवृत्तिहेत्विच्छाविषयः, तत्र विषयत्वं—साध्यत्वाख्यविषयताविशेषः। लौकिकपरीक्षकाणां यस्मिन् अर्थे बुद्धिसाम्यं स दृष्टान्तः इति सूत्रकारः। प्रमाणैः तर्केण ये अर्थं परीक्षितुम् अर्हन्ति ते परीक्षकाः, तथा च, शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षत्वमेव परीक्षकत्वमत्र ज्ञेयम्; एवम् अप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षत्वमेव अत्र लौकिकत्वं फलतः पर्य्यवसितमिति ध्येयम्। तथा च, यम् अर्थं लौकिका बुध्यन्ते परीक्षका अपि तथैव, स एवार्थो दृष्टान्तः इति बोद्धव्यम्। सिद्धान्तस्तावत् चतुर्विध एव—सर्वतन्त्रसिद्धान्तः, अधिकरणसिद्धान्तः, अभ्युपगमसिद्धान्तः, प्रतितन्त्रसिद्धान्तश्चेति। अवयवो नाम—न्यायघटकीभूतवाक्यपञ्चकान्यतमरूपो बोध्यः। तत्र प्रतिज्ञा—साध्यनिर्देशः पर्वतो वह्निमानित्यादिरूपः। उदाहरणसाधर्म्यात् साध्यसाधनं हेतुरिति सौत्रं हेतुलक्षणं, तत्र साध्यसाधनं हेतुरिति सामान्यलक्षणम्। साध्यसाधनं नाम—साध्यसिद्ध्यनुकूलज्ञापकत्वबोधकमित्यर्थः। तस्य द्वैविध्यम्, उदाहरणसाधर्म्यात् तद्वैधर्म्याच्च

ज्ञेयम् । उदाहरणसाधर्म्यम्—उदाहरणबोध्यान्वयव्याप्तिः, ततोऽन्वयी हेतुर्ज्ञातव्यः इति भावः । उदाहरणेति स्पष्टार्थम् ; तथा च, ज्ञातान्वयव्याप्तिकहेतुबोधकत्वे सति अज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवः अन्वयी हेतुः इति फलितार्थः । एवम् अप्रतीतान्वयव्याप्तिकहेतुबोधकत्वे सति प्रतीतव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवः वैधर्म्यहेतुः इति लक्षणं द्रष्टव्यम् । उदाहरणं नाम—साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्तः इति ; तथा च, अवयवान्तरार्थानन्वितार्थकावयवत्वमेव उदाहरणत्वमिति निष्कर्षः । प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षविषयकबोधजनकत्वे सति न्यायावयवत्वम् अत्र उपनयत्वं ज्ञेयम् । निगमनं नाम—हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनम् इति न्यायसूत्रोक्तलक्षणकम् ; तथा च, व्याप्तिविशिष्टपक्षधर्महेतुकथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः न्यायावयवो निगमनम् इति फलितम् । तर्कलक्षणसूत्रे "तर्कः" इति लक्ष्यनिर्देशः, कारणोपपत्तितः ऊहः इति तल्लक्षणम् । अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनं, कारणं—व्याप्यं, तस्योपपत्तिः,—आरोपः तस्मात्, ऊहः,—आरोपः, अर्थात् व्यापकस्य इति ज्ञेयम् ; तथा च, व्यापकाभाववत्त्वेन निर्णीते धर्मिणि व्याप्यस्याहार्यारोपात् यो व्यापकस्याहार्यारोपः स तर्कः इति पर्यवसितोऽर्थः । तदाकारश्च यथा—पर्वतो यदि निर्वह्निः स्यात् तदा निर्धूमः स्यादित्यादिः । स चायं तर्कः पञ्चविधः,—आत्माश्रय-अन्योऽन्याश्रय-चक्रक-अनवस्था-तदन्यबाधितार्थप्रसङ्गभेदात् । तत्र स्वस्य स्वापेक्षितत्वे अनिष्टप्रसङ्गः आत्माश्रयः, स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा ज्ञेयः ; यथा—यद्ययं घटः एतद्घटजन्यः स्यात्, तदा एतद्घटानधिकरणक्षणोत्तरवर्ती न स्यात् ; एवं, यद्ययं घटः एतद्घटवृत्तिः स्यात्, तदा एतद्घटव्याप्यो न स्यात् ; एवं, यद्ययं घट एतद्घटज्ञानाभिन्नः स्यात्, तदा ज्ञानसामग्रीजन्यः स्यादिति यथाक्रमं त्रीण्युदाहरणानि । तदपेक्षापेक्षित्वनिबन्धनः अनिष्टप्रसङ्गः अन्योऽन्याश्रयः सोऽपि उत्पत्तिस्थितिज्ञप्तिद्वारा पूर्ववत् त्रेधा ज्ञेयः । चक्रकं नाम—तदपेक्षापेक्ष्यपेक्षित्वनिबन्धनः अनिष्टप्रसङ्गः । चतुःपञ्चादावपि स्वस्य स्वापेक्षापेक्ष्यपेक्षित्वसत्त्वात् नाधिक्यम् । अस्यापि पूर्ववत् त्रैविध्यं विज्ञेयम् । अव्यवस्थितपरम्परारोपाधीनानिष्टप्रसङ्गः अनवस्था । तदन्यबाधितार्थप्रसङ्गस्तु पूर्वोक्ततर्कचतुष्टयभिन्नत्वे सति तर्करूपः । यथा—धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यात् इत्यादि तदुदाहरणं द्रष्टव्यम् । निर्णयलक्षणे विमृश्य—सन्दिह्य । साधनोपालम्भाभ्यामित्यत्र उपालम्भपदं—परपक्षदूषणपरम् । अर्थस्यावधारणं—तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानम् । यद्यपि एतावदेव निर्णयसामान्यलक्षणं, तथाऽपि विमृश्य इत्यादिकं जल्पवितण्डाजन्यनिर्णयमधिकृत्य उक्तम् । अत एवोक्तं भाष्ये—"शास्त्रवादे च विमर्शवर्जम्" इति । इत्यञ्च प्रत्यक्षतः शब्दाच्च निर्णीते

सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः”। “यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः”। “स प्रतिपक्षस्थापनाहीनो वितण्डा”। “सव्यभिचारविरुद्धप्रकरण-

न विमर्शपक्षप्रतिपक्षापेक्षा इति ध्येयम्। तिसृषु कथासु प्रथमं वादं लक्षयति, प्रमाणेति।—तत्र तत्त्वनिर्णयविजयान्यतरस्वरूपयोग्यन्यायानुगतवचनसन्दर्भः कथा इति कथासामान्यलक्षणम्। वादलक्षणे पक्षप्रतिपक्षौ इति पदं—विप्रतिपत्तिकोटिद्वयं लक्षयति, तयोः परिग्रहः,—तत्साधनोद्देश्यकोक्तिप्रत्युक्तिरूपः वचनसन्दर्भः। तावन्मात्रस्य कथान्तरसाधारणत्वम्; अत आह, प्रमाणेति।—प्रमाणतर्काभ्याम्—तद्रूपेण ज्ञाताभ्यां, साधनोपालम्भौ—स्वपक्षस्थापन-परपक्षनिराकरणे यत्र सः; तथा च, उभयत्रापि प्रमाणादिसद्भावे सति कोटिद्वयस्यापि सिद्धिः स्यात्, अतः तद्रूपेण ज्ञाताभ्याम् इत्यवश्यमुपादेयम्। ज्ञानमत्र अनाहार्यं विवक्षितम्। जल्पवितण्डयोस्तु प्रमाणाभासत्वादिना ज्ञाताभ्यामपि स्वपक्षस्थापन-परपक्षनिराकरणे भवतः इति तद्वारणम्। इत्थञ्च प्रमाणाभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यत्वे सति इत्यर्थः फलतः पर्य्यवस्यति। तत्र च निग्रहस्थानविशेषनियमार्थमेव सिद्धान्तेत्यादि विशेषणद्वयम्। सिद्धान्ताविरुद्ध इत्यनेन अपसिद्धान्तोद्भावनं सूचितम्। पञ्चावयवोपपन्न इत्यनेन न्यूनाधिक्योद्भावने सूचिते। वादाधिकारिणस्तु तत्त्वबुभुत्सव एव, ते च प्रकृतोक्तिकाः अविप्रलम्भकाः यथाकालस्फूर्त्तिकाः अनाक्षेपकाः युक्तसिद्धप्रत्येतारश्च। अनुविधेयस्थेयःसभ्यपुरुषवती जनता सभा इत्युच्यते। अनुविधेयः,—राजादिः, स्थेयान्—मध्यस्थः; सा चेयं सभा वादे नापेक्षणीया वीतरागकथात्वात् इति अवसेयम्। जल्पलक्षणे यथोक्तोपपन्न इति पदं—यथोक्तेषु यदुपपदं तेन उपपन्न इत्यर्थः। “प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रहः” इत्यस्य वादलक्षणोक्तस्य योग्यतया परामर्शोऽत्र ज्ञेयः। अत्र च छलादिभिः सर्वैः उपालम्भो न विशेषणं, अव्याप्तिप्रसङ्गात्, अपि तु तद्योग्यतैव वाच्या; योग्यताऽवच्छेदकन्तु वादभिन्नकथात्वमेव वाच्यम्; तथा च, उभयपक्षस्थापनावती विजिगीषुकथा जल्पः इत्यर्थः प्रकृते पर्य्यवस्यति इति ज्ञेयम्। वितण्डामाह, स इति।—प्रतिपक्षः,—द्वितीयपक्षः; तथा च, प्रतिपक्षस्थापनाहीना विजिगीषुकथा वितण्डा इति फलितम्। न चात्र स्वस्य स्थापनीयाभावात् कथमियं कथा प्रवर्त्तताम् इति वाच्यं, परपक्षखण्डनेनात्र जयस्यैव उद्देश्यत्वात्। परे तु परपक्षखण्डनेनैव स्वपक्षसिद्धेः अर्थादेव सिद्धेः तत्साधनाभावेऽपि न प्रवृत्त्यनुपपत्तिरिति वदन्ति। हेत्वाभासान् विभजते, सव्यभिचारः इति।—अत्र हेत्वाभासपदेनैव हेत्वाभासानां सामान्यलक्षणं सूचितम्; तथा हि,

पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्व-अबाधितत्व-असत्प्रतिपक्षितत्वोपपन्नो हेतुर्गमक इत्युच्यते। तद्वदाभासते इत्यत्र अयमर्थः,—तद्भिन्नत्वे सति तद्धर्मवत्त्वम्; तथा च, पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेणाभासमानः हेत्वाभास इति फलितार्थः। तत्र अनैकान्तिकः सव्यभिचारः इति सूत्रोक्तं सव्यभिचारलक्षणम्। तत्र अनैकान्तिकपदम्—अव्यभिचरितसहचाराभाववत्परम्; तथा च, एकमात्रव्याप्तिग्राहकसहचारवान् ऐकान्तिकः, तदन्यः अनैकान्तिकः। स च साधारणः असाधारणः अनुपसंहारी चेति त्रिविधः। तत्र साध्यवत्तदन्यवृत्तित्वं साधारणत्वम्। सपक्ष-विपक्षव्यावृत्तत्वम् असाधारणत्वम्। केवलान्वयिधर्मावच्छिन्नपक्षकत्वम् अनुपसंहारित्वम् इति यथाक्रमं त्रीणि लक्षणानि। शब्दो नित्यः, निःस्पर्शत्वात्, शब्दोऽनित्यः, शब्दत्वात्, सर्वं नित्यं मेयत्वात् इति च त्रीणि यथाक्रमम् उदाहरणानि। सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः इति सौत्रं विरुद्धलक्षणं द्रष्टव्यम्। तदर्थश्च—सिद्धान्तं—साध्यम्, अभ्युपेत्य—उद्दिश्य प्रयुक्तः तद्विरोधी—साध्याभावव्याप्त इति फलितार्थः; यथा—वह्निमान् ह्रदत्वादिति। यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः इति सौत्रं प्रकरणसमलक्षणम्; अस्यार्थः,—स—हेतुः, स्वसाध्यस्य परसाध्याभावस्य वा निर्णयार्थम् अपदिष्टः,—प्रयुक्तः प्रकरणसमः उच्यते। स च कः? इत्याकाङ्क्षायामाह, यस्मादिति। —प्रकरणं पक्षप्रतिपक्षौ, साध्य-तदभाववन्तौ इत्यर्थः; तथा च, निर्णयार्थं प्रयुक्तो हेतुः यत्र निर्णयं कर्त्तुमसमर्थः समानबलेन परेण हेतुना प्रतिबन्धात्, किन्तु धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वा इति चिन्तां जिज्ञासां प्रवर्त्तयति, स प्रकरणसम इत्युच्यते; तथा च, तुल्यबलविरोधिपरामर्शकालीनतुल्यबलपरामर्शविषयत्वं हेतोः सत्प्रतिपक्षितत्वम् इति फलतः पर्य्यवस्यति लक्षणम्। अयञ्च दोषो दशाविशेषे एव ज्ञेयः इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले सत्प्रतिपक्षितत्वमिष्टमेव इत्यवधेयम्। साध्याविशिष्टः साध्यत्वात् साध्यसमः इति सौत्रं साध्यसमलक्षणम्। तदर्थश्च—साध्येन—वह्न्यादिना, अविशिष्टः,—समानो हेतुः, कुतः? इत्यत आह, साध्यत्वादिति—साधनीयत्वादित्यर्थः, यथा हि साध्यं साधनीयं, तथा हेतुरपि चेत् तदा स साध्यसमः इत्युच्यते, अत एव च असिद्ध इति व्यवह्रियते। अयञ्च* आश्रयासिद्धि-स्वरूपासिद्धि-व्याप्यत्वासिद्धिभेदात् त्रिविधः। तत्र आश्रयासिद्धिर्नाम—पक्षे पक्षताऽवच्छेदकविरहः, यथा—काञ्चनमयः पर्वतो वह्निमानित्यादौ। स्वरूपासिद्धिस्तु—पक्षे हेतुविरहः, यथा—ह्रदो द्रव्यं धूमादित्यादौ। व्याप्यत्वासिद्धिश्च—अव्यभिचरितसामानाधिकरण्यस्याभावः। कालात्ययापदिष्टः कालातीतः इति सौत्रं कालातीतस्य लक्षणम्। कालातीतपदम्—अतीतकालबोधकम्। कालस्य—साधनकालस्य, अत्यये—अभावे, अपदिष्टः,—प्रयुक्तः हेतुः।

समसाध्यसमातीतकाला हेत्वाभासाः"। "वचनविघातोऽर्थविकल्पोपपत्त्या छलम्। तत् त्रिविधं—वाक्छलं, सामान्यच्छलमुपचारच्छलञ्च"। "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं

साध्याभाववन्निर्णये सति साध्यासिद्धसम्भवात् अयमेव हेतुः बाधितसाध्यक इति गीयते, यथा—ह्रदो वह्निमान् जलादित्यादौ। न च बाधे आवश्यकस्य व्यभिचारस्वरूपासिद्ध्यन्यतररूपस्यैव हेत्वाभासस्य दोषत्वमुचितमिति वाच्यम्; तदप्रतिसन्धानकाले बाधस्य दोषत्वावश्यकत्वात्, दुष्टहेतूनां सङ्करेऽपि दोषाणाम् असङ्कीर्णत्वादिति ध्येयम्। नवीनास्तु उत्पत्तिक्षणावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ केवलस्यैव बाधस्य सम्भवेन बाधे दोषान्तरसाङ्कर्य्यस्य न सर्वत्र सम्भव इति वदन्ति।

क्रमप्राप्तं छललक्षणं सौत्रमुदाहरति, वचनेति।—तदर्थस्तु—अर्थस्य—वादिसम्मतस्य, यो विकल्पः,—विरुद्धः कल्पः, अर्थान्तरकल्पना इति यावत्, तदुपपत्त्या—युक्तिविशेषेण, यो वचनस्य—वाद्युक्तस्य इति यावत्, विघातः,—दूषणं, तदेव छलमित्यर्थः; तथा च, वक्तृतात्पर्य्याविषयार्थकल्पनेन दूषणाभिधानमेव छलमिति फलितम्। तात्पर्य्याविषयत्वञ्च विशेषणे विशेष्ये संसर्गे वा; यथा—नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते वादिना, नवसङ्ख्यापरत्वकल्पनया प्रतिवादिना असिद्ध्यभिधानं विशेषणांशे वाक्छलम्। सर्वं प्रमेयं धर्म्मत्वादिति वादिना उक्ते, धर्म्मत्वादिति पदस्य प्रतिवादिना पुण्यत्वार्थकल्पनया भागासिद्धेरभिधानं विशेष्ये वाक्छलम्। वादिना वह्निमान् धूमादिति प्रयुक्ते, प्रतिवादिना धूमावयवे व्यभिचाराभिधानं संसर्गांशे वाक्छलमित्यूह्यम्। यत्र शक्यार्थद्वयं सम्भवति एकार्थनिर्णायकविशेषाभावेन अनभिप्रेतशक्यार्थकल्पनेन दूषणाभिधानं तद्वाक्छलम्। लक्षणन्तु शक्त्या एकार्थशाब्दबोधतात्पर्य्यकशब्दस्य शक्त्या अर्थान्तरतात्पर्य्यकत्वपरिकल्पनया दूषणाभिधानम्; यथा—नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते कुतोऽस्य नवसङ्ख्यकाः कम्बलाः? इति। सम्भवतोऽर्थस्य अतिसामान्ययोगात् असद्भूतार्थकल्पना सामान्यच्छलमिति सौत्रं सामान्यच्छललक्षणम्। तदर्थश्च—सामान्यविशिष्टसम्भवदर्थाभिप्रायेण उक्तस्य अतिसामान्ययोगात् असम्भवदर्थकत्वकल्पनया दूषणाभिधानं सामान्यच्छलम्; यथा—ब्राह्मणोऽयं विद्याऽऽचरणसम्पन्नः इत्युक्ते ब्राह्मणत्वम् विद्याऽऽचरणसम्पदं साधयति इति कल्पयित्वा परेणाभिधीयते "कुतो ब्राह्मणत्वेन विद्याऽऽचरणसम्पत्? व्रात्ये ब्राह्मणे व्यभिचारात्" इति। धर्म्मविकल्पनिर्देशे अर्थसद्भावप्रतिषेधः उपचारच्छलम् इति सौत्रम् उपचारच्छललक्षणम्। तदर्थस्तु—शब्दस्य अर्थेन सह सम्बन्धः धर्म्मः तस्य विकल्पः,—विविधः कल्पः शक्तिलक्षणाऽन्यतररूपः, तथा च, शक्तिलक्षणयोरन्यतरवृत्त्या प्रयुक्ते शब्दे

जातिः"। "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः"। "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्"। "प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासः हेत्वन्तरम् अर्थान्तरं निरर्थकम् अविज्ञातार्थम् अपार्थकम् अप्राप्तकालं न्यूनम् अधिकं पुनरुक्तम् अननुभाषणम् अज्ञानम् अप्रतिभा विक्षेपः मतानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगः अपसिद्धान्तः हेत्वाभासाश्च निग्रहस्थानानि"। इयन्त इति न नियमः, न वा तद्बोधात् मुक्तिः। आदिशब्दात् अन्येऽपि नियतपदार्थाः निराकार्य्याः॥ ८६॥

नित्याः चतुर्विधाः परमाणवः, तैः एव महाभूतारम्भात् किं प्रधानेन? इत्यत आह,—

## नाणुनित्यता, तत्कार्य्यत्वश्रुतेः॥ ८७॥

तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलम्; यथा—मञ्चाः क्रोशन्ति इत्युक्ते मञ्चस्थाः पुरुषा एव क्रोशन्ति, न तु मञ्चाः इति दूषणाभिधानम्। साधर्म्यवैधर्म्याभ्यामिति सावधारणनिर्देशः, तेन व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिरित्यर्थः। सा च जातिः चतुर्विंशतिप्रकारा इति दर्शयितुं ताः नाम्ना निर्दिशति, साधर्म्यवैधर्म्येति।—अत्र समपदं प्रत्येकं साधर्म्यादिषु अन्वेति, तथा च, साधर्म्यसमा वैधर्म्यसमा इत्यनया रीत्या अन्वयो ज्ञेयः। आसां जातीनां लक्षणोदाहरणानि अक्षपादसूत्रभाष्यवृत्तिषु प्रपञ्चितानि तत्रैव अनुसन्धेयानि, न चात्र विस्तरभयात् तान्युदाह्रियन्ते। एवं निग्रहस्थानलक्षणोदाहरणेष्वपि द्रष्टव्यम्। तदेतत् न्यायमतं दूषयति—इयन्त इति। नियमाङ्गीकारेऽपि न मोक्षं प्रति एतेषां नियतपदार्थानां ज्ञानमुपयुज्यते वैयर्थ्यात् इति दर्शयितुमाह—न वेति। अन्येऽपि—वैशेषिकाद्यैरभिमताः इत्यर्थः॥ ८५, ८६॥

नित्यैः चतुर्विधैः परमाणुभिः जगदारम्भः इति गौतमीयमतं दूषयितुं सूत्रमवतार-

"प्रधानात् सर्वम् अजायत, प्रकृतिपुरुषात् अन्यत् सर्वम् अनित्यम्" इति श्रुतेः कार्य्यत्वात् परमाणूनां न नित्यत्वं कारणत्वं वा ॥ ८७ ॥

एवञ्च परमाणुत्वम् एव न भवतीत्याह,—

**न तन्निर्भागत्वं, कार्य्यत्वात् ॥ ८८ ॥**

यत् कार्य्यं, न तत् निर्भागि, यथा पटः इति ॥ ८८ ॥

उद्भूतरूपवत्त्वाच्च प्रत्यक्षम् इत्यत आह,—

**न रूपनिबन्धनात् प्रत्यक्षत्वनियमः ॥ ८९ ॥**

"इह अयं पक्षी" इति आकाशस्य प्रत्यक्षत्वात् व्यभिचारात् उद्भूतरूपनिबन्धनात् न प्रत्यक्षत्वनियमः। अलौकिके च समाधिबलजे योगिप्रत्यक्षे न पर्य्यनुयोगोऽस्ति ॥ ८९ ॥

अणु महत् दीर्घं ह्रस्वम् इति चतुर्विधं परिमाणं न अस्ति इति आह,—

**न परिमाणचातुर्विध्यं, द्वाभ्यां तद्‌योगात् ॥ ९० ॥**

महदणुभ्यां कार्य्यकारणयोगात् व्यवहारसिद्धेः। एतत्प्रभेदाः एव अन्ये परिमाणभेदाः इति ॥ ९० ॥

---

यति—नित्या इति। श्रुतेरिति—"प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि" इत्यादिश्रुतेरित्यर्थः ॥ ८७ ॥

कार्य्यत्वादेव परमाणूनां निरवयवत्वं न सिध्यति इति दर्शयितुं सूत्रमवतारयति—एवञ्चेति। निर्भागत्वं—निरवयवत्वम् ॥ ८८ ॥

उद्भूतरूपनिबन्धनं द्रव्यप्रत्यक्षमिति न्यायमतं दूषयितुं सूत्रमवतारयति—उद्भूतेति। इह—आकाशे; तथा च, आकाशे मया पक्षी प्रत्यक्षीक्रियते इत्यादि सार्व्वजनीनानुभवबलात् उद्भूतरूपराहित्यस्यापि आकाशस्य प्रत्यक्षत्वाभ्युपगमेन व्यतिरेकव्यभिचारात् नोद्भूतरूपं चाक्षुषप्रत्यक्षं प्रति कारणं भवितुमर्हति इति सूत्रितात्पर्य्यम् ॥ ८९ ॥

नैयायिकसम्मतं परिमाणस्य चातुर्विध्यं निराकर्त्तुं सूत्रमवतारयति—नेति। नन्वेवं दीर्घह्रस्वत्वादिव्यवहारः कथं सिध्येत् ? इत्यत आह—एतदिति ॥ ९० ॥

प्रकृतिपुरुषव्यतिरिक्तं सामान्यं नित्यम् अस्ति इत्यत्र आह,—

**अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य ॥ ९१ ॥**

यथा "सः अयं देवदत्तः" इति न सामान्यविषया प्रत्यभिज्ञा, तथा अनित्यत्वेऽपि सामान्यस्य बहुकालस्थैर्य्यात् ज्वालादिषु प्रत्यभिज्ञानम् इति ॥ ९१ ॥

सामान्यासत्त्वं निराकरोति,—

**न तदपलापस्तस्मात् ॥ ९२ ॥**

न सामान्यापलापः, प्रत्यभिज्ञानात् परोक्तयुक्तेः प्रत्यक्षबाधात् ॥ ९२ ॥

अस्ति एकाकारा बुद्धिः, सा अन्यनिवृत्तिपरा इत्यतः आह,—

**नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥ ९३ ॥**

नन्वेवं प्रकृतिपुरुषयोरिव नित्यत्व सामान्यादीनां नित्यत्वं न स्यात इति इमामाशङ्कां निराकर्त्तुं सूत्रमवतारयति—प्रकृतीति। यथा "सोऽयं देवदत्तः" इति न सामान्यविषया प्रत्यभिज्ञा, किन्तु व्यक्तिविषया, व्यक्तीनां बहुकालावस्थायित्वात, तथा अनित्यत्वेऽपि बहुकालावस्थायिनः घटत्वादिसामान्यस्यापि स्थिरत्वात् प्रत्यभिज्ञा न जातीनां नित्यत्वव्यवस्थापनाय अलमिति इतितात्पर्य्यमवसेयम ॥ ९१ ॥

ननु सामान्यमेव नास्ति, तत कुतस्तस्य नित्यत्वमनित्यत्वं वा इति शङ्काऽवसरः ? इति बौद्धमतं निराकर्त्तुं सूत्रमवतारयति—सामान्येति। परोक्तयुक्तेः,—सामान्यानङ्गीकर्तृबौद्धप्रदर्शितयुक्तेरित्यर्थः। प्रत्यक्षबाधादिति—सामान्यग्राहकप्रत्यक्षेण बाधादित्यर्थः, अबाधितप्रत्यक्षस्य विषयसाधकत्वादिति भावः ॥ ९२ ॥

जातिप्रत्यक्षस्य जात्याश्रयत्वेनाभिमतयावद्व्यक्तिभेदावरहविषयकत्वेनैव उपपत्तिसम्भवे न जातिरूपं पदार्थान्तरं सिध्यति इति बौद्धशङ्कानिराकरणाय सूत्रमवतारयति—

अभावरूपत्वे प्रतियोगिस्मरणाधीनं ज्ञानं लभ्येत, न तु विधिमुखतया इति। तथा च,—

"सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते॥
गव्यसिद्धे त्वगौर्नास्ति तदभावे च गौः कुतः?" ॥ ९३ ॥

सादृश्यनिबन्धना प्रत्यभिज्ञा भविष्यति इत्यत आह,—

**न तत्त्वान्तरं सादृश्यं, प्रत्यक्षोपलब्धेः ॥९४॥**

भूयोऽवयवसामान्ययोगः सादृश्यं, न तत्त्वान्तरं, प्रत्यक्षेण एव बहुतरतथाऽवयवग्रहणात् "तत्सदृशोऽयम्" इति ज्ञानोत्पादात् ॥ ९४ ॥

प्रकारान्तरमाह,—

**निजशक्त्यभिव्यक्तिर्वा, वैशिष्ट्यात् तदुपलब्धेः ॥९५॥**

अस्ति एकाकारेति। न तु विधिमुखतया इति—प्रतियोगिज्ञानानपेक्षत्वेन स्वतन्त्रवस्तुविषयकतया इत्यर्थः। तदेतन्मतं विशदयितुं कारिकामवतारयति, तथा चेति।—अगौः,—गवेतरः पदार्थः, सिद्धः,—ज्ञात एव, अपोह्येत—निषेधधीविषयीक्रियेत। सः,—अगौः इति प्रत्ययः, गोनिषेधात्मकः,—गोपदसापेक्षपदविषयः निषेधविषयकः, तत्र—गोनिषेधपक्षे, एवञ्च नञा—निषेधेन, प्रथमं यः प्रतिषिध्यते स गौरेव—गोत्वरूपसामान्यधर्मावच्छिन्न एव, वक्तव्यः इत्यन्वयः। गवि—गोत्वजात्यवच्छिन्ने, असिद्धे—अज्ञाते, अगौरिति प्रतिषेधः गोत्वावच्छिन्नप्रतियोगिताकभेदावगाही न प्रतीतिपथमारोढुमर्हतीति शेषः। तदभावे—तादृशनिषेधप्रतीत्यभावे, गौः,—गवेतरापोहः, कुतः सिध्येदित्यर्थः ॥ ९३ ॥

सामान्यप्रत्यभिज्ञायाः सादृश्यविषयकत्वेनैवोपपत्तिरिति मतं दूषयितुं सूत्रमवतारयति, सादृश्येति।—सादृश्यनिबन्धना—सादृश्यविषयिणी इत्यर्थः; तथा च, सामान्याख्यो कारे सादृश्यप्रतीतिरेव भवतां न सिध्यति इति हृत्तात्पर्य्यमवसेयम् ॥ ९४ ॥

तदेतन्मतं विशदयितुं सूत्रान्तरमवतारयति—प्रकारान्तरमिति। निजशक्त्यभिव्यक्तिरिति—अभिव्यक्ता निजशक्तिरित्यर्थः। अभिव्यक्ता—तत्तत्कार्य्यानुकूलतया सिद्धा। वैशिष्ट्यात्—तादृशशक्तिसम्बन्धात्। तदुपलब्धेः,—सादृश्योपलम्भात्; तथा च, तत्तत्-

अस्ति पदार्थानां निजा शक्तिः। सा तुल्यपिण्डान्तर-दर्शनात् अभिव्यक्ता विशिष्टा सती "सदृशोऽयम्" इति सादृश्योपलब्धेः कारणं, न तु तत्त्वान्तरं सादृश्यम् ॥ ९५ ॥

संज्ञासंज्ञिसम्बन्धज्ञानहेतुः सादृश्यमिति तत्सिद्धिरित्यत्र आह,—

**न संज्ञासंज्ञिसम्बन्धोऽपि ॥ ९६ ॥**

न सम्बन्धज्ञानहेतुः सादृश्यं, व्यभिचारात्, अन्यत्र अपि उपदेशादेः संज्ञासंज्ञिसम्बन्धनिश्चयात्। करणव्युत्पत्त्या विष-यिणो ज्ञानस्योपलक्षणम् ॥ ९६ ॥

शब्दार्थयोर्नित्यः सम्बन्धः इति निरस्यति,—

**न सम्बन्धनित्यता, उभयानित्यत्वात् ॥ ९७ ॥**

शब्दार्थयोरनित्यत्वात् कथं सम्बन्धो नित्यः स्यात्? ॥ ९७ ॥

अजसम्बन्धमपाकरोति,—

**नाजः सम्बन्धः, धर्मिग्राहकप्रमाणबाधात् ॥ ९८ ॥**

पदार्थानश्शक्तिरेव व्यक्तेरात्मभूता सामान्यापरपर्य्याया सादृश्यधीविषयः इति भावः ॥ ९५ ॥

वाच्यवाचकभावरूपसम्बन्धज्ञानं प्रति सादृश्यधीरेव हेतुरितिवादिनां मतं निरसितुं सूत्रमवतारयति, संज्ञेति।—तत्सिद्धिः,—वाच्यवाचकभावसिद्धिरित्यर्थः; तथा च, "शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च" इत्याद्युक्तदिशा शक्तिज्ञानं प्रति क्वचित् सादृश्यज्ञानवत् व्यवहारादिज्ञानमपि भवत्येव कारणम् अन्वयव्यतिरेक-दर्शनात्। एवञ्च शक्तिधियं प्रति सादृश्यज्ञानमेव हेतुः इति मतं निर्युक्तिकत्वात् अश्रद्धेयमेव इति ध्येयम ॥ ९६ ॥

शब्दार्थयोः नित्यसम्बन्धवादिनां मीमांसकानां मतं निराकर्त्तुं सूत्रमवतारयति—शब्दार्थयोरिति। उभयानित्यत्वादिति सौत्रम् उभयपदं व्याचष्टे—शब्दार्थयो-रिति ॥ ९७ ॥

अजेति।—अजसम्बन्धं—नित्यसम्बन्धमित्यर्थः। विशिष्टप्रतीत्या विशेषणविशेष्याधीन-सम्बन्धस्यैव सिद्धेः, तस्य च विशेषणविशेष्याभावे असम्भवात् सम्बन्धस्य नित्यत्वम-

संयोगः भवन् कर्मजः भवेत्, न च नित्यस्य व्यापकस्य क्रिया अस्ति। महदादयश्च अनित्याः, कथं मत्संयोगः नित्यः? आत्मनाञ्च निर्धर्मत्वात् न तैः प्रधानेन संयोगः अस्ति। किञ्च, येन प्रमाणेन वस्तु गृह्यते, तेन एव संयोग-ग्रहणमिति धर्मिग्राहकप्रमाणबाधः॥ ९८॥

समवायं निरस्यति,—

## न समवायोऽस्ति प्रमाणाभावात्॥ ९९॥

समवायः सम्बद्धोऽसम्बद्धो वा? असम्बद्धत्वे कथम् अन्यं सम्बन्धिनं कुर्य्यात्? सम्बन्धित्वे अन्यसम्बन्धस्य असम्भवात् समवायः एव वक्तव्यः, तस्य अपि अन्यः, तस्य अपि अन्यः इति अनवस्थानात् नास्ति समवायः। यस्तु अविभागेन सम्प्रतिभासः, स संश्लेषविशेषवैचित्र्यात्; यथा तप्तायःपिण्डे वह्निः॥ ९९॥

युक्तमिति भावः। धर्मिग्राहकप्रमाणबाध इति।—धर्मिणोः,—सम्बन्धस्यानुयोगि-प्रतियोगिनोः, ग्राहकम्—धर्मित्वस्याभिव्यञ्जकं, यत् प्रमाणं तेन बाधः, सम्बन्धनित्यत्वस्य इति शेषः॥ ९८॥

समवायरूपसम्बन्धस्य नित्यत्ववादिनां नैयायिकानां मतं दूषयितुं समवायस्य खण्डनपरं सूत्रमवतारयति—समवायमिति। सम्बद्धः, अनुयोगिना प्रतियोगिना च इति शेषः। असम्बद्धत्वे—अनुयोगि प्रतियोगिभ्यामसंसृष्टत्वे। अन्यं—समवायभिन्नं धर्मिणां धर्मं वा। सम्बन्धिनं—समवायी समवेतः इत्यादिव्यवहारविषयमित्यर्थः। कुर्य्यादित्यत्र समवाय इति कर्त्तृपदमूह्यम्। सम्बन्धित्वे दोषमाह, सम्बन्धित्वे इति।—अन्यसम्बन्धस्य—संयोगादेः। असम्भवात्—बाधितत्वात्। समवाय एव—समवायि-समवाययोः सम्बन्धः इति शेषः। इत्थञ्च समवायि-समवाययोः यः समवायः, तस्यापि समवायान्तरं सम्बन्धः इत्यनया रीत्या अनवस्था प्रसज्येत इति भावः। नन्वेवं जाति-जातिमतोः गुण-गुणिनोः मिथः सम्बन्धप्रतिभासः सार्वजनीनः कथं सिध्येत्? इत्यत आह—यस्तु इति॥ ९९॥

यदि समवायो नास्ति कथं "शुक्लः पटः" इति "अश्वो गच्छति" "गौः अयम्" इति ज्ञानम् ? इत्यत्र आह,—

**उभयत्राप्यन्यथासिद्धेः प्रत्यक्षमनुमानं वा ॥१००॥**

उभयत्रापि तादात्म्येन एव उपपत्तेः, अन्यथा सामानाधिकरण्यं न स्यात् इति ॥ १०० ॥

अनुमेया क्रिया स्यात् इत्यत्र आह,—

**नानुमेयत्वमेव क्रियायाः, नेदिष्ठस्य तत्तद्वतो-रेवापरोक्षप्रतीतेः ॥ १०१ ॥**

निकटस्थस्य क्रिया-क्रियावतोरेव अपरोक्षप्रतीतेः । अन्यथा सिद्धस्य प्रत्यक्षस्य बाधात् यदि संयोगविभागाभ्यां कर्म अनुमीयते, तयोः उभयवृत्तित्वात् वृक्षमूलात् अग्रं गच्छति

---

आशङ्कते, यदीति ।—तथा च, "शुक्लः पटः" इत्यादिविशिष्टबुद्धिनिर्वाहाय गुण-गुणिनोः संयोगादिविलक्षणः कोऽपि सम्बन्धः अवश्यमेव अङ्गीकरणीयः । एवञ्चेत् स एव समवायः फलतः पर्य्यवस्यति इति कथं समवायो नास्तीत्युच्यते ? इतीमामाशङ्कां निराकर्त्तुं सूत्रमवतारयति, उभयत्रेति ।—तथा च, भेदघटिताभेदरूपतादात्म्येनैव गुण-गुणिनोः वैशिष्ट्यव्यवहारसिद्धौ तदतिरिक्तसम्बन्धकल्पना न प्रमाणपदवीमारोढु-मर्हति इति सूत्रतात्पर्य्यम् । तथा च, उभयत्रापीति—धर्मितया धर्मतया च व्यव-हारगोचरयोः, गुण-गुणिनोरिति शेषः । अन्यथासिद्धेरिति—भेदघटिताभेदरूप-तादात्म्येन उपपत्तिसम्भवादित्यर्थः । नन्विदं तादात्म्यं भेदघटिताभेदरूपं निष्प्रमाणक-मेव इत्यत आह, अन्यथेति ।—अयं भावः,—न खलु अत्यन्ताभेदे अत्यन्तभेदे वा घटकलशयोरिव गवाश्वयोरिव वा सामानाधिकरण्यं लोके दृष्टचरम । "शुक्लो घटः" इत्यादौ तु सर्वजनानुभवसिद्धसामानाधिकरण्यशालिनोः तयोः अत्यन्ताभेदमत्यन्तभेदञ्च निराकृत्य भेदघटिताभेदरूपे तादात्म्ये एव पर्य्यवस्यति इति सामानाधिकरण्य-प्रतीतिबलेनैव गुण-गुणिनोः जाति-जातिमतोश्च तादात्म्यं सिध्यति इति ॥ १०० ॥

देशान्तरसंयोगविभागाभ्यां क्रिया नाम अनुमेया एव, सा च न प्रत्यक्षा सूर्य्यक्रिया-वत् इति मतं निरसितुं सूत्रमवतारयति, अनुमेया क्रिया इति ।—तथा च, दूरत्वादि-दोषैः सूर्य्यादिक्रियायाः प्रत्यक्षासम्भवेऽपि निकटस्थस्य अस्मादेः क्रिया प्रत्यक्षसिद्धैव

पुरुषे वृत्तेऽपि कर्मानुमीयेत। ननु पुरुषकर्मणा संयोग-विभागसिद्धौ किमर्थं वृत्ते कर्म स्वीकर्त्तव्यम्? उत्पत्तौ भवेत् एवम्, अव्यभिचारात् तु संयोगविभागाभ्यां वृत्ते कर्मानुमानं न निवर्त्तते, किञ्च, अन्धकारे "भुजाग्रं मे कम्पते" इत्यादौ कम्प-मात्रज्ञानं भ्रान्तिः। सूर्य्यक्रियाऽनुपलम्भश्च अतिदूरादि-दोषात् ॥ १०१ ॥

पञ्चभूतारब्धं शरीरमित्यत्राह,—

**न पाञ्चभौतिकं शरीरं, बहूनामुपादाना-योगात् ॥ १०२ ॥**

बहूनां—भिन्नजातीयानाम्। उपष्टम्भकत्वे तु चतुर्णां निमित्तत्वम् अस्ति एव; तेन च पाञ्चभौतिकम् उच्यते इति ॥ १०२ ॥

नास्ति सूक्ष्मशरीरं, प्रमाणाभावादित्यत्राह,—

**न स्थूलमिति नियमः, आतिवाहिकस्यापि विद्यमानत्वात् ॥ १०३ ॥**

मनसो निराश्रयस्य गत्यभावात् मरणे देहप्राप्तये मनसः आश्रयो वक्तव्यः। स एव आतिवाहिकं सूक्ष्मशरीरम् इति।

इति न क्रियायाः प्रत्यक्षाविषयत्वमतं युक्तिसहं भवितुमर्हति। एतदेव प्रपञ्चयन् वृत्तिकार आह—अन्यथेति ॥ १०१ ॥

शरीरस्य पाञ्चभौतिकत्वमिति मतं निराकर्त्तुं सूत्रमवतारयति, पाञ्चभौतिक-मिति।—तथा च, एकस्मिन्—अवयविनि, बहूनां—भिन्नजातीयानामित्यर्थः, उपा-दानायोगात्—उपादानकारणत्वासम्भवात् इत्यर्थः। उपष्टम्भकत्वे—समवायिकारण-त्वाभावत्वे सति कारणत्वे इत्यर्थः ॥ १०२ ॥

सूक्ष्मशरीरं साधयितुं सूत्रमवतारयति—नास्तीति। सूक्ष्मापरपर्य्यायाऽऽतिवाहिक-

श्रुतिरपि—"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलात् यमः"। पुरि स्थूलशरीरे शेते इति पुरुषः सूक्ष्मदेहः ॥ १०३ ॥

अप्राप्तप्रकाशकम् इन्द्रियं, दूरे शब्दोपलम्भात् काचाभ्रस्फटिकान्तरोपलब्धेश्च इत्यत्राह,—

**नाप्राप्तप्रकाशकत्वमिन्द्रियाणाम्, अप्राप्तेः सर्वप्राप्तेर्वा ॥ १०४ ॥**

न अप्राप्तार्थप्रकाशकत्वं यदप्राप्तप्रकाशकत्वम्। श्रोत्रं वृत्तिद्वारेण शब्देन सह सम्बध्यते। काचादयस्तु स्वच्छत्वात् न चक्षुःप्रसारं प्रतिबध्नन्ति। दूरे च वृत्तिद्वारेण वस्तुग्रहणम्। यदि अप्राप्तेः न गृह्णाति, कुड्यव्यवहितवत् दूरत्वेन अप्राप्तेः अविशेषात् अव्यवहितमपि न गृह्णीत इति। अथ अप्राप्तेरपि गृह्णाति, अविशेषात् जगदुदरवर्त्ति सर्वं गृह्णीयात् इति ॥ १०४ ॥

यदि प्रसारि चक्षुः, तैजसं तर्हि इत्यत्राह,—

---

शरीरस्वीकारे श्रुतिरपि प्रमाणं वर्त्तते इत्याह—श्रुतिरपि। उदाहृतश्रुतौ पुरुषपदं व्याचष्टे—पुरि इति ॥ १०३ ॥

नेन्द्रियाणां प्राप्यकारित्वनियमः, चक्षुषस्तैजसत्वेन विषयदेशे गमनसम्भवेऽपि श्रोत्रादेस्तदसम्भवात्; किन्तु शब्द एव वीचितरङ्गन्यायेन कदम्बकोरकन्यायेन वा श्रोत्रदेशं गतः श्रोत्रेण गृह्यते। गन्धोऽपि वायुवशात् घ्राणदेशमागतो घ्राणेन गृह्यते। एवमन्यत्रापि। "दूरे शब्दः" इत्यादिप्रतीतिस्तु भ्रान्तिरेव, कारणशब्दविषयिणी वा इति नैयायिकमतं दूषयितुं सूत्रमवतारयति, अप्राप्तेति।—अप्राप्तानां—विषयासम्बद्धानाम् अर्थानां प्रकाशकत्वमिन्द्रियाणां न भवति, कुतः? इत्यत आह, अप्राप्तेरिति—असम्भवादित्यर्थः। अथ व्यापकत्वादिन्द्रियाणाम् अस्त्येव सम्बन्ध इति तत्राह, सर्वप्राप्तेरिति।—तथा च, जगदुदरवर्त्ति सर्वमेव गृह्णीयुः, तस्मात् विलक्षणः सम्बन्धः आवश्यक इति सूत्रतात्पर्य्यम् ॥ १०४ ॥

तर्हि चक्षुषः प्रसारित्वेन तैजसत्वम् अस्तु, इति न्यायमतं दूषयितुं सूत्रमवतारयति

**न तेजोऽपसर्पणात्तैजसं चक्षुः, वृत्तितस्तत्-सिद्धेः ॥ १०५ ॥**

तैजस इव अपसर्पणात्—दूरेऽपि प्रकाशकत्वात् तैजसम् इति अभिमानः। वस्तुतस्तु वृत्तिद्वारेण सम्बन्धात् तत्सिद्धेः प्रमेयसिद्धेः ॥ १०५ ॥

वृत्तेः अप्रत्यक्षत्वात् कथं वृत्तिसिद्धिः? इत्यत्राह,—

**प्राप्तार्थप्रकाशलिङ्गात् वृत्तिसिद्धिः ॥ १०६ ॥**

व्यक्तम ॥ १०६ ॥

वृत्तिः किं दीपज्वाला इव भागरूपा? गुणान्तरं वा? इत्यत्र आह,—

**भागगुणाभ्यां तत्त्वान्तरं वृत्तिः, सम्बन्धार्थं सर्पतीति ॥ १०७ ॥**

कार्य्यानुमेया वृत्तिः तत्त्वान्तरम् आहङ्कारिकम्, अनियतः पदार्थः, यतः असम्बद्धस्य ज्ञानायोगात् तदर्थं सर्पति। तथा च—

"वृत्तयः प्रसरद्रूपाः स्फारितास्तस्य यत्र च।
अदृष्टानुग्रहात तत्र सम्बद्धार्थावबोधिकाः॥" १०७ ॥

---

—सर्पतीति। अपसर्पणादित्यस्यार्थमाह—दूरेऽपि प्रकाशकत्वादिति। नन्वेवं चक्षुषः अपसर्पणाभावे विषयैः सह कथं सम्बन्धः भवेत्? इत्यत आह, वस्तुतस्तु इति।—प्रमेयसिद्धेः,—चक्षुषा प्रमेयरूपादिज्ञानादित्यर्थः। तथा च, भोगानुकूलादृष्टप्रयुक्ता इन्द्रियाणां शक्तिरेव विषयैः सह सम्बन्धः इति सिद्धान्तः; अत एवोक्तं—"वृत्तयः प्रसरद्रूपाः स्फुरितास्तस्य यत्र च। अदृष्टानुग्रहात् तत्र सम्बद्धार्थावबोधिकाः॥" इति॥ १०५॥

नन्वेवम अमूर्त्तत्वात अप्रत्यक्षा वृत्तिः केन प्रमाणेन सिध्यति? इत्यत आह, वृत्तेरिति।—तथा च, अनुमानेनैव इन्द्रियाणां वृत्तिसिद्धिः इति भावः॥ १०६॥

वृत्तिस्वरूपं बोधयितुं सूत्रमवतारयति, वृत्तिरिति।—तथा च, वृत्तिर्न इन्द्रियाणां

कथम् अमूर्त्तायाः वृत्तेः सर्पणक्रिया ? इत्यत्राह,—

**न द्रव्ये नियमः, तद्योगात् ॥ १०८ ॥**

अनियतत्वात् पदार्थानां न द्रव्ये एव क्रियानियमः, किन्तु यत्र प्रमाणं दृश्यते तत्र अनुमन्यामहे । वृत्तौ च क्रिया दृष्टा, अन्यथा वस्तूपलम्भाभावात् ॥ १०८ ॥

देशभेदे भौतिकानि इन्द्रियाणि भविष्यन्ति, यथा वृश्चिकदष्टस्य देशभेदे मरणम्, इत्यत्राह,—

**न देशभेदेऽप्यन्योपादानताऽस्मदादिवन्नियमः॥१०९॥**

स्वशरीरे एव व्याप्तिः गृहीता, आहङ्कारिकाणि इन्द्रियाणि; तद्व्यभिचारे धूमोऽपि अग्निं व्यभिचरेत् ॥ १०९ ॥

पाञ्चभौतिकम् इति व्यपदेशे हेतुमाह,—

**निमित्तव्यपदेशात् तद्व्यपदेशः ॥ ११० ॥**

भागः, गुणो वा, अपि तु विलक्षणमाहङ्कारिकं तत्त्वम् । तदर्थं—विषयज्ञानार्थम् । सर्पति—तदाकारवृत्तिमद्भवति ॥ १०७ ॥

वृत्तेः सर्पणरूपतां विशदयितुं सूत्रमवतारयति, कथमिति ।—तथा च, साङ्ख्यास्तावत् न नियतपदार्थवादिनः, यत्तु प्रामाणिकं, तदेव साङ्ख्यैरङ्गीक्रियते । इत्यञ्च द्रव्यम् एव क्रियावत् इति नियमः न साङ्ख्यैः अभ्युपेयते, बहिर्विषयप्रत्यक्षानुपपत्त्या आहङ्कारिके तत्त्वान्तरे वृत्तिरूपेऽपि सर्पणरूपक्रियाऽङ्गीकारे बाधाभावात् इति तात्पर्य्यम् ॥ १०८ ॥

इन्द्रियाणां भौतिकत्वं तत्तच्छरीरदेशावच्छिन्नत्वञ्च इति मतं दूषयितुं सूत्रमवतारयति—देशभेदे इति । वृश्चिकदष्टस्य—पुत्तिकादिशरीरस्य इत्यर्थः । देशभेदे—तत्तदवयवावच्छेदे । मरणं—चैतन्यापसरणम । अस्मदादिवदिति—यथा अस्मदादिदेहेषु इन्द्रियाणाम् आहङ्कारिकत्वम् अनुमानेन सिद्धं, तथा प्राण्यन्तरस्यापि इति ज्ञेयम ॥ १०९ ॥

शरीरस्य एकैकभूतमात्रोपादानकत्वे पाञ्चभौतिकत्वप्रवादः कथं सिध्येत् ? इत्यतः सूत्रमवतारयति, पाञ्चभौतिकमिति ।—तथा च, शरीरस्य एकमात्रभूतोपा-

पञ्चोपादानता निषिद्धा, न निमित्तता; तेन पाञ्च-भौतिकम् इति व्यपदेशः ॥ ११० ॥

कति शरीरभेदाः ? इत्यत आह,—

**ऊष्मजाण्डज-जरायुजोद्भिज्ज-सङ्कल्पज-सांसिद्धिकञ्चेति न नियमः ॥ १११ ॥**

ऊष्मजः,—दन्दशूकादिः। अण्डजाः,—पक्षिसर्पादयः। जरायुजः,—मनुष्यादिः। उद्भिज्जाः,—वृक्षादयः। सङ्कल्पजः,—मन्वादिः। सांसिद्धिकः,—मन्त्रौषधादिसिद्धः। चत्वारि एव इति न नियमः ॥ १११ ॥

देहे किं भूतं प्रधानम ? इत्यत्राह,—

**सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत् ॥ ११२ ॥**

सर्वेषु इति बाहुल्येन, "सूर्य्यादिलोके तैजसं शरीरम्" इति श्रुतेः। तत्रापि बहुतरपार्थिवावयवावष्टम्भकत्वम्, अल्पत्वे च अनुपभोगात्। पूर्ववत् इति सर्वम् एव उक्तम् ॥ ११२ ॥

देहे प्राणदर्शनात् तस्य देहारम्भकत्वशङ्कामपनयति,—

**न देहारम्भकस्य प्राणत्वम्, इन्द्रियशक्तितस्तत्सिद्धेः ॥ ११३ ॥**

दानकत्वेऽपि अन्येषां भूतानां तन्निमित्तत्वम् इति तद्वशादेव तत्र पाञ्चभौतिकत्व-व्यपदेशः ॥ ११० ॥

शरीरभेदान् प्रपञ्चयितुं सूत्रमवतारयति, कतीति।—सुगमम् ॥ १११ ॥

देहविशेषे भूतविशेषप्राधान्यव्यवस्थापनाय सूत्रमवतारयति—देहे इति। सूत्रे सर्वेषु इति पदं व्याचष्टे—बाहुल्येनेति। सर्वपदस्य लक्षणाया हेतुमाह—सूर्य्यादि-लोके इति ॥ ११२ ॥

प्राणाख्यस्य वायोः देहारम्भकत्वशङ्कां निराकर्तुं सूत्रमवतारयति, देहे इति।—

भौतिकवायोः देहारम्भकत्वं, न तु प्राणवायोः भौतिकत्वं, "प्राणात् सर्वम् प्रजायत" इति श्रुतेः। यावद्देहभावित्वे न च आरम्भकत्वभ्रमः। सर्वेन्द्रियशक्त्या प्राणः धार्य्यते इति यावत् इन्द्रियं, तावत् तत्सिद्धिः प्राणधारणसिद्धिः ॥ ११३ ॥

देहे निष्पन्ने आत्माधिष्ठानम् ? आत्मन्यधिष्ठिते वा देहनिष्पत्तिः ? इति निर्णयमाह,—

**भोक्तुरधिष्ठानाद्भोगायतननिर्माणम्, अन्यथा पूतिभावप्रसक्तेः ॥ ११४ ॥**

स्फुटम् ॥ ११४ ॥

प्रधानमूलत्वात् शरीरस्य तद्द्वारेण एव अधिष्ठानं भविष्यति, इत्यत्राह,—

**भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात् ॥ ११५ ॥**

जड़े भृत्ये अवलम्बिनो सर्वत्र स्वास्थितिः यथा, तथा जड़स्य प्रधानस्य अधिष्ठानान्न पूतिभावविरोधः ॥ ११५ ॥

ब्रह्मरूपनिरूपणाय अन्येषां तुल्यरूपमाह,—

**समाधि-सुषुप्ति-मोक्षेषु ब्रह्मरूपता ॥ ११६ ॥**

---

तथा च, देहजनकस्य वायोः प्राणत्वं नास्माभिः स्वीक्रियते, सर्वेन्द्रियशक्तितः,—सर्वेन्द्रियशक्तिरूपेण, तत्सिद्धेः,—प्राणधारणसिद्धेः इत्यर्थः ; अत एवोक्तं कारिकाकृद्भिः, सामान्यकरणवृत्तिः प्राणाद्याः वायवः पञ्च इति ॥ ११३ ॥

देहस्य आत्माऽधिष्ठानरूपं किं स्वरूपम ? इति निर्णयाय सूत्रमवतारयति—देहे निष्पन्ने इति । अधिष्ठानात्—सम्बन्धविशेषात् । पूतिभावः,—दुर्गन्धिता ॥ ११४ ॥

पुरुषस्य भृत्यप्रायं प्रधानं, तद्द्वारेणैवास्य शरीराधिष्ठानमस्तु, न तु स्वातन्त्र्येण, इत्याशङ्कासमाधानाय सूत्रमवतारयति—प्रधानेति । प्रधानद्वारा पुरुषस्य अधिष्ठितिः नैकान्तात्—व्यभिचारात्, सर्वत्र विद्यमानत्वादिति यावत् ॥ ११५ ॥

मोक्षदशायाम आत्मनः स्वरूपप्रतिष्ठारूपब्रह्मस्वरूपत्वं प्रतिपादयितुं सूत्रमवतारयति —ब्रह्मेति । समाधिः,—चरमज्ञानावस्था । सुषुप्तिः,—सम्प्रलयः । मोक्षः,—

ब्रह्मणा सह तुल्यरूपता, सर्वत्र बाह्यासंवेदनात्, न तु ब्रह्मरूपता ॥ ११६ ॥

ब्रह्मणः स्वरूपमाह,—

**द्वयोः सबीजत्वम्, अन्यस्य तद्धतिः ॥ ११७ ॥**

द्वयोः,—समाधि-सुषुप्त्योः । सबीजत्वं—संस्कारवत्त्वम् । अन्यस्य—मोक्षस्य । तद्धतिः,—बीजहानम् ॥ ११७ ॥

समाधि-सुषुप्त्योः दृष्टा निरुद्धवृत्तिकत्वात् कृतकृत्यता, न तु मोक्षस्य, इत्यत्राह,—

**द्वयोरिव त्रयस्यापि दृष्टत्वात्, न तु द्वौ ॥ ११८ ॥**

त्रयस्यापि—मोक्षस्यापि । दृष्टत्वात्—श्रुत्यनुमानप्रतिपादनात्, कृतकृत्यता ; न तु द्वौ—सुषुप्ति-समाधी ; सबीजत्वात् तयोः कृतकृत्यता गौणी इति ॥ ११८ ॥

रागादीनां बन्धहेतुत्वात् किं वासनया ? इत्यत आह,—

---

विदेहकैवल्यम् । आसु अवस्थासु पुरुषस्य ब्रह्मरूपता हि बुद्धिवृत्तिविलयतः तदीयौपाधिकपरिच्छेदापगमेन स्वस्वरूपे पूर्णतया अवस्थानम् इति सूत्रार्थः । न तु ब्रह्मरूपता इति श्रुतौ ब्रह्मरूपता-पदं ब्रह्मणा तात्त्विकाभेदपरम् ; तथा च, ब्रह्मरूपता अत्र दुःखासंवेदनमेव ॥ ११६ ॥

मोक्षदशायां समाधि-सुषुप्तिवैलक्षण्यं प्रतिपादयितुं सूत्रमवतारयति—ब्रह्मण इति । तद्धतिः,—तस्य सबीजत्वस्य हानमित्यर्थः । संस्कारवत्त्वं—पुनर्दुःखप्रयोजकसंस्कारवत्त्वमित्यर्थः ॥ ११७ ॥

मोक्षदशायां प्रमाणाभावम् आशङ्क्य निराकर्तुं सूत्रमवतारयति, समाधीति ।—यथा सुषुप्तिः प्रत्यक्षसिद्धा, यथा वा समाधिरागमसिद्धः, तथैव मोक्षोऽपि शास्त्रसिद्धः ; तथापि, द्वौ—सुषुप्ति-समाधी, नात्यन्तपुरुषार्थौ पुनः दुःखोत्पाददर्शनात् ; किन्तु मोक्ष एव अत्यन्तः पुरुषार्थः ; कारणनिवृत्त्या पुनः दुःखानुदयात् इति [illegible]-तात्पर्य्यम् ॥ ११८ ॥

वासनाया बन्धहेतुत्वं प्रतिपादयितुं सूत्रमवतारयति—रागादीनामिति ।

**वासनयाऽनर्थख्यापनं दोषयोगेऽपि, न, निमित्तस्य प्रधानबाधकत्वम् ॥ ११९ ॥**

न दोषात् एव बन्धः इति वक्तव्यम्। वासनया अनर्थख्यापनम् अवश्यं कर्त्तव्यम्। दोषाणाम् एव निमित्तस्य प्रधानस्य मुक्तौ बाधकत्वं वक्तव्यम्; मुख्यञ्च वासना इति ॥ ११९ ॥

इष्वादिक्षेपे वेगाख्यात् संस्कारात् कर्म, कर्मणा च संस्कारः, इति अनेके संस्काराः। तत् निषेधति,—

**एकः संस्कारः क्रियानिर्वर्त्तकः, न तु प्रतिक्रियं संस्कारभेदाः, बहुकल्पनाप्रसक्तेः १२० ॥**

एकसंस्कारपक्षे इषोः निपातः इति उक्तम्। परिणामपक्षे च एकस्यैव मन्दतरादिपरिणामात् पातः इति बहुकल्पनायां गौरवम् इति ॥ १२० ॥

एकः विषयः, यतः एका बुद्धिः, सत् सत् इति प्रत्ययस्य अविशेषात् इत्यतः आह,—

**न बाह्यबुद्धिनियमः ॥ १२१ ॥**

यथा सदिति प्रत्ययः अबाधितः, तथा घटपटादिप्रत्ययो-

---

दोषयोगेऽपि—रागादियोगेऽपि। वासनयैव अनर्थख्यापनं—सौन्दर्यासौन्दर्यज्ञानमित्यर्थः, कारणमिति शेषः। अतो न रागादेर्बन्धहेतुत्वं, किन्तु निमित्तस्य—रागादेरपि निमित्तस्य, वासनाया इति यावत्। प्रधानबाधकत्वम्—अपवर्गप्रतिबन्धकत्वम्; तस्मात् वासनोच्छेदे एव यतितव्यमिति सूत्राशयः ॥ ११९ ॥

प्रसङ्गेन 'इष्वादिक्षेपे अनेके एव संस्काराः हेतवः' इति मतं निरसितुं सूत्रमवतारयति—इष्वादिक्षेपे इति। बहुकल्पनाप्रसक्तेः,—अनावश्यकबहुकल्पनाप्रसक्तेरित्यर्थः। एकस्यैव—वेगाख्यसंस्कारस्य इत्यर्थः। पातः, इषोरिति शेषः ॥ १२० ॥

अनुवृत्तप्रतीतिविषयत्वात् सदेव एकं तत्त्वं, न घटपटादयः इति मतं निरसितुं सूत्रमवतारयति—एको विषय इति। सूत्रे नेति पदं सदिति प्रत्ययस्यैव प्रामाण्यभावनिषेधकम्; यतः बाह्यविषयकबुद्धीनां प्रामाण्यव्यवस्था, अतः सद्बुद्धिरेव प्रमाणम्

ऽपि । सदिति प्रत्ययश्च सामान्यविषयः; तस्मात् न बाह्यबुद्धौ एकस्यैव इति नियमः ॥ १२१ ॥

पाञ्चभौतिकं जीवशरीरम् । कतिभूतारब्धं स्थावरम् ? इत्यत्र आह,—

**वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीना-मपि भोक्तृभोगायतनत्वं पूर्ववत् ॥ १२२ ॥**

पूर्ववत् इति भोगायतनत्वात् पाञ्चभौतिकम् । भोगायतनत्वञ्च जन्मान्तरीयक्रियाविशेषात्, "जीवात्मानः एव स्थावराश्रयताम उपगच्छन्ति" इति श्रुतेः ॥ १२२ ॥

अत्र प्रमाणभूता स्मृतिरपि अस्तीत्याह,—

**स्मृतेश्च ॥ १२३ ॥**

व्यक्तम् । तथा च—

"अभिवादितविप्रो य आशिषं न प्रयच्छति ।
श्मशाने जायते वृक्षो गृध्रकङ्कनिषेवितः ॥
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥" १२३ ॥

वृक्षादीनां देहत्वे कर्माधिकारिता स्यादित्यतः आह,—

**न देहमात्रतः कर्माधिकारित्वं, वैशिष्ट्यश्रुतेः ॥ १२४ ॥**

---

इति नाङ्गीकार्य्यमिति सूत्रतात्पर्य्यमवसेयम् । बाह्यबुद्धौ—'घटः सन्' 'पटः सन्' इत्यादिबुद्धौ । एकस्यैव—सदंशस्यैव इत्यर्थः ॥ १२१ ॥

स्थावरशरीराणाम् उपादाननिर्णयाय सूत्रमवतारयति—पाञ्चभौतिकमिति ॥१२२॥

वृक्षादिशरीराणां भोगायतनत्वे स्मृतिरपि प्रमाणमस्ति इति दर्शयितुं सूत्रमवतारयति—अत्रेति ॥ १२३ ॥

वृक्षादीनां देहरूपत्वे कर्माधिकारप्रसङ्गः इति शङ्कां निराकर्त्तुं सूत्रमवतारयति,

जीवदेहाः अपि चाण्डालादयः न कर्माधिकारिणः, किं पुनः स्थावराः ? इति, विशिष्टदेहस्य कर्माधिकारित्वात् ॥१२४॥

देहभेदमाह,—

**त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ॥ १२५ ॥**

वीतरागाणां फलसन्न्यासेन कर्मकरणात् कर्मदेहः। पश्वादीनाम् उपभोगदेहः। भोगिनां कर्माधिकारिणां कर्मोपभोगदेहः ॥ १२५ ॥

चतुर्थम् अनधिकारिणं देहमाह,—

**न किञ्चिदप्यनुशयिनः ॥ १२६ ॥**

"विद्यादनुशयो द्वेषे पश्चात्तापानुबन्धयोः" शाश्वतः। अनुशयिनः,—योगिनः। न किञ्चिदपि, सर्वानधिकारात् ॥१२६॥

नित्यां बुद्धिं निराकरोति,—

**न बुद्ध्यादिनित्यत्वम्, आश्रयविशेषेऽपि वह्निवत् ॥ १२७ ॥**

व्याप्तिस्वरूपस्य व्यभिचारे सर्वत्र अनाश्वासः। तथा च, आश्रयविशेषे चन्दनप्रभवस्य वह्नेः अनुष्णत्वम् ॥ १२७ ॥

---

पश्वादीनामिति।—तथा च, अर्थी समर्थः विद्वान् अपर्युदस्त एव अधिकारी भवति, न देहाभिमानिमात्रमिति तात्पर्य्यम ॥ १२४ ॥

देहभेदेनैव कर्माधिकारं दर्शयितुं देहवैविध्यप्रतिपादकं सूत्रमवतारयति—देहभेदमिति ॥ १२५ ॥

प्रकारान्तरं दर्शयितुं सूत्रमवतारयति—चतुर्थमिति । अनुशयः,—प्रारब्धकर्मशेषः, सः अस्य अस्तीति अनुशयी तस्य—ज्ञानिनः इत्यर्थः, न किञ्चिदपि, कर्म इति शेषः ; तथा च, प्रारब्धशेषमात्रं भुञ्जानो ज्ञानी न विधिनिषेधेषु अङ्गीक्रियते इति भावः ॥ १२६ ॥

जीवसम्बन्धिन्यो ज्ञानेच्छाकृतयः यद्यपि अनित्याः, तथाऽपि ईश्वरे ताः नित्याः

दूषणान्तरमाह,—

**आश्रयासिद्धेश्च ॥ १२८ ॥**

ईश्वरस्य असत्त्वात्, आत्मनाञ्च धर्माभावात्, प्रकृति-धर्माणां परिणामित्वात्, महदादीनाम् अनित्यत्वात् । न च अनित्याश्रयाः धर्माः नित्याः भवितुमर्हन्ति, तस्मात् नित्य-बुद्धेः आश्रयः नास्ति ॥ १२८ ॥

मणिमन्त्रौषधितपःप्रभावात् सिद्धिः दृष्टा, न तु योगसिद्धयः दृष्टाः, इत्यत्राह,—

**योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥ १२९ ॥**

अणिमादिसिद्धि-कायव्यूह-परपुरप्रवेशादयः दृष्टाः, ते च मन्त्रादिभ्यः क्षुद्रसिद्धिप्रदेभ्यः असम्भवन्तः योगमेव अवलम्बन्ते इति न अपलपनीयाः ॥ १२९ ॥

पृथक् भूतानां चैतन्यादर्शनेऽपि संहताः शरीरभावम् आपन्नाः चेतयिष्यन्ति इत्यत्राह,—

**न भूतचैतन्यं प्रत्येकानुपलब्धेः सांहत्ये च सांहत्ये च ॥ १३० ॥**

यस्य स्वल्पा शक्तिः अस्ति, तस्य समुदायात् महाशक्तिः जायते, यथा तन्तूनां स्वल्पशक्तिमतां समुदायात् गजबन्धन-

---

एव इति न्यायमतं प्रसङ्गेन दूषयितुं सूत्रमवतारयति—नित्यामिति । व्याप्तिस्वरूपस्य—स्वदेहे एव सिद्धस्य, ज्ञानत्वादीनाम् अनित्यत्वव्याप्यत्वस्य इत्यर्थः ॥ १२७ ॥

अत्रैव दूषणान्तरमवतारयति—दूषणान्तरमिति ॥ १२८ ॥

योगानां सिद्धिहेतुत्वं नास्तीति मतं निराकर्तुं सूत्रमवतारयति—मणि-मन्त्रेति ॥ १२९ ॥

पृथक् भूतानां चैतन्यादर्शनेऽपि देहाकारपरिणतेषु तेषु सम्भवत्येव चैतन्यमिति

शक्तिः दृश्यते, न तथा भूतानां पृथक् चैतन्यं दृष्टं, येन सांहत्ये चैतन्योद्भवः स्यात्। तथा संहतत्वाविशेषात् मृतदेहस्यापि चैतन्यप्रसङ्गः ; तस्मात् अन्यः एव चेतनः। उक्तमपि अर्थं प्रसङ्गानुप्रसङ्गेन व्यवहितम् इति स्मारितं, तेन न पुनरुक्तम्। सांहत्ये च इति वीप्साऽध्यायपरिसमाप्तौ ॥ १३० ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तौ परपक्षनिर्णयाध्यायः पञ्चमः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

---

सकलशास्त्रार्थे कथिते परपक्षनिर्णयानन्तरं तमेवार्थं सङ्कलय्य तन्त्रन्यायेन वक्तुं षष्ठाध्यायारम्भः ।

### अस्त्यात्मा, नास्तित्वसाधनाभावात् ॥ १ ॥

स्पष्टम् ॥ १ ॥

---

चार्वाकमतं निरसितुं सूत्रमवतारयति—पृथगिति। नन्वेतत् सूत्रं निष्प्रयोजनं, प्रथमाध्याये एव सूत्रकृतैव भूतचैतन्यस्य निराकृतत्वात् इत्यत आह—उक्तमिति॥ १३० ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तिटीकायाम पञ्चमोऽध्यायः

परपक्षनिर्णयाध्यायः पञ्चमः ।

---

अध्यायचतुष्टयेन समस्तशास्त्रार्थं प्रतिज्ञाय पञ्चमाध्याये परपक्षनिराकरणेन स्वमतं प्रसाध्य षष्ठेऽध्याये तत्र सारभूतं शास्त्रार्थं सङ्कलयन् उपसंहरति सूत्रकारः। उक्तानामेवार्थानां विस्तरतः प्रतिपादने कृते बुभुत्सूनाम् असन्दिग्धाविपर्य्यस्तदृढतरो निश्चयः उत्पद्यते इत्यतः स्थूणानिखननन्यायात् क्वचिदनुक्तयुक्त्याद्युपन्यासाच्च नात्र पौनरुक्त्यं दोषाय इति विभावनीयम्। तन्त्रन्यायः,—विस्तरेण अर्थप्रतिपादनम्। तथा च, जानामीत्येवं प्रतीयमानतया पुरुषः सामान्यतः सिद्धः एव अस्ति, बाधकप्रमाणाभावात् ॥ १ ॥

सामान्येन आत्मनि अविप्रतिपत्तेः विशेषनिरूपणाय आह,—

**देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् ॥ २ ॥**

देहाभेदपक्षे बाल्यकौमारयौवनवार्द्धकदेहभेदात् अनेकात्मत्वप्रसङ्गः, मृते देहनाशात् तस्य जन्मान्तरवैचित्र्यानुपपत्तिः। श्रुतिश्च,—

"अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति सर्वं न हि तस्य वेत्ता
तमाहुरग्र्यं पुरुषं पुराणम्" ॥ २ ॥

हेत्वन्तरमाह,—

**षष्ठीव्यपदेशादपि ॥ ३ ॥**

"मम देहः" इति ज्ञानम् अस्ति, भेदे च षष्ठी श्रूयते। "स्थूलोऽहम्" इति सामानाधिकरण्यमस्ति इति चेन्न, देहे प्रत्युपभोगात् तन्निमित्तः अयं गौणः प्रत्ययः ॥ ३ ॥

"शिलापुत्रकस्य शरीरम्" इति अभेदेऽपि षष्ठीश्रुतेः न भेदः, इत्यत्राह,—

**न, शिलापुत्रवद्धर्मिग्राहकमानबाधात् ॥ ४ ॥**

---

सामान्येनेति।—विशेषनिरूपणं—प्रकृत्यादिभ्यो भिन्नत्वेन निर्द्धारणम्। सैवं वैचित्र्यं व्याचष्टे, जन्मान्तरेति।—तथा च, बाल्यकौमारयौवनवार्द्धक्यभेदेन देहविनाशमनु आत्मनोऽपि विनाशित्वे कृतनाशाकृताभ्यागमप्रसङ्गात् नात्मनः जन्मान्तरादिरूपं वैचित्र्यं भोगानुकूलं सिध्येत इति भावः। आत्मनो देहादिभिन्नत्वसाधिकां श्रुतिमुदाहरति, श्रुतिश्चेति।—अनया श्रुत्या पाणिपादादिनिराकरणेन आत्मनो देहादिभिन्नत्वं प्रतिपाद्य तृतीयपादेन तस्य स्वप्रकाशकरूपत्वं साध्यते ॥ २ ॥

आत्मनो देहादिभिन्नत्वे साधकान्तरं प्रदर्शयितुं सूत्रमवतारयति—हेत्वन्तरमिति। देहे प्रत्युपभोगादिति—देहावच्छेदेन आत्मनि सुखदुःखाद्यनुभवोत्पत्तेरित्यर्थः ॥ ३ ॥

मम देहः इति व्यवहारः अभेदषष्ठ्याऽपि उपपद्यते इति शङ्कां निराकर्तुं

न, तत्र प्रत्यक्षेण एव अभेदप्रतीतेः षष्ठी बाधिता इति गौणः प्रयोगः । मुख्यसम्भवात् गौणः अत्र न अस्ति ॥ ४ ॥

सुखोत्कर्षात् कृतकृत्यता स्यात्, इत्यतः आह,—

**अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ॥ ५ ॥**

सुखोत्कर्षस्यापि क्षयित्वात् न कृतकृत्यता । अत्यन्तदुःखनिवृत्तिस्तु तथा, अपुनरावृत्तेः ॥ ५ ॥

सुखाभावस्यापि विद्यमानत्वादपुरुषार्थत्वम् इत्यत्राह,—

**यथा दुःखात् क्लेशः पुरुषस्य, न तथा सुखादभिलाषः ॥ ६ ॥**

सुखे दुःखस्य अवश्यम्भावात्, यदि सुखे सति दुःखम् अवश्यं भवेत्, कः सुखम् अभिलषेत् ? तस्मात् दुःखबहुलत्वात् दुःखनिवृत्तिः एव पुरुषार्थः ॥ ६ ॥

सुखस्य हेयत्वमाह,—

**कुत्रापि कोऽपि सुखी न ॥ ७ ॥**

स्वयमेव चिन्त्यताम् ॥ ७ ॥

---

सूत्रमवतारयति—शिलापुत्रकस्येति । मुख्यसम्भवात—षष्ठ्याः भेदरूपमुख्यार्थपरत्वेनैवोपपत्तेरित्यर्थः । अत्र—मम देह इत्यादिस्थले ॥ ४ ॥

मोक्षस्वरूपनिर्णयाय सूत्रमवतारयति—सुखेति । क्षयित्वात्—जन्यभावत्वेन विनाशित्वादित्यर्थः । कृतकृत्यता—परमपुरुषार्थलाभः । तथा—कृतकृत्यता इत्यर्थः ॥ ५ ॥

एवञ्चेत् मुक्तौ सुखाभावस्य विद्यमानत्वेन न तत्र प्रवृत्तिः सम्भवतीति मतं दूषयितुं सूत्रमवतारयति—सुखाभावस्यापीति । दुःखबहुलत्वात्, संसारस्य इति शेषः । यथा सुखेऽपि दुःखावश्यम्भावात् द्वेषः, तथा दुःखेऽपि सुखादल्पात् लभ्यमानात् अभिलाषो न, सुखं हि बहुतरदुःखविमिश्रितमिति न सुखे विवेकिनामभिलाषः इति भावः ॥ ६ ॥

स्पष्टम् ॥ ७ ॥

प्रत्यक्षमेव वनितादीनां सुखहेतुत्वम् इत्यत्राह,—

**तदपि दुःखशबलमिति दुःखपक्षे निक्षिपन्ते विवेचकाः ॥ ८ ॥**

स्रगादीनाम् अर्जने क्षयादौ च दुःखम् इति स्वसंवेदनमेव प्रमाणम् इति ॥ ८ ॥

सुखमेव परमपुरुषार्थः, न तु अभावः, इत्यत्राह,—

**सुखलाभाभावादपुरुषार्थत्वमिति चेन्नैवं, द्वैविध्यात् ॥ ९ ॥**

रागिणां सुखं, वीतरागाणां दुःखाभावः इति ॥ ९ ॥

विशेषगुणोच्छित्तिः मुक्तिः इत्यत्राह,—

**निर्गुणत्वमात्मनोऽसङ्गादिश्रुतेः ॥ १० ॥**

विशेषगुणनिषेधात् सामान्यगुणस्वीकारः ; तथा च असङ्गादिश्रुतिविरोधः स्यात् ॥ १० ॥

यदि असङ्गः पुरुषः, कथं धर्मात् स्वर्गः, अधर्मात् नरकः ? इत्यत्राह,—

**परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ॥ ११ ॥**

प्रकृतिधर्मत्वेऽपि प्रकृतिपुरुषाविवेकात् तच्छायाऽऽपत्त्या आत्मनः स्वर्गादिप्राप्तिरिति अभिमानः ॥ ११ ॥

---

ननु अस्तु दुःखमिश्रणं, तथाऽपि सुखमिति काम्यं भवेत् इत्येतत् मतं दूषयितुं सूत्रमवतारयति—प्रत्यक्षमिति । प्रमाणमिति—सुखस्यापि दुःखमयत्वे इति भावः ॥ ८ ॥

सुखस्यैव पुरुषार्थत्वं लोके दृष्टं, न तु दुःखाभावस्य इति शङ्कां निराकर्त्तुं सूत्रमवतारयति, सुखमेवेति ।—तथा च, रागिणां सुखस्य पुरुषार्थत्वेऽपि वीतरागाणां विवेकिनां दुःखाभाव एव परमपुरुषार्थः इति भावः ॥ ९ ॥

वैशेषिकसम्मतं मोक्षं निराकर्त्तुं सूत्रमवतारयति, विशेषेति ।—विशेषगुणोच्छित्तिः मुक्तिरिति पक्षे तु सामान्यगुणस्वीकारः आपतेदेव, स च आत्मनः असङ्गत्वबोधिकया श्रुत्या विरुद्धः इति भावः ॥ १० ॥

अविवेकः किं सादिः ? अनादिः वा ? इत्यत्राह,—

**अनादिरविवेकः, अन्यथा दोषद्वयप्रसक्तेः॥ १२ ॥**

यदि सादिः अविवेकः भवेत्, तदुत्पत्तेः पूर्वं मोक्षः स्यात्, तदुत्पत्तौ च बन्धः इति मुक्तस्य बन्धः इति एकः दोषः। अविवेकप्रागभावस्यापि विद्यमानत्वात् मुक्तिसिद्धौ अविवेकनाशार्थम् अनुष्ठानं व्यर्थम् इति द्वितीयः दोषः ॥ १२ ॥

अविवेकः अनादित्वात् किं नित्यः अनित्यः वा ? इत्यत्र आह,—

**न नित्यः स्यादात्मवत्, अन्यथाऽनुच्छित्तिः ॥ १३ ॥**

नित्यो द्विधा, कूटस्थनित्यः आत्मा, परिणामिनित्या प्रकृतिः। न द्वयमपि अविवेकः, किन्तु अनित्य एव नाशात्। अन्यथा नित्यत्वे अनुच्छित्तिः। आत्मवत् इति उपलक्षणं, प्रकृतिवदित्यपि द्रष्टव्यम् ॥ १३ ॥

अविवेकनाशः केन ? इत्यत्राह,—

**प्रतिनियतकारणनाश्यत्वमस्य, ध्वान्तवत् ॥ १४ ॥**

यथा ध्वान्तस्य नाशकः प्रकाशः इति ॥ १४ ॥

---

पुरुषस्य असङ्गत्वमेव अनुपपन्नमिति शङ्कां निराकर्तुं सूत्रमवतारयति, यदीति।— सुगमम् ॥ ११ ॥

अविवेकस्वरूपं निरूपयितुं सूत्रमवतारयति, अविवेक इति।—यदि अविवेकः सादिर्भवेत्, तर्हि तदुत्पत्तेः पूर्वं मोक्षः स्यात्, तदुत्पत्तौ च बन्धः, इति मुक्तस्य पुनर्बन्धापत्तिः एको दोषः। अविवेकाभावस्यापि विद्यमानत्वात् मुक्तिसिद्धौ अविवेकनाशार्थं यत्नो निरर्थकः स्यादिति द्वितीयो दोषः ॥ १२ ॥

अनादित्वेऽपि अविवेकस्य नित्यत्वम् ? अनित्यत्वं वा ? इति पुनः शङ्कायां समाधानसूत्रमवतारयति, अविवेक इति।—तथा च, अविवेकः आत्मवत् न कूटस्थनित्यः, नापि प्रकृतिवत् परिणामिनित्यः, अन्यथा नित्यत्वे अनुच्छित्तिः स्यादिति भावः ॥ १३ ॥

अविवेकनाशोपायं निरूपयितुं सूत्रमवतारयति, अविवेकेति।—सुगमम् ॥ १४ ॥

अत्र को नाशकः? इत्यत्राह,—

**अत्रापि प्रतिनियमः, अन्वयव्यतिरेकात् ॥ १५ ॥**

अव्यभिचारात् विवेकः एव नाशकः इति ॥ १५ ॥

किम् अविवेकात् बद्धः आत्मा? अथान्यदपि बन्धकारणम् अस्ति? इत्यत्राह,—

**प्रकारान्तरासम्भवादविवेक एव बन्धः ॥ १६ ॥**

व्यक्तम् ॥ १६ ॥

मुक्तेः कार्य्यत्वात् नाशे पुनः बन्धः इत्यत्राह,—

**न मुक्तस्य पुनर्बन्धयोगोऽपि, अनावृत्तिश्रुतेः ॥ १७ ॥**

श्रुतिश्च "आत्मा ज्ञातव्यः प्रकृतितः विवेक्तव्यः न पुनः आवर्त्तते" इति। न्यायश्च "भावकार्य्यस्य नाशात्" दुःख-निवृत्तिस्तु अभावरूपा इति ॥ १७ ॥

विपक्षे दोषमाह,—

**अपुरुषार्थत्वमन्यथा ॥ १८ ॥**

विवेकः पुरुषार्थः ॥ १८ ॥

---

किं तत् नियतकारणम्? इत्याशङ्कायां सूत्रमवतारयति, अत्रेति।—ध्वान्ता-लोकयोरिव प्रकृतेऽपि प्रतिनियमः शुक्तिरजतादिषु अन्वयव्यतिरेकाभ्यामेव ग्राह्यः इत्यर्थः। तथा च, श्रवण-मनन-निदिध्यासनरूपमेव कारणम् अविवेकनाशाय, न तु कर्मादीनि इति भावः ॥ १५ ॥

बन्धस्य स्वाभाविकत्वं न सम्भवतीति प्रथमपादोक्तं स्मारयितुं सूत्रमवतारयति—किमिति। बन्धोऽत्र दुःखयोगाख्यबन्धकारणम् ॥ १६ ॥

मुक्तेरपि कार्य्यत्वेन विनाशापत्त्या पुनर्बन्धप्रसङ्गः इति शङ्कां निराकर्तुं सूत्रमव-तारयति—मुक्तेरिति। अत्र सूत्रे अपि-शब्देन विवेकख्यात्या मुक्तिः समुच्चीयते, उभय-त्रापि अनावृत्तिश्रुतेः। भावकार्य्यस्यैव नाशनियमः इति भावः ॥ १७ ॥

पुनरावृत्तौ दोषमुद्भावयितुं सूत्रमवतारयति, विपक्षे इति।—अन्यथा मुक्तस्यापि पुनर्बन्धे मोक्षस्य परमपुरुषार्थत्वाभावः स्यादित्यर्थः। विवेकः,—आत्यन्तिकदुःखनिवृत्तिः, कार्य्ये कारणोपचारात् ॥ १८ ॥

दूषणान्तरमाह,—

**अविशेषापत्तिरुभयोः ॥ १९ ॥**

संसारि-मुक्तयोः बन्धयोगाविशेषात् ॥ १९ ॥

व्याध्यादयो योगान्तरायाः ; तथा च पतञ्जलिः,—"व्याधि-स्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानव-स्थितत्वानि चित्तविक्षेपाः, ते अन्तरायाः। व्याधिः ज्वरादिः, स्त्यानम् अकर्मण्यता, संशयः उभयकोटिस्पृग्ज्ञानं, प्रमादः समाधौ अनवधानम्, आलस्यं कायगुरुत्वम्, अविरतिः विषय-तृष्णा, भ्रान्तिदर्शनं मिथ्याज्ञानम्, अलब्धभूमिकत्वं समाधि-भूमेः अलाभः, अनवस्थितत्वं लब्धभूमेः मनसि भ्रंशित्वम्। मुक्तौ किम् एषां ध्वंसमात्रम ? धर्मान्तरप्राप्तिः वा ? इत्यत्राह,—

**मुक्तिरन्तरायध्वस्तेर्न परः ॥ २० ॥**

धर्मान्तरपक्षे कूटस्थत्वप्रच्यवः इति ॥ २० ॥

अभ्युपगम्याप्याह,—

**तत्राप्यविरोधः ॥ २१ ॥**

अपुरुषार्थत्वे हेतुं प्रकटयितुं सूत्रमवतारयति, दूषणान्तरमिति।—भाविबन्धत्व-साम्येन उभयोः मुक्त-बन्धयोः विशेषो न स्यात् ततश्च अपुरुषार्थत्वमिति सूत्र-तात्पर्य्यम ॥ १९ ॥

मुक्तौ अन्तरायध्वंस एव ? उत धर्मान्तरप्राप्तिर्वा ? इति शङ्कायां समाधानसूत्रमव-तारयति—व्याध्यादय इति। एषां—व्याध्यादीनाम्। धर्मान्तरस्वीकारे दोषमाह, धर्मान्तरेति।—तथा च, मुक्तौ अन्तरायध्वंस एव न परः, धर्मः इति शेषः। धर्मान्तरपक्षे कूटस्थत्वव्याहतिः इति भावः ॥ २० ॥

तत्राप्यविरोधः इति।—इदं सूत्रं विज्ञानभिक्षुणा अन्यथा व्याख्यातं, तद्यथा— "नन्वेवं बन्ध-मोक्षयोः मिथ्यात्वे मोक्षस्य पुरुषार्थताप्रतिपादकश्रुत्यादिविरोधः इत्याह, तत्राप्यविरोध इति।—तत्रापि—अन्तरायध्वंसस्य मोक्षत्वेऽपि, पुरुषार्थत्वाविरोधः इत्यर्थः। दुःखयोगवियोगावेव हि पुरुषे कल्पितौ, न तु दुःखभोगोऽपि। भोगस्य

भवतु धर्मयोगः, तथाऽपि न काचित् क्षतिः । मुक्तौ अनावृत्तिः उक्ता, सा धर्मान्तरयोगेऽपि अस्तीति ॥ २१ ॥

श्रवण-मनन-निदिध्यासनं किं सर्वपुरुषसाधारणं न वा? इत्यत्राह,—

**अधिकारित्रैविध्यान्न नियमः ॥ २२ ॥**

त्रिविधास्तु अधिकारिणः मृदुमध्याधिमात्राः । अधिमात्रस्य श्रवणमात्रान्मुक्तिः, मध्यमस्य द्वाभ्यां, मन्दस्य त्रिभिः । न सर्वं सर्वस्य ॥ २२ ॥

पक्षान्तरमाह,—

**दार्ढ्यार्थमुत्तरेषाम् ॥ २३ ॥**

उत्तरेषां मन्दानां दार्ढ्यार्थं साधनत्रयम् उक्तम् । श्रुतिः अपि—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यश्च" [बृह० उप० २ अध्या० ४ ब्रा० ५ मन्त्रः] इति ॥२३॥

स्वस्तिकादीनां मध्ये किम् आसनम् अनुष्ठेयम्? इत्यत्र आह,—

**स्थिरसुखमासनमिति, न नियमः ॥ २४ ॥**

स्थैर्य्यार्थं सुखार्थञ्च आसनानुष्ठानं, तत् एव अस्तु व्यापकत्वात् इति ॥ २४ ॥

---

प्रतिबिम्बरूपेण दुःखसम्बन्धः इत्यतः प्रतिबिम्बरूपेण दुःखनिवृत्तिः यथार्थ एव पुरुषार्थः । स एव अन्तरायध्वंसः । तादृशस्य मोक्षः यथार्थ एव इति भावः ॥ २१ ॥

श्रवण-मनन-निदिध्यासनानि सर्वैरेव कार्य्याणि इति न नियमः, इति प्रतिपादयितुं सूत्रमवतारयति—श्रवणेति । सुगममन्यत् ॥ २२ ॥

एतदेव विशदयितुं सूत्रमवतारयति—पक्षान्तरमिति । उत्तरेषां—मन्दानां, मनन-निदिध्यासने इति शेषः ॥ २३ ॥

आसनमनियतं दृष्टार्थत्वात्, इति प्रतिपादयितुं सूत्रमवतारयति—स्वस्तिकादीनामिति ॥ २४ ॥

एकाग्रतया विषयचिन्तनं ध्यानम्? निर्विषयं वा मनः ध्यानम्? इत्यत्राह,—

**ध्यानं निर्विषयं मनः ॥ २५ ॥**

समाधौ अत्र ध्यानशब्दः इति ॥ २५ ॥

वृत्तिनिरोधतुल्यत्वे सुषुप्ति-समाध्योः कः विशेषः? इत्यत्र आह,—

**उभयथाऽप्यविशेषश्चेन्नैवम्, उपरागनिरोधात् विशेषः ॥ २६ ॥**

उपरागः विषयवासना, तन्निरोधः, समाधौ इति शेषः ॥ २६ ॥

निःसङ्गत्वात् आत्मनः उपरागाभावात् सर्वदा मुक्तिः, इत्यत्र आह,—

**निःसङ्गेऽप्युपरागः, अविवेकात् ॥ २७ ॥**

प्रकृतिपुरुषाविवेकात् प्रकृत्युपरागेण आत्मोपरागः इति अभिमानः ॥ २७ ॥

उपरागोऽपि न तात्त्विकः, इत्यत्राह,—

**जपास्फटिकयोरिव नोपरागः, किन्त्वभिमानः ॥ २८ ॥**

तयोः संसर्गात् उपरागः युक्तः। आत्मनस्तु असंसर्गात् न

---

समाधिस्वरूपं निरूपयितुं सूत्रमवतारयति—एकाग्रतयेति । अत्र—सूत्रे ॥ २५ ॥

सुषुप्तितः समाधेः विशेषं प्रतिपादयितुं सूत्रमवतारयति, वृत्तीति ।—वृत्ति-निरोधस्य उभयत्र तुल्यत्वेऽपि समाधौ उपरागाख्यविषयवासनानिरोधात् अस्ति विशेषः इति सूत्रतात्पर्य्यम् ॥ २६ ॥

आत्मनः स्वतो निःसङ्गत्वेऽपि आभिमानिकं सङ्गित्वमस्ति, इति प्रतिपादयितुं सूत्रमवतारयति—निःसङ्गत्वात् इति ॥ २७ ॥

कीदृक् उपरागः? इति दर्शयितुं सूत्रमवतारयति, उपराग इति ।—तयोः वि

उपरागः, किन्तु अभिमानः, आत्मनि अहङ्काराध्यासात् उपरागाध्यासः ॥ २८ ॥

कथम् अभिमाननाशः ? इत्यत्राह,—

**ध्यानधारणाऽभ्यासवैराग्यादिभिस्तन्निरोधः ॥ २९ ॥**

आदि-शब्दात् समाधिग्रहणम् ॥ २९ ॥

एकदेशिमतम् उक्त्वा स्वमतम् आह,—

**लय-विक्षेपयोर्व्यावृत्त्या इत्याचार्य्याः ॥ ३० ॥**

लयः सुषुप्तिः, विक्षेपः जागरितं, तयोः व्यावृत्त्या अहंमानविनाशः ॥ ३० ॥

गुहादिस्थानेषु केषु ध्यानादयः कर्त्तव्याः ? इत्यत्राह,—

**न स्थाननियमः, चित्तप्रसादात् ॥ ३१ ॥**

यत्र चित्तप्रसादो न भवति, तत्र न कर्त्तव्यमनुष्ठानम् ॥ ३१ ॥

अहङ्कारादीनाम् उपादानत्वम् अस्तु, कृतं प्रकृत्या, इत्यत्र आह,—

---

जपास्फटिकयोः संसर्गात् उपरागो युक्तः, आत्मनस्तु असंसर्गात् नोपरागः, किन्तु अभिमान एव इति सूत्रतात्पर्य्यम् ॥ २८ ॥

अभिमाननाशकारणं निरूपयितुं सूत्रमवतारयति—कथमिति। सौत्रमादिपदं व्याचष्टे—आदि-शब्दादिति ॥ २९ ॥

समाधिं विना नाहम् इत्यभिमानविनाशः सम्भवति, इति स्वसिद्धान्तम् उपपादयितुं सूत्रमवतारयति—एकदेशिमतमिति। इत्तौ जागरित-पदं स्वप्नस्यापि उपलक्षणम् ; तथा च, आत्मनि अवस्थात्रयाभिमाननिवृत्त्यैव अभिमाननिवृत्तिः, नान्यथा इति सूत्रतात्पर्य्यम ॥ ३० ॥

ध्यानादीनां स्थानं निरूपयितुं सूत्रमवतारयति, गुहादीति।—तथा च, यत्रैव चित्तप्रसादः तत्रैव ध्यानादिकमनुष्ठेयं, न नदीपुलिनादिनियमः ॥ ३१ ॥

**प्रकृतेराद्योपादानता, अन्येषां कार्य्यत्व-श्रुतेः ॥ ३२ ॥**

अहङ्कारादीनां कार्य्यत्वश्रुतेः तेषाम् अपि कारणं प्रकृतिः इति असकृत् आवेदितम् ॥ ३२ ॥

प्रकृति-पुरुषयोः पूर्व्वकालभावित्वाविशेषात् कः कारणम्? इत्यत्राह,—

**नित्यत्वेऽपि नात्मनः, योग्यत्वाभावात् ॥ ३३ ॥**

गुणवत्त्वसंसर्गित्वे कारणयोग्यता, सा च आत्मनि न अस्ति इति प्रकृतिः कारणम् ॥ ३३ ॥

आत्मनः चेतनत्वात् भोक्तृत्वादि युज्यते, न जड़स्य प्रधानस्य, इत्यत्राह,—

**श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥ ३४ ॥**

व्यक्तम् ॥ ३४ ॥

---

कार्य्यत्वश्रुतेरिति।—प्रकृतेः महान्, महतः अहङ्कारः इत्यादि प्रागुपदर्शितश्रुतेः इत्यर्थः ॥ ३२ ॥

प्रकृति-पुरुषयोः मिथः कार्य्यकारणरूपतां प्रतिषेद्धुं सूत्रमवतारयति—प्रकृति-पुरुषयोरिति। योग्यत्वं व्याचष्टे, गुणवत्त्वसंसर्गित्वे इति।—तथा च, गुणवत्त्वस्य संसर्गित्वस्य च आत्मनि अभावात् न तस्य प्रकृतिविकृतिकारणत्वं सम्भवति इति भावः ॥ ३३ ॥

आत्मनः स्वतः एव कर्त्तृत्वं भोक्तृत्वञ्च भवतु, किं प्रकृत्युपरागेण? इति मतं दूषयितुं सूत्रमवतारयति, आत्मन इति।—पुरुषकारणतायां ये ये पक्षाः सम्भाविताः, ते सर्वे श्रुतिविरुद्धाः, इत्यतः तदभ्युपगन्तॄणां कुतार्किकाद्यधमानाम् आत्मस्वरूपज्ञानं न भवति इति सूत्रतात्पर्य्यम्। कुतर्कयुक्तम् अपसदः,—दुष्टा सभा इत्यर्थः, तत्र आत्मज्ञानं न युक्तं श्रुतिविरोधात् इति अक्षरार्थः। अत एवोक्तमाचार्य्यैः,—"आत्मा कर्त्रादिरूपश्चेत् मा काङ्क्षीः तर्हि मुक्तताम्। न हि स्वभावो भावानां व्यावर्त्तेतौष्ण्यवत् रवेः ॥" इति ॥ ३४ ॥

तन्मात्राणां महाभूतकार्य्यत्वदर्शनात् कथं प्रकृतेः कारणत्वम् ? इत्यत्राह,—

**पारम्पर्य्येऽपि प्रधानानुवृत्तिः, अणुवत् ॥ ३५ ॥**

यथा घटादेः मृत्पिण्डकार्य्यत्वेऽपि पारम्पर्य्येण परमाणूपादानत्वं, तथा अत्रापीति ॥ ३५ ॥

प्रकृतिः व्यापिका न वा ? इत्यत्राह,—

**सर्वत्र कार्य्यदर्शनाद्विभुत्वम् ॥ ३६ ॥**

स्पष्टम् ॥ ३६ ॥

विपक्षे दोषमाह,—

**गतियोगेऽप्याद्यकारणताहानिः, अणुवत् ॥ ३७ ॥**

गतिः क्रिया, तद्योगः यस्य अस्ति तत् अव्यापकम्। प्रकृतेः गतिमत्त्वे कार्य्यत्वं परमाणुवत्, न तु आद्यकारणता ॥ ३७ ॥

प्रकृतेः उपादानत्वे द्रव्यस्य उपादानत्वात् तदन्तर्भावः स्यात्, इत्यत्र आह,—

**प्रसिद्धाधिक्यं प्रधानस्य, न नियमः ॥ ३८ ॥**

---

प्रकृतेरेव मूलकारणत्वं व्यवस्थापयितुं सूत्रमवतारयति, तन्मात्राणामिति।—महाभूतकार्य्यत्वेति—महाभूतानि—आकाशादीनि, कार्य्याणि येषां तद्भावः महाभूतकार्य्यत्वं, तस्य दर्शनात्—अनुमानात् इत्यर्थः। तत्राऽत्रापि—तत्रैव प्रधानेऽपि इत्यर्थः ॥ ३५ ॥

प्रधानस्य व्यापकत्वं व्यवस्थापयितुं सूत्रमवतारयति, प्रकृतिरिति।—अन्यथाऽनुपपत्त्या सर्वत्र विकारदर्शनात् प्रधानस्य विभुत्वम् इति सूत्रार्थः ॥ ३६ ॥

गतियोगे इति।—ननु परिच्छिन्नत्वपक्षेऽपि यत्र कार्य्यमुत्पद्यते, तत्रैव प्रकृतिः गच्छति इति वक्तव्यम्, एवं सति प्रकृतेः विभुत्वं न उपपद्यते, तथा च, गतिप्रयोजकाविभुत्वयोगे प्रकृतेः अणूनामिव कार्य्यत्वं स्यात् इति सूत्रतात्पर्य्यम्। अणूनाञ्च कार्य्यत्वे पराक्रान्तमन्यत्र इति इह विरम्यते ॥ ३७ ॥

उपादानत्वं पृथिव्यादिनवद्रव्यान्यतमत्वेन व्याप्तम्; तदभावात् न प्रकृतेरुपादानत्वसम्भवः, इति शङ्कां निराकर्त्तुं सूत्रमवतारयति—प्रकृतेरिति। प्रसिद्धेति।—

प्रसिद्धद्रव्येभ्यः अधिकं प्रधानम्, अनियतत्वात् पदार्थस्य । उपादानकारणता च न समवायिकारणता, किन्तु प्रधानता, वैशेषिकसमवायस्य अनभ्युपगमात् ॥ ३८ ॥

प्रकृतिः किं गुणात्मिका ? गुणधर्मिणी वा ? अत्राह,—

**सत्त्वादीनामतद्धर्मत्वं, तद्रूपत्वात् ॥ ३९ ॥**

तादात्म्यात् ॥ ३९ ॥

उपभोगार्थं प्रवृत्तिः दृष्टा, न तु जड़स्य उपभोगः, इत्यत्र आह,—

**अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्य, उष्ट्रकुङ्कुमवहनवत् ॥ ४० ॥**

कृतव्याख्यानम् एतत् तृतीये अध्याये "प्रधान" इत्यादिसूत्रे ॥ ४० ॥

प्रकृतेः एकत्वात् कथं सृष्टिवैचित्र्यम् ? इत्यत्राह,—

**कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ॥ ४१ ॥**

उपादानाभेदेऽपि निमित्तभेदेन भेदः, यथा सुवर्णाभेदेऽपि मुकुटग्रैवेयकादिभेदः ॥ ४१ ॥

---

प्रसिद्धेभ्यः नवद्रव्येभ्यः प्रधानस्य आधिक्यम्—अतिरिक्तद्रव्यत्वम् इति नवैव द्रव्याणि इति नियमः नाङ्गीकार्य्य इत्यर्थः। स्वमते उपादानकारणतां निरूपयति, उपादानकारणतेति ।—प्रधानता—अव्यक्तकार्य्यावस्था इत्यर्थः ॥ ३८ ॥

प्रकृतेः गुणात्मकत्वम् ? गुणधर्मत्वं वा ? इति निरूपयितुं सूत्रमवतारयति, प्रकृतिरिति ।—तथा च, सत्त्वादयः न प्रकृतिधर्माः, किन्तु सत्त्वरजस्तमोरूपा एव प्रकृतिः इति सूत्रतात्पर्य्यम ॥ ३९ ॥

प्रकृतेः उपभोगाभावेऽपि परार्थम एव सृष्टौ प्रवृत्तिः इति तृतीयेऽध्याये उक्तमपि अर्थं दृढ़यितुं सूत्रमवतारयति—उपभोगार्थमिति ॥ ४० ॥

प्रकृतेरेकत्वेऽपि सृष्टिवैचित्र्यं प्रतिपादयितुं सूत्रमवतारयति—प्रकृतेरिति। उपा-

कथं सृष्टिप्रलयौ ? इत्यत्राह,—

**साम्यवैषम्याभ्यां कार्य्यद्वयम् ॥ ४२ ॥**

साम्यात् प्रकृतेः सदृशपरिणामात् प्रलयः। वैषम्यात् प्रकृतेः महदादिभावेन विसदृशपरिणामात् सृष्टिः ॥ ४२ ॥

प्रलयमाह,—

**विमुक्तबोधान्न सृष्टिः प्रधानस्य, लोकवत् ॥ ४३ ॥**

यथा लोकः बन्धमोक्षार्थं यतते, मुक्तबन्धश्च कृतार्थत्वात् उदास्ते, तथा प्रधानमपि ॥ ४३ ॥

व्यापकत्वात् प्रकृति-पुरुषयोः सम्बन्धः अस्ति एव, इति मोक्षे अपि भोगप्रसङ्गः, इत्यत्राह,—

**नान्योपसर्पणेऽपि मुक्तोपभोगः, निमित्ताभावात् ॥ ४४ ॥**

भवेत् एवं, यदि अन्यस्य प्रधानस्य उपसर्पणमात्रम् उपभोगनिमित्तं स्यात्। न चैवं, किन्तु उपभोग्यनिमित्तः उपभोगः ; स च मोक्षे नास्तीति ॥ ४४ ॥

दानेति।—उपादानस्य प्रकृतेरभेदेऽपि निमित्तभेदेन सृज्यमानप्राणिसुख-दुःखाद्यनुकूलकर्मवैचित्र्येण इत्यर्थः ॥ ४१ ॥

सृष्टिप्रलययोः कारणे निरूपयितुं सूत्रमवतारयति—कथमिति ॥ ४२ ॥

विमुक्तेति।—विमुक्तबोधात्—विमुक्तोऽयमिति बोधादित्यर्थः ; मुक्तं प्रति प्रधानस्य न सृष्टिप्रवृत्तिः। लोकवदिति।—लोके हि कश्चित् कदाचित् बन्धमोक्षार्थं यतते, जाते च मोक्षे उदास्ते इति दृष्टं, तथा प्रधानम् इति ज्ञेयम् ॥४३॥

मोक्षेऽपि भोगप्रसङ्गं निराकर्त्तुं सूत्रमुत्थापयति—व्यापकत्वादिति। उपभोग्य-निमित्त इति—उपभोग्यानि—स्वकर्मोपात्तानि सुखदुःखानि इत्यर्थः, तानि निमित्तानि यस्य स तथा ॥ ४४ ॥

एकः एव आत्मा। तथा च,—

"एकमेव परं ब्रह्म सत्यमन्यद्विकल्पितम्।
को मोहः? कस्तदा शोकः? एकत्वमनुपश्यतः" ॥

एतत् अपाकरोति,—

**पुरुषबहुत्वं व्यवस्थातः ॥ ४५ ॥**

एतत् प्रथमाध्याये जन्मादिसूत्रे वर्णितम्। तथा च,—

"अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः" ॥ ४५ ॥

उपाधिभेदात् नानात्वं भविष्यति, इत्यत्राह,—

**उपाधिश्चेत्तत्सिद्धौ पुनर्द्वैतम् ॥ ४६ ॥**

तत्सिद्धौ भेदसिद्धौ। उपाधिमिथ्यात्वे कुतः भेदसिद्धिः? सत्यत्वे तु तेन एव पुनः द्वैतम् ॥ ४६ ॥

दूषणान्तरमाह,—

**द्वाभ्यामपि प्रमाणविरोधः ॥ ४७ ॥**

सत्यासत्याभ्याम्। सत्यत्वे अद्वैतसिद्धान्तहानिः। असत्यत्वे कुतः नानात्वव्यवस्थाः? ॥ ४७ ॥

---

प्रसङ्गादद्वैतवादिनां मतं निराकर्तुं सूत्रमुत्थापयति—एक एवेति। एतत्—पुरुषबहुत्वम् ॥ ४५ ॥

उपाधिभेदादेव पुरुषनानात्वव्यवहारः इति मतं निराकर्तुं सूत्रमुत्थापयति, उपाधिभेदादिति।—उपाधिश्चेत् स्वीक्रियते, तर्हि उपाधिसिद्ध्या एव पुनरद्वैतभङ्गः इति सूत्राशयः ॥ ४६ ॥

औपाधिकभेदपक्षे दूषणान्तरमवतारयति—दूषणान्तरमिति। सत्यासत्याभ्याम् इत्यस्य—सत्यत्वासत्यत्वाभ्याम् इत्यर्थो ज्ञेयः; तथा च,उपाधेः सत्यत्वे अद्वैतबोधकप्रमाणविरोधः, उपाधेः असत्यत्वे तु तस्य भेदाव्यवस्थापकत्वेन भेदग्राहिप्रत्यक्षादिविरोधः ॥ ४७ ॥

न अद्वैतश्रुतिविरोधः द्वैतहानिः च, इत्यत्राह,—

**द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरञ्च, साधकाभावात् ॥ ४८ ॥**

अद्वैतश्रुतेः सामान्यपरत्वात् प्रशंसापरत्वात् वा अन्यार्थत्वे न विरोधः । उपाधिसत्यत्वे च न द्वैतहानिः, इति न अस्ति विरोधः; तस्मात् न पूर्वम् आत्मैकत्वं, न उत्तरञ्च श्रुतिविरोधः । अद्वैतत्वे प्रमाणासत्त्वात् न तत्सिद्धिः इति भिन्नः अस्ति इत्यर्थः ॥ ४८ ॥

न प्रमाणाभावः, स्वप्रकाशम् एव प्रमाणम् अस्ति, इत्यत्र आह,—

**प्रकाशतस्तत्सिद्धौ कर्मकर्त्तृविरोधः ॥ ४९ ॥**

व्यक्तम् ॥ ४९ ॥

दूषणान्तरमाह,—

**जड़व्यावृत्तौ जड़ं प्रकाशयति चिद्रूपः ॥ ५० ॥**

जड़ात् अन्यः चिद्रूपः जड़ं प्रकाशयति; जड़व्यावृत्तत्वेन प्रकाशरूपत्वं, न तु प्रकाशधर्मत्वम् उक्तम्; अत एव "स एष नेति नेति" इति उच्यते, न तु विधिमुखतया इति ।

स्वमते तु नायं दोषः इति दर्शयितुं सूत्रमवतारयति—नाद्वैतेति । न विरोधः,—न भेदग्राहिप्रत्यक्षप्रमाणविरोधः । भिन्नः अस्ति इति—जीवानां नित्यः भेदः अस्तीति भावः ॥ ४८ ॥

आत्मैकत्वे स्वप्रकाशं ज्ञानमेव प्रमाणम् इति मतं दूषयितुं सूत्रमवतारयति, नेति ।—अद्वैतं कथं सिध्येत ? अनात्मना ? आत्मना वा ? तत्र नाद्यः, जड़त्वात्; अन्ते तु प्रकाश्यत्व प्रकाशकत्वयोः विरोधः इति सूत्रतात्पर्य्यम ॥ ४९ ॥

एतदेव मतं दूषयितुं सूत्रान्तरमवतारयति—दूषणान्तरमिति । जड़व्यावृत्तत्वेन इति ।—तथा च, आत्मनः प्रकाशरूपत्वं जड़भिन्नत्वमेव, न तु प्रकाशरूपः कश्चन धर्मः, आत्मनि अङ्गीक्रियते इति भावः । अत एव—आत्मनो जड़व्यावृत्तत्वरूपप्रकाशादेव ।

अथ अलौकिकप्रकाशरूपत्वम्; तत्र व्याप्तिग्रहणाभावात् दृष्टान्ताभावः। अथ योगिगम्यं तत्; असम्प्रज्ञातयोगिनः ज्ञानचेष्टाभावात् लिङ्गं न अस्ति। सम्प्रज्ञातयोगिनः च वचन-चेष्टादि लिङ्गं, तेन च लौकिकः एव अर्थः अनुमीयते; न च सः अपि अनुभवरूपं चैतन्यं प्रतिपादयितुं शक्नोति। तथा च,—

"इक्षुक्षीरगुड़ादीनां माधुर्य्यस्यान्तरं महत्।
तथाऽपि न तदाख्यातुं सरस्वत्याऽपि शक्यते"॥

एवम् अचेतनव्यावृत्तत्वात् चेतनः इति उच्यते, न तु चितिसमवायः चैतन्यरूपत्वं वा, असम्प्रज्ञातावस्थायां निरुद्ध-वृत्तित्वेन अपि "अलौकिकचैतन्यम्" इति व्यवहारान्यथा-सिद्धेः। सम्प्रज्ञातावस्थायां तु वृत्तिज्ञानेन एव "चैतन्यम्" इति व्यपदेशः। एवं दुःखनिवृत्तौ आनन्दरूपत्वम् इति प्रयोगः। यदि भावात्मकम् आनन्दरूपत्वं, तत् किं सुखमात्रे प्रयोगः? तथा सत्यज्ञातस्य सुखस्य अदर्शनात् सुखं, तज्ज्ञानं, ज्ञाता च इति कुतः अद्वैतम्? अथ सुखविशेषे आनन्दव्यपदेशः। सुखस्य चैतन्यरूपत्व इति न दृष्टम्, अविवेचकानाम् एव एतत्। विवेचकास्तु एवं मन्यन्ते, दृष्टेन एव व्यावृत्तिरूप-त्वेन उपपत्तौ अदृष्टालौकिककल्पना गुर्वी इति। यदि चैतन्यं न स्यात्, वस्तुसंवेदनम् एव न स्यात्। मा एवम्; यथा

न तु चित्सुखतया इति—इदमित्थम् इत्यादिरूपेण इत्यर्थः। तत्र—आत्मनः अलौकिक-प्रकाशरूपत्वे इत्यर्थः। व्याप्तिग्रहणाभावात् इत्यत्र अलौकिकतया इति भावः। अलौकिकप्रकाशरूपतायां योगिगम्यत्वं निराकर्तुं विचारमुत्थापयति—अथेति। सम्प्रज्ञातावस्थायां—सबीजसमाधौ इत्यर्थः। वृत्तिज्ञानेन एव—विषयाकारान्तःकरण-परिणामेन एव। एवम् आत्मनः आनन्दरूपत्वमपि न सुखरूपत्वं, किन्तु दुःखनिवृत्त्या औपचारिकम् इति व्यवस्थापयितुं विचारमुत्थापयति—एवमिति। अविवेचकानां—मूढ़ानाम्। एतत्—सुखचैतन्ययोः एकत्वम् इत्यर्थः। आत्मनः प्रकाशरूपत्वाभावे जगदान्ध्यप्रसङ्गः इति मतं निराकर्तुं विचारमुत्थापयति—यदीति। एकस्यैव

अलाबुवेणुतन्तूनां तथाविधसंयोगविशेषः शब्दकारणं, न तु त्रयाणां संयोगात् अतिरिक्तं किञ्चिदस्ति, तथा पाञ्चभौतिकत्वाविशेषेऽपि जन्तुरूपेण परिणतानां पिण्डानां तथाविधात् सम्बन्धात् चैतन्यम् इति। प्रकाशत्वे च आत्मनोऽपि अंशत्वेन जड़त्वम् इति ॥ ५० ॥

एवञ्च स्वप्रकाशश्रुतिः बाधिता स्यात्, इत्यताह,—

## न श्रुतिविरोधो रागिणां वैराग्याय, तत्सिद्धेः ॥ ५१ ॥

जड़स्य त्रिगुणात्मकत्वेन रागहेतुत्वात् प्रमाणादयश्च त्रिगुणत्वेन हेयाः इति। रागोच्छित्तिश्च कर्त्तव्या इति। तत्सिद्धेः स्वप्रकाशश्रुतेः अन्यथासिद्धेः ॥ ५१ ॥

जगतः मिथ्यात्वात् कथम् अन्यथासिद्धिः? इत्यताह,—

## जगत्सत्यत्वम् अदुष्टकारणजन्यत्वाद्बाधकाभावात् ॥ ५२ ॥

दुष्टकारणजन्यं यथा पीतशङ्खज्ञानम्। बाधकञ्च "नेदं रजतम्" इति ज्ञानम्; न च इदं तथा, प्रकृत्यादीनाम् अदुष्टत्वात्। "नेदं जगत्" इति प्रत्ययाभावात् बाधकञ्च नास्ति। सङ्क्षेपात् जगत् उच्यते—ऊर्द्धं भूर्भुवः स्वर्महर्जनस्तपः सत्यम् इति। अधः महातल-रसातल-तलातल-पाताल-सुतल-वितला-

---

आत्मनः प्रकाशत्व प्रकाशरूपत्वं चेदङ्गीक्रियते, तदा प्रकाशांशे तस्य जड़त्वम् आपतेदेव इत्याह—प्रकाशत्वे च इति ॥ ५० ॥

नन्वेवम् आत्मनः स्वप्रकाशत्वबोधिका श्रुतिः बाध्येत, इति शङ्कां निराकर्तुं सूत्रमवतारयति—एवञ्चेति ॥ ५१ ॥

जगतो मिथ्यात्वमपि प्रमाणविरुद्धम् इति व्यवस्थापयितुं सूत्रमवतारयति—जगत इति। न चेदं तथेति—इदं जगद्विषयकं ज्ञानं जगद्वा न दुष्टकारणजन्यम् इत्यर्थः। दुष्टकारणजन्यं हि पीतः शङ्खः इत्यादि ज्ञानं शङ्खः न पीतः इत्यादि

त्ताः इति। मध्ये जम्बुद्वीपः; तन्मध्ये सुमेरुः; तत्पूर्वादि-चतुर्दिक्षु मन्दर-गन्धमादन-विपुल-सुपार्श्वनामानः विष्कम्भ-पर्वताः। मेरुदक्षिणे भारतवर्ष-हिमालयपर्वत-किम्पुरुषवर्ष-हेम-कूटपर्वत-हरिवर्ष-निषधपर्वताः। मेरोः उत्तरे कुरुवर्ष-शृङ्गि-पर्वत-हिरण्यकवर्ष-श्वेतपर्वत-रम्यकवर्ष-नीलपर्वताः। मेरुपूर्वे भद्राश्ववर्ष-माल्यवत्पर्वतः। मेरुपश्चिमे केतुमालवर्ष-गन्धमादन-पर्वतः। मेरोः अधः इलावृतवर्षः। लक्षयोजनः जम्बुद्वीपः। तद्वेष्टनेन तत्तुल्यः लवणसमुद्रः। तद्वेष्टनेन तद्द्विगुणः शाक-द्वीपः। तद्वेष्टनेन तत्तुल्यः इक्षुरससमुद्रः। तद्वेष्टनेन तद्-द्विगुणः कुशद्वीपः। तद्वेष्टनेन तत्तुल्यः सुरासमुद्रः। तद्वेष्टनेन तद्द्विगुणः क्रौञ्चद्वीपः। तद्वेष्टनेन तत्तुल्यः घृतसमुद्रः। तद्वेष्टनेन तद्द्विगुणः शाल्मलिद्वीपः। तद्वेष्टनेन तत्तुल्यः दधिसमुद्रः। तद्वेष्टनेन तद्द्विगुणः प्लक्षद्वीपः। तद्वेष्टनेन तत्तुल्यः दुग्धसमुद्रः। तद्वेष्टनेन तद्द्विगुणः पुष्करद्वीपः। तद्वेष्टनेन तत्तुल्यः स्वादूदकसमुद्रः। लोकालोकपर्वतवेष्टनेन ब्रह्माण्डकटाहेन सर्वतः परिवृतं जगदिति ॥ ५२ ॥

पूर्वोक्तमपि शिष्यहिततया पुनः प्रतिपादयति,—

**प्रकारान्तरासम्भवात् सदुत्पत्तिः ॥ ५३ ॥**

प्रकारान्तरं च पूर्वम् एव दूषितम् ॥ ५३ ॥

"अहं करोमि" इति प्रत्ययात् किम् अहङ्कारः कर्त्ता? अथ अहङ्कारशब्देन आत्मा उच्यते, सः एव कर्त्ता? इत्यत्राह,—

**अहङ्कारः कर्त्ता, न पुरुषः ॥ ५४ ॥**

---

ज्ञानबाध्यं लोके दृष्टम्; प्रपञ्चज्ञानस्य तु दुष्टकारणजन्यत्वाभावेन न बाध्यत्वम् इति सूत्रतात्पर्य्यम् ॥ ५२ ॥

उक्तमपि सत्कार्य्यसिद्धान्तं दृढतरप्रत्ययोत्पादनाय शिष्याणां पुनः स्मारयितुं सूत्रमुल्लापयति—पूर्वोक्तमपि इति ॥ ५३ ॥

पुरुषस्य अपरिणामित्वात्। कृति-चैतन्ययोः सामानाधिकरण्यं च "वृक्षः तिष्ठति" इत्यादौ व्यभिचरति ॥ ५४ ॥

एककर्मक्षयेऽपि यावद्देहभावित्वात् कर्मणः अपरापरकर्मोत्पत्तौ अनिर्मोक्षः, इत्यत्राह,—

**चिदवसाना भुक्तिः, तत्कर्मार्जितत्वात् ॥ ५५ ॥**

अविवेकात् कर्मार्जनं, तेन च भुक्तिः इति। चिदवसाना—आत्मज्ञानावसाना। विवेकोत्पत्तौ क्व अपरकर्मार्जनम्? तदभावात् क्व उपभोगः? कृतकर्मणः ज्ञानात् एव नाशः। तथा च,—

"यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन!।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा"॥इति॥५५॥

सातिशयत्वात् चन्द्रादिलोकप्राप्तिः एव पुरुषार्थः भविष्यति, इत्यत्राह,—

**चन्द्रादिलोकेऽप्यावृत्तिः निमित्तसम्भवात् ॥ ५६ ॥**

आदिशब्दात् ब्रह्मलोकादयो ग्राह्याः ॥ ५६ ॥

---

अहङ्कारस्यैव कर्तृत्वं नात्मनः इति प्रतिपादयितुं सूत्रमाह—अहङ्कार इति। कृति-चैतन्ययोः सामानाधिकरण्यं श्रूयमाणमपि न सर्वत्र अव्यभिचारि इति दर्शयति—कृतिचैतन्ययोरिति ॥ ५४ ॥

विवेकख्यात्युत्तरमपि कर्मोत्पत्त्या पुनर्बन्धप्रसङ्गं निराकर्तुं सूत्रमुत्थापयति—एकेति। चित—देहादिज्ञानम्, अवसानम—अवधिः यस्याः; तथा च, यावत् देहाभिमानः तावत् भोगः इत्यर्थः। तदिति—प्रारब्धं कर्म उच्यते, बुद्धिस्थत्वात्। "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" [छान्दो॰ उप॰ ६ अध्या॰ १४ खण्ड॰ २ मन्त्रः] इत्यादि श्रुतेः ज्ञानिनोऽपि प्रारब्धकर्मफलभोगः आवश्यकः इति भावः ॥ ५५ ॥

चन्द्रादिलोकप्राप्तेः अपरमपुरुषार्थत्वं व्यवस्थापयितुं सूत्रमवतारयति—सातिशयत्वादिति। निमित्तम्—अविवेकादि; तथा च, अनुत्पन्नविवेकख्यातेः ब्रह्मलोकादपि पुनरावृत्तिश्रवणात् न तत्र परमपुरुषार्थत्वं सम्भवति इति भावः ॥ ५६ ॥

गुरूपसन्नस्य शब्दश्रवणात् एव मोक्षः भविष्यति इति किं मननादिना ? इत्यत्राह,—

**लोकस्य नोपदेशात्तत्सिद्धिः, पूर्ववत् ॥ ५७ ॥**

पूर्वोक्तम् एव उक्तम्। मन्दानां न श्रवणमात्रात् मुक्तिः, किन्तु मननादिना। अनेन यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयः उपलक्षणीयाः ॥ ५७ ॥

कथं तर्हि उपदेशमात्रात् मुक्तिः श्रूयते ? इत्यत्राह,—

**पारम्पर्य्येण तत्सिद्धौ विमुक्तिश्रुतिः ॥ ५८ ॥**

प्रथमभावित्वात् श्रवणस्य पारम्पर्य्येण कारणत्वसिद्धौ विमुक्तिश्रुतिः ॥ ५८ ॥

यथा च व्यापकत्वात् प्रकृतेः जगत्कारणत्वम्, एवं व्यापकत्वात् आत्मनः सर्वदेशे उपभोगप्रसङ्गः, इत्यत्राह,—

**गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाललाभः, व्योमवत् ॥ ५९ ॥**

यथा घटाद्युपाधियोगात् घटे गच्छति "घटाकाशं गच्छति" इति ज्ञानं, तथा देहावच्छेदेन तद्गत्या आत्मगतिः इति। कर्मवशात् यत्र देशे उपभोगः, तत्र देहगमनात् आत्मनः भोगलाभः। यदि आत्मा व्यापकः चिद्रूपः, सर्वदा सर्वत्र सर्वार्थेषु समकालं ज्ञानं प्रसज्येत, न च एवं दृश्यते; तत्र। भवेत्

श्रवणानन्तरं मननादेरुपयोगं दर्शयितुं सूत्रमवतारयति—गुरूपसन्नस्येति। लोकस्य—मन्दाधिकारिणः, उपदेशात—श्रवणमात्रात् इत्यर्थः, न मुक्तिः, किन्तु पूर्वं यथोक्तं तथा एतत् इति बोध्यम्। मनन-निदिध्यासने अपेक्षिते इत्यर्थः॥ ५७॥

तर्हि श्रुत्वा मुच्यते इति कथमुपपद्यते ? तदुपपत्तये पारम्पर्य्येण इति सूत्रमवतारयति—कथमिति। तत्सिद्धौ—श्रवणमात्रसिद्धौ, या इयं विमुक्तिश्रुतिः,सा पारम्पर्य्येण उत्तमाधिकारिविषया वा इत्यवसेयम्॥ ५८॥

प्रकृतिवत् आत्मनोऽपि व्यापकतया सर्वदेशसम्बन्धेन सर्वत्रैव उपभोगप्रसङ्गः

एवं, यदि आत्मा व्यापकस्वरूपेण वृत्तिज्ञानं जनयति, न च एवं, किन्तु देहादिपरिच्छिन्नः एव। यथा सूर्य्यः प्रकाशस्वभावोऽपि मेरोः दक्षिणस्थः न उत्तरभागं प्रकाशयति, उत्तरस्थः न दक्षिणभागम्, अव्यापकत्वात्। यदा तु ज्ञानादिना दग्धकर्माशयत्वेन नष्टदेहादिसङ्घातः नीरजस्तमस्को व्यापको भवति, न तदा वृत्तिज्ञानं जनयति अविकारित्वात्, किन्तु स्वयमेव जगत्प्रकाशस्वरूपः। यथा च आकाशं व्यापकं प्रादेशिकधूमादिसम्बन्धेन न मलिनं भवति, किन्तु घटावच्छिन्नं सत् घटाद्युदरवर्त्ति सर्वं मलिनम् इति अनुमन्यते। तत्र अपि न आकाशं मलिनं, तस्य लेपाभावात्, किन्तु अविवेचकानां मिथ्याऽभिमानमात्रं, घटभङ्गे तथा अदर्शनात्। तथा आत्मा व्यापकः, न अस्य धर्मादिसम्बन्धः, नापि ज्ञानं, किन्तु शरीरावच्छेदेन मरुदग्नियोगवत् जीवसम्बन्धेन मनोयोगात् जीवात्मा इति उच्यते। मनसा अविनाभूता प्रकृतिः इति प्राकृतधर्माधर्मज्ञानाज्ञानसुखदुःखेच्छाद्वेषाहङ्कारेन्द्रियतद्विषयजन्मादिमान् इव लक्ष्यते। सात्त्विकांशेन प्रकृतेः स्वच्छत्वात् तत्प्रतिविम्बितः आत्मा प्रकृतिकर्त्तृत्वादिकम् आत्मनि अभिमन्यते। मिथ्याऽभिमानोऽपि प्रकृतिप्रतिविम्बिते आत्मनि, न तु आत्मनि, यथा निष्कम्पोऽपि चन्द्रः जलप्रतिविम्बितः जलकम्पात् कम्पते इति मिथ्याप्रत्ययः; यथा वा मुखं निर्मलमपि मलिनदर्पणे प्रतिविम्बितं मलिनम् इति अभिमन्यते।

---

इति शङ्कां निराकर्त्तुं सूत्रमवतारयति—यथा चेति। सूत्रार्थस्तु—व्यापकत्वेऽपि आत्मनः उपाधियोगात्—देहादियोगात् भोगदेश-कालयोगः,—गच्छति घटादौ यथा व्योम गच्छतीव, तथा आत्माऽपि देहादियोगात् गच्छतीवेति विशिष्टदेशकालसम्बन्धो उपभोगभाक् भवति, कुतः? गतिश्रुतेः,—"ऊर्द्ध्वं गच्छन्ति सत्त्वस्थाः" इत्यादेः इत्यर्थः। इत्तौ जीवसम्बन्धेन—बुद्धिवृत्तौ प्रतिविम्बितचिदाभासरूपेण इत्यर्थः, तथा

विवेचकास्तु कैवल्यदर्शिनः आत्मनोऽपरिणामात् असङ्गत्वाच्च कर्त्तृत्वादिकं मिथ्या इति पश्यन्ति। यदा तु ध्यानपरिपाकवशात् वासनाह्रासक्रमेण मनोलयात् वासनानाशात् देहभङ्गे अन्यदेहानुत्पादः, तदा जीवात्मनोऽपि परमात्मना सह एकत्वेन व्यापकत्वात् क्व धर्माधर्मयोगः? कर्त्तृत्वादिकं वा? किन्तु अवाग्गोचरत्वे अपरोक्षबोधानन्दरूपत्वम् इति भण्यते, अन्यथा प्रतिपादयितुम् अशक्यत्वात् इति॥ ५९॥

देहोत्पत्तेः पूर्वं निराश्रयत्वात् अधिष्ठानासम्भवात् उत्पत्त्यनन्तरम् आत्मा अधिष्ठानम, इत्यत्राह,—

**अनधिष्ठितस्य पूतिभावयोगान्न तत्सिद्धिः॥ ६०॥**

व्यापकस्य नित्यस्य पूर्वपश्चाद्भावायोगात् देहोत्पत्तिसमकालमेव अधिष्ठानात् न तत्सिद्धिः न अनधिष्ठानसिद्धिः, ततश्च न पूतिभावः इति॥ ६०॥

अदृष्टवशात् एव पूतिभावो न भविष्यति, इत्यत्राह,—

**अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवात्, जलादिवदङ्कुरे॥ ६१॥**

निराश्रयस्य अदृष्टस्य असामर्थ्यात् देहासम्बद्धत्वेन न कार्य्यंकरणं, यथा जलस्य न अङ्कुरजनकत्वम्। आदिशब्दात् अग्नग्रहणम्॥ ६१॥

---

च, आत्मनां जीवत्वम् औपाधिकम् इति ज्ञेयम्। आत्मनः कर्तृत्वादिकम् आभिमानिकमेव इत्यत आह—सात्त्विकांशेन इति। ॥ ५९॥

देहादौ आत्माधिष्ठानमेव उत्पत्तिः, न तु उत्पत्त्यनन्तरम् आत्माधिष्ठानम्, इति व्यवस्थापयितुं सूत्रमवतारयति—देहोत्पत्तेः इति। ततश्च—आत्माधिष्ठानादेव इत्यर्थः॥ ६०॥

आत्माधिष्ठानेनैव पूतिभावाभावः, नादृष्टवशात् इति व्यवस्थापयितुं सूत्रमवतारयति—अदृष्टवशादेवेति। असम्बद्धस्य—बीजानाश्रितस्य इति भावः॥ ६१॥

किमाश्रया धर्मादयः कार्य्यजनकाः? इत्यत्राह,—

**निर्गुणत्वात् तदसम्भवादहङ्कारधर्मा ह्येते ॥ ६२ ॥**

निर्गुणत्वात् आत्मनः तद्धर्मत्वासम्भवात् एते धर्मादयः अहङ्कारधर्माः। कार्य्यकारणयोः अभेदात् बुद्धिधर्मा एव अहङ्कारधर्माः इत्युक्तम् ॥ ६२ ॥

किमात्मनः स्वरूपेण जीवत्वम्? अन्यथा वा? इत्यत्राह,—

**विशिष्टस्य जीवत्वम्, अन्वयव्यतिरेकात् ॥ ६३ ॥**

स्वरूपेण जीवत्वे कर्तृत्वात् भोक्तृत्वात् कौटस्थ्यहानिः, अन्वयव्यतिरेकाच्च। देहावच्छेदेन वाय्वग्निसंयोगात् इन्द्रियसंयोगेन विशिष्टस्य जीवत्वम् ॥ ६३ ॥

ऐश्वर्य्यशालित्वात् जीवात्मा एव ईश्वरः, स एव जगत् निर्मास्यति; तथा च—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" ॥ इत्यत्राह,—

**अहङ्कारकर्त्त्रधीना कार्य्यसिद्धिः, नेश्वराधीना, प्रमाणाभावात् ॥ ६४ ॥**

प्रमाणाभावात् इति जगदुपादानज्ञानाभावात्; अव्यापकत्वात् अनेकेश्वरकल्पनाऽपि स्यात् ॥ ६४ ॥

---

धर्मादीनाम् आश्रयं निरूपयितुं सूत्रमवतारयति—किमाश्रया इति। निर्गुणत्वात् आत्मनः, तदसम्भवात्—तस्मिन् असम्भवात्, एते—धर्मादयः, अहङ्कारधर्माः,—कार्य्यकारणयोरभेदात् बुद्धिधर्मा एव अहङ्कारधर्मत्वेन सूत्रे निर्दिष्टा इति ज्ञेयम् ॥ ६२ ॥

आत्मनाम् औपाधिकमेव जीवत्वम् इति व्यवस्थापयितुं सूत्रमवतारयति, किमात्मनः इति।—स्वरूपेण—उपाध्यनुपहिततया इत्यर्थः ॥ ६३ ॥

जीवव्यतिरिक्तस्य ईश्वरस्य जगत्कर्तृत्वम् इति मतं निराकर्त्तुं सूत्रमवतारयति, ऐश्वर्य्येति।—तथा च, जगत्सृष्टौ न जीवः, नापि ईश्वरः कारणं, प्रकृतिरेव महदाद्याकारेण जगद्रूपेण परिणमते इति सूत्रतात्पर्य्यम् ॥ ६४ ॥

कार्य्यत्वात् चेतनकार्य्यत्वम् अपि अनैकान्तिकम्, इत्याह,—

**अदृष्टोद्भूतिवत् समानत्वम् ॥ ६५ ॥**

अदृष्टोद्भूतिवत् अकर्तृकत्वात्। तस्यापि सकर्तृकत्वे अदृष्टोद्भूत्यन्तरस्य सहकारित्वं, तस्याः तस्याः अपि अन्यस्याः इति अनवस्था। सादित्वाच्च संसारस्य नानादितापरिहारः ॥ ६५ ॥

अहङ्कारस्य कारणत्वे किं महान्तं प्रति अपि कारणत्वम्? इत्यत्राह,—

**महतोऽन्यत् ॥ ६६ ॥**

न स्वस्य कारणं कार्य्यं भवति ॥ ६६ ॥

स्वीया प्रकृतिः, स्वामी पुरुषः, तयोः सम्बन्धः किं स्वाभाविकः? अन्यनिमित्तको वा? स्वाभाविकत्वे स्वभावस्य अनपायात् अनिर्मोक्षः, इत्यत्राह,—

**कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादिः, वीजाङ्कुरवत् ॥ ६७ ॥**

प्रकृतेः इति उपलक्षणं, पुरुषस्य इत्यपि द्रष्टव्यम्। कर्मणश्च स्वस्वामिसम्बन्धकारणत्वे, विवेकात् कर्मक्षये स्वस्वामिभावसम्बन्धाभावात् मुक्तिः। अनित्यस्य सादित्वेन नानादितापरिहारः, नित्यस्य पुनरस्तीति अनादिरित्युक्तम् ॥ ६७ ॥

---

तदेतत् मतं द्रढ़यितुं सूत्रमवतारयति—कार्य्यत्वादिति। न दृष्टः कर्त्ता यस्य तस्य चित्यङ्कुरादेः, उद्भूतिः,—उत्पत्तिः तस्यामिव, समानत्वं चेतनकर्त्तृभावस्य, चित्यङ्कुरादौ हि न चेतनः कर्त्ता अस्ति अनुपलब्धेः, तथा तन्मात्रेष्वपि ज्ञेयम् इति सूत्रार्थः ॥ ६५ ॥

नाहङ्कारस्य मूलकारणत्वं, किन्तु प्रकृतेरेव, इति व्यवस्थापयितुं सूत्रमवतारयति—अहङ्कारस्येति ॥ ६६ ॥

प्रकृतिपुरुषयोः सृष्टिप्रयोजकसम्बन्धविशेषं निरूपयितुं सूत्रमवतारयति—स्वीया इति। नित्यस्य पुनः अनादिता अस्त्येव इत्याह—नित्यस्येति ॥ ६७ ॥

मतान्तरमाह,—

**अविवेकनिमित्तको वा पञ्चशिखः ॥ ६८ ॥**

स्वस्वामिभावः इत्यनुवर्त्तते ॥ ६८ ॥

एकदेशिमतमाह,—

**लिङ्गशरीरनिमित्तक इति सनन्दनाचार्य्यः ॥ ६९ ॥**

लयनात् लिङ्गम् इति सूक्ष्मम् आतिवाहिकशरीरम् । यावत् स्थूलशरीरे सूक्ष्मशरीरस्य गमनमस्ति, तावत् स्वस्वामिसम्बन्धात् बद्धः इत्युच्यते ॥ ६९ ॥

स्वमतमाह,—

**यद्वा तद्वा, तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ॥ ७० ॥**

यद्वा तद्वा इति कर्मक्षयात् वा ज्ञानात् वा अन्यतः वा इति,

अत्रैव विषये पञ्चशिखमतं प्रतिपादयितुं सूत्रमवतारयति—मतान्तरमिति । अविवेकनिमित्तकः इति बहुव्रीहिः । स्वस्वामिभाव इति विशेष्यपदं सूत्रे अध्याहार्य्यम् ॥ ६८ ॥

अत्रैव सनन्दनाचार्य्यमतमवतारयति—एकदेशिमतमिति । लिङ्गशब्दस्य व्युत्पत्तिमाह, लयनादिति ।—लयनमत्र पुनराविर्भावरहिता अव्यक्तावस्था इति ज्ञेयम् । आतिवाहिकमिति लिङ्गशरीरस्यैव नामान्तरं—"तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम् । केवलं तन्मनुष्याणां नान्येषान्तु कदाचन ॥" इति स्मृत्युक्तमातिवाहिकं शरीरं पुनरन्यदेव, प्रकृते तु न तस्य ग्रहणं, "केवलं तन्मनुष्याणाम्" इत्युक्तेः । अतिशयेन आत्मानं वाहयति संसारबन्धम् इति व्युत्पत्त्या आतिवाहिकपदं स्वस्वामिभावसम्बन्धपरं, तत्सम्बन्धित्वेन सूक्ष्मशरीरमपि आतिवाहिकपदेन प्रतिपाद्यते इति न काऽप्यनुपपत्तिः । तथा च, यावत् स्थूलशरीरे सूक्ष्मशरीरं वर्त्तते, तावदेव प्रकृतिपुरुषयोः स्वस्वामिभावसम्बन्धः इत्यर्थः ॥ ६९ ॥

स्वमतिसूत्रमवतारयति—स्वमतमिति । यद्वा तद्वा इति ।—पञ्चशिखाचार्य्यस्य

स्वस्वामिसम्बन्धोच्छित्त्या संसारोच्छित्तिः पुरुषार्थः । तदुच्छित्तिः पुरुषार्थः इति षष्ठाऽध्यायपरिसमाप्तौ ॥ ७० ॥

एष सत्कार्य्यसिद्धान्तः पूर्वमेव निरूपितः ।
तन्त्रतः प्रतिपाद्यत्वान्न हि स्यात् पुनरुक्तता ॥
वृत्तिः कृताऽनिरुद्धेन साङ्ख्यसूत्रस्य धीमता ।
मूढसत्त्वविवेकाय चात्मनश्च विमुक्तये ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तौ षष्ठोऽध्यायः ।

---

वा सनन्दनाचार्य्यस्य वा मतं यथा तथा वा भवतु. नात्र प्रयोजनाभावात् तदयुक्तायुक्तत्वपरीक्षाऽस्माभिरस्ति, मतद्वयेऽपि स्वस्वामिभावसम्बन्धोच्छित्त्या एव संसारोच्छित्तिः सम्पद्यते इत्ययमर्थः सिद्ध्यत्येव इति टीकाभिप्रायो वेदितव्यः ॥ ७० ॥

वृत्तेर्व्याख्याऽनिरुद्धस्य कृता शास्त्रानुसारतः ।
विघ्नप्रमथनाथेन सर्वदाऽस्तु सतां मुदे ॥

इति कापिलसाङ्ख्यप्रवचनसूत्रवृत्तिटीकायाम् प्रमथाऽऽख्यायां षष्ठोऽध्यायः ।

